नोऽभूवन्[1]। ते तेनैव परिपाचिता अभूवन्ननुत्तरायां सम्यक्संबोधौ तैश्च ततः पश्चाद्बहूनि बुद्धकोटीनयुतशतसहस्राणि[2] दृष्टानि सत्कृतानि च। सर्वे च ते ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धाः पश्चिमकश्च तेषां दीपंकरो ऽभूत्तथागतो ऽर्हन्सम्यक्संबुद्धः॥

तेषां चाष्टानामन्तेवासिशतानामेको[3] बोधिसत्त्वो ऽधिमात्रं लाभगुरुको ऽभूत्सत्कार-

5 गुरुको ज्ञातिगुरुको[4] यशस्कामस्तस्योद्दिष्टोद्दिष्टानि पदव्यञ्जनान्यन्तर्धीयन्ते न संतिष्ठन्ते स्म। तस्य यशस्काम इत्येव संज्ञाभूत्। तेनापि तेन कुशलमूलेन बहूनि[5] बुद्धकोटीनयुत[6]-शतसहस्राण्यारागितान्यभूवन्[7]। आरागयित्वा[8] च सत्कृतानि गुरुकृतानि मानितानि पूजितान्यर्चितान्यपचायितानि। स्यात्खलु पुनस्ते ऽजित काङ्क्षा वा विमतिर्वा विचिकित्सा वा। अन्यः स तेन कालेन तेन समयेन वरप्रभो नाम बोधिसत्त्वो महासत्त्वो ऽभूद्धर्मभाणकः।

10 न खलु पुनरेवं द्रष्टव्यं। तत्कस्य हेतोः। अहं स तेन कालेन तेन समयेन वरप्रभो नाम बोधिसत्त्वो महासत्त्वो ऽभूद्धर्मभाणकः। यश्चासौ यशस्कामो नाम बोधिसत्त्वो ऽभूत्कौसीद्यप्राप्तः। त्वमेवाजित स[9] तेन कालेन तेन समयेन यशस्कामो नाम बोधिसत्त्वो ऽभूत्कौसीद्यप्राप्तः॥

इति ह्यजिताहमनेन पर्यायेणेदं भगवतः पूर्वनिमित्तं दृष्ट्वेवंरूपां रश्मिमुत्सृष्टामेव

15 परिमीमांसे यथा भगवानपि तं[10] सद्धर्मपुण्डरीकं धर्मपर्यायं सूत्रान्तं महावैपुल्यं बोधिसत्त्वाववादं[11] सर्वबुद्धपरिग्रहं[11] भाषितुकामः॥

---

1) का अभूवन् A. B.

2) न O. Ca. K. W. नि A. B.

3) शत left out in B. Cb.

4) त्र A. त B. ति Cb. K. W. The whole word left out in O., but cp. st. 90.

5) बहु K. W.

6) All but O. नियुत.

7) आराधिता° O.

8) आरागय Cb. K. W. आराध्य O.

9) Left out in Ca. K.

10) इदं B.

11) Left out in Ca. K. W. सत्त्वोत्पादं O.

अथ खलु मञ्जुश्रीः कुमारभूत एतमेवार्थं भूयस्या मात्रया प्रदर्शयमानास्तस्यां वेलायामिमा गाथा अभाषत ॥

अतीतमध्वानमनुस्मरामि अचिन्तिये[1] अपरिमितस्मि[2] कल्पे ।
यदा जिनो आसि[3] प्रजान उत्तमश्चन्द्रस्य सूर्यस्य प्रदीप नाम ॥ ५७ ॥
सद्धर्म देशेति प्रजान नायको विनेति सत्त्वान अनन्तकोट्यः । 5
समादपेति[4] बहुबोधिसत्त्वानचिन्तियानुत्तमि[1] बुद्धज्ञाने ॥ ५८ ॥
ये चाष्ट पुत्रास्तद तस्य आसन्कुमारभूतस्य विनायकस्य ।
दृष्ट्वा च तं प्रव्रजितं महामुनिं जहित्व कामाँल्लघु[5] सर्वि प्राव्रजन् ॥ ५९ ॥
धर्मं च सो भाषति लोकनाथो अनन्तनिर्देशवरं ति सूत्रम् ।
नामेन वैपुल्यमिदं प्रवुच्यति[6] प्रकाशयी प्राणिसहस्रकोटिनाम्[7] ॥ ६० ॥ 10
समनन्तरं भाषिय सो विनायकः पर्यङ्क बन्धित्व तदास्मि[8] तस्मिन् ।
अनन्तनिर्देशवरं समाधिं धर्मासनस्थो मुनिश्रेष्ठ ध्यायी ॥ ६१ ॥
दिव्यं च मान्दारववर्षमासीदघट्टिता दुन्दुभयश्च नेदुः ।
देवाश्च यक्षाश्च स्थितान्तरीक्षे कुर्वन्ति पूजां द्विपदोत्तमस्य ॥ ६२ ॥
सर्वं च क्षेत्रं[9] प्रचचाल तत्क्षणमाश्चर्यमभ्यद्भुतमासि तत्र । 15
रश्मिं च एकां प्रमुमोच नायको भ्रुवान्तरात्तामतिदर्शनीयां ॥ ६३ ॥

---

1) अचिन्तिके O. अचिन्तये the rest.
2) तस्मिं Ca.
3) आसीत् A.
4) All पेती.
5) कामां लघु A. K. W. काम B.
6) MSS. प्रबुध्यति and प्रबुध्यते.
7) कोट्यः B.
8) स्मिं A. Cb.
9) सर्वे च क्षेत्राः B. Ca. K. W.

पूर्वा च गत्वा दिश सा हि रश्मिर् ष्टादशक्षेत्रसहस्रपूर्णाः ।
प्रभासयं[1] भासति सर्वलोकं दर्शेति सत्त्वान च्युतोपपादं ॥ ६४ ॥

रत्नामया क्षेत्र तथात्र केचिद्वैडूर्यनिर्भास तथैव केचित् ।
दृश्यन्ति चित्रा अतिदर्शनीया रश्मिप्रभासेन[2] विनायकस्य ॥ ६५ ॥

5 देवा मनुष्यास्तथ नागयक्षा गन्धर्व तत्राप्सर किंनराश्च ।
ये चाभियुक्ताः सुगतस्य पूजया दृश्यन्ति पूजेन्ति च लोकधातुषु ॥ ६६ ॥

बुद्धाश्च दृश्यन्ति स्वयं स्वयंभुवः सुवर्णयूपा इव दर्शनीयाः ।
वैडूर्यमध्ये व[3] सुवर्णबिम्बं पर्षाय मध्ये प्रवदन्ति धर्मम् ॥ ६७ ॥

तहि[4] श्रावकाणां गणना न विद्यते ते चाप्रमाणाः सुगतस्य श्रावकाः ।
10 एकैकक्षेत्रस्मि[5] विनायकानां रश्मिप्रभा दर्शयते हि सर्वान् ॥ ६८ ॥

वीर्येरुपेताश्च अखण्डशीला अच्छिद्रशीला मणिरत्नसादृशाः ।
दृश्यन्ति पुत्रा नरनायकानां विहरन्ति ये पर्वतकन्दरेषु ॥ ६९ ॥

सर्वस्वदानानि परित्यजन्तः क्षान्तीबला ध्यानरताश्च धीराः ।
बहुबोधिसत्त्वा यथ गङ्गवालिकाः सर्वे ऽपि[6] दृश्यन्ति तया हि रश्म्या ॥ ७० ॥

15 अनिञ्जमानाश्च अवेधमानाः[7] क्षान्तौ स्थिता ध्यानरताः समाहिताः ।
दृश्यन्ति पुत्राः सुगतस्य औरसा ध्यानेन ते प्रस्थित अग्रबोधिम् ॥ ७१ ॥

भूतं पदं शान्तमनास्रवं च प्रजानमानाश्च प्रकाशयन्ति ।
देशेन्ति धर्मं बहुलोकधातुषु सुगतानुभावादियमीदृशी क्रिया ॥ ७२ ॥

---

1) प्रकाशयं B. प्रभासयो O.
2) वे A.
3) च Cb. K. W. व A. B.
4) त B. Ca. K. W. O. ते A. Cb.
5) स्मिं K. W.
6) हि B. Cb. K. W. पि A.
7) ता A.

दृष्ट्वा च ता पर्ष चतस्र तायिनश्चन्द्रार्कदीपस्य इमं प्रभावम्।
हर्षस्थिताः सर्वि भविंसु तत्क्षणमन्योन्य पृच्छन्ति कथं नु एतत्॥ ७३॥
अचिराच्च सो नरमरुयक्षपूजितः समाधितो व्युत्थित लोकनायकः।
वरप्रभं पुत्र तदाध्यभाषत यो बोधिसत्त्वो विदु धर्मभाणकः॥ ७४॥
लोकस्य चक्षुश्च गतिश्च त्वं विदुर्वैश्वासिको धर्मधरश्च मह्यम्।
त्वं ह्यत्र साक्षी मम धर्मकोशे यथाहु भाषिष्यि[1] हिताय प्राणिनाम्॥ ७५॥
संस्थापयित्वा बहुबोधिसत्त्वान्हर्षित्व संवर्णिय संस्तवित्वा।
प्रभाषते तज्जिन[2] अग्रधर्मान्परिपूर्ण सो अन्तरकल्पषष्टिम्॥ ७६॥
यं चैव सो भाषति लोकनाथो[3] एकासनस्थः प्रवराग्रधर्मम्।
तं सर्वमाधारयि[4] सो जिनात्मजो वरप्रभो यो अभु धर्मभाणकः॥ ७७॥
स चो[5] जिनो भाषिय अग्रधर्मं प्रहर्षयित्वा जनतामनेकाम्।
तस्मिंश्च दिवसे वदते स नायकः पुरतो हि लोकस्य सदेवकस्य॥ ७८॥
प्रकाशिता मे इय धर्मनेत्री आचक्षितो धर्मस्वभाव[6] यादृशः।
निर्वाणकालो मम अद्य भिक्षवो रात्रीय यामस्मि[7] ह मध्यमस्मिन्॥ ७९॥
भवथाप्रमत्ता अधिमुक्तिसारा अभियुज्यथा मह्य इमस्मि शासने।
सुदुर्लभा भोन्ति जिना महर्षयः कल्पान कोटीनयुतान अत्ययात्[8]॥ ८०॥

1) ष्ये A. ष्यि Ca. K. W. In O. left out यथाहु; further it has भाषिष्यद्धि य हित सर्वप्रा°.

2) प्रकाशयी सो जिन O.

3) थ Ca. थः A. थो B. Cb. K. W. नायक O.

4) धार A. B. राध Ca. Cb. K. W.

5) सोच्च Ca. Cb सो च A. B. W. सो चज्जिनो K. स च O.

6) व left out in A.

7) म left out in A. स्मि ह मध्यम left out in K. W.

8) अभ्य B. K. अत्यये O.

संतापजाता बहुबुद्धपुत्रा दुःखेन चोग्रेण समर्पिताभवन् ।
श्रुत्वा न[1] घोषं द्विपदोत्तमस्य निर्वाणशब्दं अतिक्षिप्रमेतत् ॥ ८१ ॥
आश्वासयित्वा च नरेन्द्रराजा या[2] प्राणकोट्यो बहवो अचिन्तियाः[3] ।
मा भायथ[4] भिक्षव निर्वृते मयि भविष्यथ[5] बुद्ध ममान्तरेण ॥ ८२ ॥
5 श्रीगर्भ एषो विदु बोधिसत्त्वो गतिंगतो ज्ञानि[6] अनास्रवस्मिन्[7] ।
स्पृशिष्यते उत्तममग्रबोधिं विमलाग्रनेत्रो ति जिनो भविष्यति[8] ॥ ८३ ॥
तामेव रात्रिं तद यामि मध्यमे परिनिर्वृतो हेतुक्षये व दीपः ।
शरीर[9] वैस्तारिकु[10] तस्य चाभूत्स्तूपान कोटीनयुता अनन्तकां[11] ॥ ८४ ॥
भिक्षू बहू[12] तथ पि च भिक्षुणीयो ये प्रस्थिता उत्तममग्रबोधिम् ।
10 अनल्पकास्ते यथ गङ्गवालिका अभियुक्त तस्य[13] सुगतस्य शासने ॥ ८५ ॥
यश्चापि भिक्षुस्तद धर्मभाणको वरप्रभो येन स धर्म[14] धारितः ।
अशीति सो अन्तरकल्पपूर्णा तस्मि[15] शासने भाषति अग्रधर्मान् ॥ ८६ ॥
अष्टाशतं तस्य अभूषि शिष्याः परिपाचिता ये तद तेन सर्वे[16] ।

1) O. स्मि; the rest च for न.
2) ये Ca. Cb ; the rest ता.
3) All but O. न्तियाम्.
4) All but O. था.
5) O. था, the rest ते.
6) न A. Cb. K. W. ति B. नि Ca.
7) All but ct अवे ऽस्मिन्.
8) O. जिनुनाम भेष्यति.
9) रु B.
10) का B. O.
11) All but O. का:.
12) भिक्षूश्च तत्र A. K.
13) पि च in Cb. only
14) सद्धर्म A. K.
15) स्तस्मि A. न स्मि B. तद Cb. तस्मि K. O. तदि W.
16) O. सर्वि तेन; the others नेन for तेन.

दृष्टा[1] च तेभिर्बकुबुद्धकोट्यः सत्कारु[2] तेषां च कृतो मकर्षिणाम् ॥ ८७ ॥
चर्यां चरित्वा तद् ग्रानुलोमिकों बुद्धा ग्रभूवन्बकुलोकधातुषु ।
परस्परं ते च ग्रनन्तरेण ग्रन्योन्य व्याकर्षु तदाग्रबोधये ॥ ८८ ॥
तेषां च बुद्धान परंपरेण दीपंकरः पश्चिमको ग्रभूषि ।
देवातिदेवो ऋषिसंघपूजितो विनीतवान्प्राणिस[3]कस्रकोट्यः ॥ ८९ ॥ 5
पश्चासि तस्य सुगतात्मजस्य वरप्रभस्य तद् धर्म भाषतः ।
शिष्यः कुसीदश्च स लोलुपात्मा लाभं च ज्ञातं[4] च गवेषमाणः ॥ ९० ॥
यशोऽर्थिकश्चाप्यतिमात्र ग्रासीत्कुलाकुलं च प्रतिपन्न[5]मासीत् ।
उद्देशस्वाध्यायु तथास्य सर्वो न तिष्ठते भाषितु तस्मि[6] काले ॥ ९१ ॥
नामं च तस्य इममेवमासीद्यशकामनाम्ना दिशतासु विश्रुतः । 10
स चापि तेना[7] कुशलेन कर्मणा कल्माष[8] भूतेनभिसंस्कृतेन ॥ ९२ ॥
ग्रारागयी[9] बुद्धसकस्रकोट्यः पूजां च तेषां विपुलामकार्षीत् ।
चीर्णा च चर्या वर ग्रानुलोमिको[10] दृष्टश्च[11] बुद्धो ग्रपु शाक्यसिंहः ॥ ९३ ॥
ग्रयं च सो पश्चिमको भविष्यति ग्रनुत्तरां लप्स्यति चाग्रबोधिम् ।
मैत्रेयगोत्रो भगवान्भविष्यति विनेष्यति[12] प्राणसकस्रकोट्यः ॥ ९४ ॥ 15

---

1) All दृष्ट्वा.
2) O. रं.
3) O. प्राण, preferable.
4) O. ज्ञात्रं.
5) O. °चोर्णमासि.
6) तस्मिं A. K. W.
7) तेनो A. तेन B. Ca. O. तेना Cb. K. W
8) कर्माय B.
9) धपी O.
10) किं A. की B. Ca. Cb. कां K. W. का O.
11) ष्टं च B. ष्टाश्च A. W. ष्टो च O.
12) O. ते, the others तीं.

कौसीद्यप्राप्तस्तद यो बभूव परिनिर्वृतस्य सुगतस्य शासने ।
त्वमेव सो तादृशको बभूव अहं च आसीत्तद धर्मभाणकः ॥ ९५ ॥
इमेन[1] हं कारणहेतुनाद्य दृष्ट्वा निमित्तं इदमेवरूपम् ।
ज्ञानस्य तस्य प्रथितं निमित्तं प्रथमं मया तत्र वदामि दृष्टम्[2] ॥ ९६ ॥
5 ध्रुवं जिनेन्द्रो ऽपि समन्तचक्षुः शाक्याधिराजः परमार्थदर्शी ।
तमेव यं[3] इच्छति भाषणाय पर्यायमग्रं[4] तद यं मया श्रुतम् ॥ ९७ ॥
तदेव[5] परिपूर्णनिमित्तमद्य उपायकौशल्य विनायकानाम् ।
संस्थापनं कुर्वति शाक्यसिंहो भाषिष्यते धर्मस्वभावमुद्राम् ॥ ९८ ॥
प्रयता सुचित्ता भवथा कृताञ्जली भाषिष्यते[6] लोकहितानुकम्पी ।
10 वर्षिष्यते धर्ममनन्तवर्षं तर्पिष्यते ये स्थित बोधिहेतोः ॥ ९९ ॥
येषां च संदेहगतीह काचिद्ये संशया[7] या विचिकित्स काचित् ।
व्यपनेष्यते ता विदुरात्मजानां ये बोधिसत्त्वा इह बोधिप्रस्थिताः[8] ॥ १०० ॥

इत्यार्यसद्धर्मपुण्डरीके[9] धर्मपर्याये निदानपरिवर्तो नाम प्रथमः ॥

---

1) तर्हि A. left out in K. W.

2) दृष्टन् K. W.

3) O. च.

4) पर्यायां A.

5) मे A. Cb. K. दे B. Ca. W.

6) ष्यति O.

7) All but O. संशयाका.

8) Thus O.; the rest तां.

9) B. adds इति.

10) इति in A. K. W. आर्य in B. Cb. The title in O. is सद्धर्मपुण्डरीके वरप्रवरमहारत्नवैतुल्यसूत्रे.

# II.

अथ खलु भगवान्स्मृतिमान्संप्रज्ञानस्ततः[1] समाधेर्व्युत्थितो व्युत्थायायुष्मन्तं शा-
रिपुत्रमामन्त्रयते स्म[2]। गम्भीरं शारिपुत्र दुर्दृशं दुरनुबोधं बुद्धज्ञानं तथागतैरर्हद्भिः सम्य-
क्संबुद्धैः प्रतिबुद्धं दुर्विज्ञेयं सर्वश्रावकप्रत्येकबुद्धैः। तत्कस्य हेतोः। बहुबुद्धकोटीन[3]-
युतशतसहस्रपर्युपासिताविनो हि शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धा बहुबुद्धको-
टीनयुत[4]शतसहस्रचीर्णचरिताविनो ऽनुत्तरायां सम्यक्संबोधौ दूरानुगताः कृतवीर्या आ- 5
श्चर्याद्भुतधर्मसमन्वागता दुर्विज्ञेयधर्मसमन्वागता दुर्विज्ञेयधर्मानु[5]ज्ञाताविनः॥

दुर्विज्ञेयं शारिपुत्र संधाभाष्यं तथागतानामर्हतां सम्यक्संबुद्धानाम्। तत्कस्य
हेतोः। स्वप्रत्ययान्धर्मान्प्रकाशयन्ति विविधोपायकौशल्यज्ञानदर्शनहेतुकारणनिर्देशना[6]-
रम्बणनिरुक्तिप्र[7]ज्ञप्तिभिस्तैस्तैरुपायकौशल्यैस्तस्मिंस्तस्मिँल्लग्नान्सत्त्वान्प्रमोचयितुम्।
महोपाय[8]कौशल्यज्ञानदर्शनपरमपारमिताप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः। 10
असङ्गाप्रतिहतज्ञानदर्शनबलवैशारद्यावेणिकेन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधि[9]समाप-
त्त्यद्भुतधर्मसमन्वागता विविधधर्मसंप्रकाशकाः[10]। महाश्चर्याद्भुतप्राप्ताः शारिपुत्र[11] तथागता

---

1) संप्रज्ञानस्ततः A. B. Ca. Cb. O. K. संप्रज्ञातवान् ततः W.
2) यामास A. K. W. O.
3) नि A. Ca. Cb. W.
4) All but B. O. ति.
5) नु left out in B. Ca. Cb.
6) निर्देशन left out in B. Ca. Cb.
7) वि Cb. K.
8) K. W. add ज्ञान before कौशल्य.
9) समाधि left out in K. O.
10) शयका B.
11) Cb. adds ते.

अर्हन्तः सम्यक्संबुद्धाः। अलं शारिपुत्र एतावदेव भाषितं भवतु परमाश्चर्यप्राप्ताः शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धाः। तथागत एव शारिपुत्र तथागतस्य धर्मं देशयेद्यान्धर्मा-स्तथागतो[1] जानाति। सर्वधर्मानपि शारिपुत्र तथागत एव देशयति। सर्वधर्मानपि तथागत एव[2] जानाति। ये च ते धर्मा यथा च ते धर्मा यादृशाश्च ते धर्मा यल्लक्षणाश्च ते धर्मा यत्स्व-
5 भावाश्च ते धर्माः। ये च यथा च यादृशाश्च यल्लक्षणाश्च यत्स्वभावाश्च ते धर्मा इति। तेषु धर्मेषु तथागत एव प्रत्यक्षो ऽपरोक्षः[3]॥

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत॥

अप्रमेया[4] महावीरा लोके समरुमानुषे।
10 न शक्यं सर्वशो ज्ञातुं सर्वसत्त्वैर्विनायकाः॥ १॥
बला विमोक्षाश्च ये[5] तेषां वैशारद्याश्च यादृशाः।
यादृशा बुद्धधर्माश्च न शक्यं ज्ञातु[6] केनचित्॥ २॥
पूर्वे[7] निषेविता चर्या बुद्धकोटीन[8] अन्तिके।
गम्भीरा[9] चैव सूक्ष्मा च दुर्विज्ञेया सुदुर्दृशा॥ ३॥
15 तस्यां चीर्णाय चर्यायां कल्पकोट्यो अचिन्तिया।
फलं मे बोधिमण्डस्मिन्[10] दृष्टं यादृशकं हि तत्॥ ४॥

---

1) O. त एव जानीते.
2) एवं K. W.
3) From तेषु till °रोक्षः in O. K. W. only.
4) य Ca.
5) ये left out in A.
6) ज्ञातुं A.
7) पूर्व्र O. K. पूर्व B. Ca. Cb.
8) म° Cb. K. W. मा° O., preferable.
9) रं A.
10) All but O. एडर्शस्मि.

अहं च तत्प्रजानामि ये चान्ये लोकनायकाः ।
यथा यथादृशं चापि लक्षणं चास्य यादृशम् ॥ ५ ॥
न तद्दर्शयितुं शक्यं व्याहारो ऽस्य न विद्यते ।
नाप्यसौ तादृशः कश्चित्सत्त्वो[1] लोके ऽस्मि[2] विद्यते ॥ ६ ॥
यस्य[3] तं देशयेद्धर्मं देशितं चापि[4] जानियात् । 5
अन्यत्र बोधिसत्त्वेभ्यो अधिमुक्तीय[5] ये स्थिताः ॥ ७ ॥
ये चापि ते लोकविदुष्य श्रावकाः कृताधिकाराः सुगतानुवर्णिताः ।
क्षीणास्रवा अन्तिमदेहधारिणो न तेष विषयो ऽस्ति जिनान ज्ञाने ॥ ८ ॥
सचेयं सर्वा इय लोकधातु[6] पूर्णा[7] भवेच्छारिसुतोपमानाम् ।
एकीभविवानुविचिन्तयेयुः सुगतस्य ज्ञानं न हि[8] शक्य जानितुम् ॥ ९ ॥ 10
सचे हि त्वंसादृशकेहि पण्डितैः पूर्णा भवेयुर्दश पिद्दिशायो[9] ।
ये चापि मह्यं इमि श्रावका ऽन्ये तेषां पि पूर्णा भवि एवमेव ॥ १० ॥
एकीभविवान च ते ऽद्य सर्वे विचिन्तयेयुः सुगतस्य ज्ञानम् ।
न शक्त[10] सर्वे सहिता पि ज्ञातुं यथाप्रमेयं मम बुद्धज्ञानम् ॥ ११ ॥

1) सर्वो A. B. Ca. W. सर्वे Cb. सत्त्वो K.
2) स्मिं A. K. W. स्मि B. ऽस्मि Cb. Probably to r. लोकस्मि.
3) All but K. W. यस्य.
4) वा B. Ca.
5) मुक्तो हि in all but O.
6) धातुं O., the rest धातुषु.
7) पूर्ण B. पूर्णो O.
8) तु A. ते O.
9) दिशासु सेषाः K. W.
10) All but O. शक्य.

प्रत्येकबुद्धान अनास्रवाणां तीक्ष्णेन्द्रियाणान्तिमदेहधारिणाम् ।
दिशो दश[1] सर्व भवेषु पूर्णा यथा नडानां वनवेणुनां वा ॥ १२ ॥
एकीभविलान विचिन्तयेयुर्ममाग्रधर्माण प्रदेशमात्रम् ।
कल्पान कोटीनयुताननन्तान तस्य भूतं परिजानि अर्थम् ॥ १३ ॥
5 नवयानसंप्रस्थित बोधिसत्त्वाः कृताधिकारा बहुबुद्धकोटिषु ।
सुविनिश्चितार्था बहुधर्मभाणकास्तेषां पि पूर्णा दशिमा दिशो भवेत् ॥ १४ ॥
नडान वेणून च नित्यकालम् अच्छिद्रपूर्णो भवि सर्वलोकः ।
एकीभविलान विचिन्तयेयुर्यो धर्म साक्षात्सुगतेन दृष्टः ॥ १५ ॥
अनुचिन्तयित्वा बहुकल्पकोट्यो गङ्गा यथा वालिक अप्रमेयाः ।
10 अनन्यचित्ताः[2] सुखमाय प्रज्ञया तेषां पि चास्मिन्[3]विषयो न विद्यते ॥ १६ ॥
अविवर्तिका ये भवि बोधिसत्त्वाः[4] अनल्पका यथरिव गङ्गवालिकाः[5] ।
अनन्यचित्ताश्च विचिन्तयेयुस्तेषां पि चास्मिन्[6]विषयो न विद्यते ॥ १७ ॥
गम्भीरधर्मा सुसूक्ष्मा पि बुद्धा अतर्किकाः सर्वि अनास्रवाश्च ।
अहं च जानामि कु[7] यादृशा कि ते ये वा जिना लोकि दशद्दिशासु ॥ १८ ॥
15 यं शारिपुत्र सुगतः प्रभाषते अधिमुक्तिसंपन्न भवाहि[8] तत्र ।
अनन्यथावादि जिनो महर्षी चिरेण पि[9] भाषति उत्तमार्थम् ॥ १९ ॥

---

1) MSS. दशः.
2) त्ताः K. W. त्ता A. B. Ca. Cb.
3) चात्र A. B. Ca. Cb. W. O. चास्मिं K.
4) This quarter is left out in B.
5) काः K. W. का A. B. Ca. Cb.
6) चास्मिं A. K.
7) कु A. कि K. W.
8) सु भवाहि O., the others °न्न गवेसि (a misread भवेहि).
9) All but O. पी.

आमन्त्रयामि इमि[1] सर्वश्रावकान्प्रत्येकबोधाय च ये ऽभिप्रस्थिताः ।
संस्थापिता[2] ये मम[3] निर्वृतोय[4] संमोचिता दुःखपरंपरातः[5] ॥ २० ॥
उपायकौशल्य ममेतदग्रं भाषामि धर्मं बहु येन लोके ।
तहिं तहिं लग्न प्रमोचयामि त्रीणी[6] च यानान्युपदर्शयामि ॥ २१ ॥

अथ खलु ये तत्र पर्षत्संनिपाते[7] महाश्रावका आज्ञातकौण्डिन्यप्रमुखा अर्हन्तः 5 क्षीणास्रवा द्वादशवशीभूतशतानि ये चान्ये श्रावकयानिका भिक्षुभिक्षुण्युपासकोपासिका ये च प्रत्येकबुद्धयानसंप्रस्थिताः तेषां सर्वेषामेतदभवत् । को नु हेतुः किं कारणं यद्भगवानधिमात्रमुपायकौशल्यं तथागतानां संवर्णयति । गम्भीरश्चायं मया[8] धर्मो ऽभिसंबुद्ध[9] इति संवर्णयति । दुर्विज्ञेयश्च सर्वश्रावकप्रत्येकबुद्धैरिति संवर्णयति । यथा[10] तावद्भगवता एकैव विमुक्तिराख्याता वयमपि बुद्धधर्माणां लाभिनो निर्वाणप्राप्ताः । अस्य च वयं[11] भगव- 10 तो भाषितस्यार्थं न जानीमः ॥

अथ खल्वायुष्माञ्छारिपुत्रस्तासां चतसृणां पर्षदां विचिकित्साकथंकथां विदित्वा चेतसैव चेतःपरिवितर्कमाज्ञाय[12] आत्मना च धर्मसंशयप्राप्तस्[13]तस्यां वेलायां भगवन्तमेतदवो-

---

1) इमि A. O. इम B. Cb. K. W. इमु Ca.
2) संप्रस्थिता A.
3) मयि Ca. K. मय O.
4) All but O. निर्वृती हि.
5) परांपरातः A. परंपरातः B. Cb. परंपरात् K. परंपरातः W. परंपराय O.
6) त्रीणि Cb. त्रयश्च O.
7) तत्र पर्षदि ये ते A. °पाते Cb. K. W. तस्यां परिषदि ये ते O.
8) In A. only, मे in O.; cp. p. 34, l. 4.
9) अभि left out in K. W.
10) यदा B. Ca. Cb. K. W. यथा A. यदिदानीं O.
11) Left out in K. W. O. has अतो वयमस्य.
12) ज्ञाय ता आ A.
13) प्ता in all MSS.

यत्। को भगवन्हेतुः कः प्रत्ययो यद्भगवानधिमात्रं पुनः पुनस्तथागतानामुपायकौशल्य-
ज्ञानदर्शन[1]धर्मदेशनां संवर्णयति। गम्भीरश्च मे धर्मो ऽभिसंबुद्ध इति। दुर्विज्ञेयं च संधाभा-
ष्यमिति पुनः पुनः संवर्णयति। न च मे भगवतो ऽन्तिकादेवंरूपो धर्मपर्यायः श्रुतपूर्वः।
इमाश्च[2] भगवंश्चतस्रः पर्षदो विचिकित्साकथंकथाप्राप्तास्तत्साधु भगवान्निर्दिशतु यत्संधाय[3]
5 तथागतो गम्भीरस्य तथागतधर्मस्य पुनः पुनः संवर्णनां करोति॥

अथ खल्वायुष्माञ्शारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत॥

चिरस्याद्य नरादित्य[4] ईदृशीं कुरुते कथाम्।
बला विमोक्षा ध्यानाश्च अप्रमेया मि स्पर्शिताः॥ २२॥
बोधिमण्डं च कीर्तेसि पृच्छकास्ते न विद्यते।
10 संधाभाष्यं च कीर्तेसि न च त्वां कश्चि[5] पृच्छति॥ २३॥
अपृच्छितो व्याकरसि[6] चर्यां[7] वर्णेसि चात्मनः।
ज्ञानाधिगमं[8] कीर्तेसि गम्भीरं च प्रभाषसे॥ २४॥
अद्येमे[9] संशयप्राप्ता वशीभूता अनास्रवाः[10]।
निर्वाणं प्रस्थिता ये च किमेतद्भाषते जिनः॥ २५

1) दर्शन in Cb. दर्शनं in O.; omitted in the rest
2) इमां A B. Ca. Cb. इमाश्च K. W.
3) यत्सद्या A. Ca. K. W. यत्संधाय B. O. यत्संध्याभाष Cb.
4) O. दित्यो.
5) कश्चित् B. Cb. K. W.
6) रं O. A. B. K. W. रे Cb.
7) All but O. चर्या.
8) मं A, K. W. म B. Cb. मा Ca.
9) All अद्य मे.
10) म K. W. ह्य O. The *m* and *hi* to avoid hiatus.

प्रत्येकबोधि[1] प्रार्थेन्ति[2] भिक्षुण्यो भिक्षवस्तथा।
देवा नागाश्च यक्षाश्च गन्धर्वाश्च महोरगाः ॥ २६ ॥
समालपन्तो ह्यन्योन्यं प्रेक्षन्ते द्विपदोत्तमम्[3]।
कथंकथी[4] विचिन्तेन्ता[5][6] व्याकुरुष्व महामुने ॥ २७ ॥
यावन्तः श्रावकाः सन्ति सुगतस्येह सर्वशः। 5
अहमत्र पारमीप्राप्तो[7] निर्दिष्टः परमर्षिणा ॥ २८ ॥
ममापि संशयो ह्यत्र स्वके स्थाने नरोत्तम।
किं निष्ठा मम निर्वाणे अथ चर्या मि दर्शिता[8] ॥ २९ ॥
प्रमुञ्च घोषं वरदुन्दुभिस्वरा[9] उदाहरस्व यथ एष[10] धर्मः।
इमे स्थिता पुत्र जिनस्य औरसा व्यवलोकयन्तश्च कृताञ्जली जिनम् ॥ ३० ॥ 10
देवाश्च नागाश्च सयक्षराक्षसाः कोटीसहस्रा यथ गङ्गवालिकाः।
ये चापि प्रार्थेन्ति समग्रबोधिं सहस्रशीतिः परिपूर्ण ये स्थिताः ॥ ३१ ॥
राजान ये महिपति[11] चक्रवर्तिनो ये आगताः क्षेत्रसहस्रकोटिभिः।
कृताञ्जली सर्वि सगौरवाः स्थिताः कथं नु चर्या परिपूरयेम[12] ॥ ३२ ॥

---

1) धिं A. K.
2) All but O. प्रार्थेति.
3) O. प्रेक्षन्ति, the rest प्रेक्षयन्ते.
4) था B. Cb. K. W.
5) च for वि A. K. W.
6) न्ति O. न्तां Cb. न्ता the rest.
7) All but O. मिता.
8) ताः A. B. Ca. Cb. ता K. W. O.
9) रा A. K. W. राः B. रो Cb. र O.
10) एक A. K. W.
11) ही W.
12) इति added in A. K. W. येत् B.

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् । अलं शारिपुत्र । किमनेनार्थेन भाषितेन । तत्कस्य हेतोः । उत्त्रसिष्यति[1] शारिपुत्रायं सदेवको लोको ऽस्मिन्नर्थे व्याक्रियमाणे ॥

द्वैतीयकमप्यायुष्माञ्छारिपुत्रो[2] भगवन्तमध्येषते स्म । भाषतां भगवान्भाषतां[3] सुगत[4] एतमेवार्थम् । तत्कस्य हेतोः । सन्ति भगवंस्तस्यां पर्षदि बहूनि प्राणिशतानि[5] बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनियुतशतसहस्राणि[6] पूर्वबुद्धदर्शाविनि[7] प्रज्ञावन्ति[8] यानि[9] भगवतो भाषितं श्रद्धास्यन्ति प्रतीयिष्यन्त्युद्ग्रहीष्यन्ति[10] ॥

अथ खल्वायुष्माञ्छारिपुत्रो भगवन्तमनया गाथयाध्यभाषत[11] ॥

विस्पष्टु भाषस्व जिनान उत्तमा[12] सन्तीह पर्षाय सहस्र प्राणिनाम् ।
श्राद्धाः[13] प्रसन्नाः सुगते सगौरवा ज्ञास्यन्ति ये धर्ममुदाहृतं ते ॥ ३३ ॥

अथ खलु भगवान्द्वैतीयकमप्यायुष्मन्तं[14] शारिपुत्रमेतदवोचत् । अलं शारिपुत्रानेना

---

1) उत्त्रस्यति A. K. W. संत्राससमापत्स्यतीह O.
2) द्वि for द्वै B. Ca. द्विरप्य O.
3) षंतु B. षतु O.
4) All गतेन or गतेत. — एव om. in O.
5) O. प्राण.
6) नि in all but Cb. O.
7) वंति B. विनः A. K W. O. वीनि Cb.
8) वन्तः A. K. W.
9) ये च A. K. W.
10) प्रतीयिष्यन्ति left out in B. पत्तीयिष्य° O.
11) ध्य A. K. प्य B. च Cb. न्य W. या भा° O.
12) नरेन्द्रराजा K. W. जिनेन्द्रराजा O.
13) MSS. श्रद्धा and श्रद्धाः.
14) द्वि for द्वै B. द्विरप्य O.

र्थेन प्रकाशितेनोत्त्रसिष्यति शारिपुत्रायं सदेवको[1] लोको ऽस्मिन्नर्थे व्याक्रियमाणो[2] ऽभिमानप्राप्ताश्च भिक्षवो महाप्रपातं प्रपतिष्यन्ति ॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत ॥

अलं हि धर्मेणिह भाषितेन सूक्ष्मं इदं ज्ञानमतर्किकं च ।
अभि[3]मानप्राप्ता बहु सन्ति बाला निर्दिष्टधर्मे[4]स्मि[5] क्षिपे[6] अज्ञानकाः ॥ ३४ ॥ 5

त्रैतीयक[7]मप्यायुष्मान्शारिपुत्रो भगवन्तम[8]ध्येषते स्म । भाषतां[9] भगवान्भाषतां[9] सुगत एतमे[10]वार्थम् । मादृ[11]शानां भगवन्निह पर्षदि बहूनि प्राणिशतानि संविद्यन्ते ऽन्यानि च भगवन्बहूनि प्राणिशतानि[12] बहूनि प्राणिसहस्राणि बहूनि प्राणिशतसहस्राणि बहूनि प्राणिकोटीनयुत[13]शतसहस्राणि यानि भगवता पूर्वभवेषु परिपाचितानि तानि भगवतः भाषितं श्रद्धास्यन्ति प्रतीपि[14]ष्यन्त्युद्ग्रहीष्यन्ति । तेषां तद्भविष्यति दीर्घरात्रमर्थाय 10 हिताय सुखायेति ॥

---

1) को in Cb. O. only.
2) ऽभि B. Ca. Cb. ऽधि A. K. W. O.
3) ऽभि B. Ca. Cb. K. W. ऽधि A.
4) र्मे A. Cb. K. W.
5) स्मिं A. K. W.
6) पेत् Ca. पत्स्य O.
7) तृतो B. K.
8) A. K. W. add भा.
9) तु B. K. K. O.
10) All गते. एव om. in O.
11) मत्सद् O. याद् B. Cb. K.
12) प्राण O. throughout.
13) All but Cb. नियत, which is om. in O.
14) पत्तीयि O.

अथ खल्वायुष्माञ्छारिपुत्रस्तस्यां वेलायामिमा गाथा अभाषत ॥

भाषस्व धर्मं द्विपदानमुत्तमा(1) अहं त्वमध्येषमि ज्येष्ठपुत्रः।
सन्तीह प्राणीन(2) सहस्रकोट्यो ये श्रद्दधास्यन्ति ते(3) धर्म भाषितं ॥ ३५ ॥
ये च त्वया पूर्वभवेषु नित्यं परिपाचिता सत्त्व सुदीर्घरात्रम्।
5 कृताञ्जली ते पि स्थितात्र सर्वे ये श्रद्दधास्यन्ति तवैत धर्मम्(4) ॥ ३६ ॥
अस्मादृशा द्वादशिमे(5) शताश्च ये चापि ते(6) प्रस्थित अग्रबोधये।
तान्पश्यमानः सुगतः प्रभाषतां(7) तेषां च कुर्ष परमं जनेतु ॥ ३७ ॥

अथ खलु भगवांस्त्रैतीयकमप्यायुष्मतः(8) शारिपुत्रस्याध्येषणां(9) विदित्वायुष्मन्तं शारिपुत्रमेतदवोचत्। यदिदानीं त्वं शारिपुत्र यावत्त्रैतीयकमपि तथागतमध्येषसे। एवमध्येषमाणं त्वां शारिपुत्र किं वदयामि। तेन हि शारिपुत्र शृणु साधु च सुष्ठु च मनसिकुरु ॥ भाषिष्ये ऽहं ते ॥

समनन्तरभाषिता चेयं भगवता वागथ खलु ततः पर्षद आभिमानिकानां(10) भिक्षूणां भिक्षुणीनामुपासकानामुपासिकानां पञ्चमात्राणि सहस्राण्युत्थायासनेभ्यो भगवतः पादौ शिरसाभिवन्दित्वा ततः पर्षदो ऽपक्रामन्ति(11) स्म। यथापीदमभिमानाकुशलमूलेनाप्राप्ते(12) (13) प्रा-

1) मं A.
2) भोः प्राण° O.
3) सु A. B. ते O. Cb. षु K. W.
4) ते धर्ममेतत् Cb. O.
5) येश्चताश्च A. ते ये शताश्च B मे शताश्च Cb. K. ये च ताश्च W. मे सहस्रा O.
6) मे A. स K.
7) तु B. K. O. W.
8) त्रिरप्य O.
9) All but O. णां.
10) धि A. अधि O.
11) A. B. W. add सं.
12) धि A. W. O. पि B.
13) मानिका अकु O. मानकु the rest.

प्रतंज्ञिनो ऽनधिगते ऽधिगतसंज्ञिनः। त[1] आत्मानं सव्रणां[2] ज्ञात्वा ततः पर्षदो ऽपक्रान्ताः। भगवांश्च तूष्णींभावेनाधिवासयति स्म[3]॥

अथ खलु भगवानायुष्मन्तं शारिपुत्रमामन्त्रयते स्म[4]। निष्पलावा[5] मे शारिपुत्र पर्षद्पगतफल्गुः श्रद्धासारे[6] प्रतिष्ठिता। साधु शारिपुत्रैतेषामाभिमानिकानामतो[7] ऽपक्रमणम्। तेन हि शारिपुत्र भाषिष्य एतमर्थम्। साधु भगवन्नित्यायुष्माञ्शारिपुत्रो भगवतः 5 प्रत्यश्रौषीत्॥

भगवानेतदवोचत्। कदाचित्कर्हिचिच्छारिपुत्र[8] तथागत एवंरूपां[9] धर्मदेशनां कथयति। तद्यथापि नाम शारिपुत्रोदुम्बरपुष्पं कदाचित्कर्हिचित्संदृश्यते[10] एवमेव शारिपुत्र तथागतो ऽपि कदाचित्कर्हिचिदेवंरूपां[10] धर्मदेशनां कथयति। श्रद्दधत[11] मे शारिपुत्र भूतवाद्यहमस्मि तथावाद्यहमस्म्यनन्यथावाद्यहमस्मि। दुर्बोध्यं शारिपुत्र तथागतस्य 10 संधाभाष्यम्। तत्कस्य हेतोः। नानानिरुक्तिनिर्देशाभिलापनिर्देशनैर्मया शारिपुत्र विविधैरुपायकौशल्यशतसहस्रैर्धर्मः[12] संप्रकाशितः। अतर्को ऽतर्कावचरस्तथागतविज्ञेयः शारिपुत्र सद्धर्मः। तत्कस्य हेतोः। एककृत्येन शारिपुत्रैककरणीयेन तथागतो ऽर्हन्सम्यक्सं-

---

1) तत Cb. ते O.

2) संवर्णा O. सब्रह्माणां Ca. Cb. A. सव्रणां K. सब्रह्मणां in W., left out in B.

3) तूष्णीं K.

4) यामास A. K. W. यति स्म O.

5) निष्पुंगलावा मे A. निष्पलापे B. निष्पुद्गलावा मे Cb. K. निष्पुंगलाक मे W. निष्पलापा O. Cp. Pāli *palāpa*.

6) नु added in A. For °सारे one would expect °सारा.

7) धि A. O.

8) कर्ह B. Cb. कथं O.

9) पान् A. K.

10) कथं O.

11) ध A. O.

12) र्म A. K. W.

बुद्धो लोक उत्पद्यते महाकृत्येन महाकरणीयेन। कतमच्च शारिपुत्र तथागतस्यैककृत्यमेककरणीयं महाकृत्यं[1] महाकरणीयं[1] येन कृत्येन तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते[2]। यदिदं तथागतज्ञानदर्शनसमादापनहेतुनिमित्तं सत्त्वानां तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनसंदर्शनहेतु[3]निमित्तं सत्त्वानां तथागतो ऽर्हन्स-
5 म्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनावतारणहेतुनिमित्तं सत्त्वानां तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानप्र[4]तिबोधनहेतुनिमित्तं सत्त्वानां तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते। तथागतज्ञानदर्शनमार्गावतारणहेतुनिमित्तं सत्त्वानां तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते। इदं तच्छारिपुत्र तथागतस्यैककृत्यमेककरणीयं महाकृत्यं महाकरणीयमेकप्रयोजनं लोके प्रादुर्भावाय। इति हि शारिपुत्र[5] यत्तथा-
10 गतस्यैककृत्यमेककरणीयं महाकृत्यं महाकरणीयं [6]तत्तथागतः करोति। तत्कस्य हेतोः। तथागतज्ञानदर्शनसमादापक एवाहं शारिपुत्र तथागतज्ञानदर्शनसंदर्शक एवाहं शारिपुत्र [7]तथागतज्ञानदर्शनावतारक एवाहं शारिपुत्र तथागतज्ञानदर्शनप्रतिबोधक एवाहं शारिपुत्र तथागतज्ञानदर्शनमार्गावतारक एवाहं शारिपुत्र। एकमेवाहं शारिपुत्र यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानं। न किंचिच्छारिपुत्र द्वितीयं वा तृतीयं वा यानं
15 संविद्यते। सर्वत्रैषा शारिपुत्र धर्मता दशदि[8]ग्लोके। तत्कस्य हेतोः। येऽपि ते शारिपुत्रातीते ऽध्वन्यभूवन्दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु[9] लोकधातुषु तथागता अर्हन्तः सम्यक्सं-

---

1) Left out in A.

2) उत्पाद्यते K. उत्पादि W.

3) संदर्शन left out in B. K. W.

4) A. adds वि.

5) त्वायं B. यं for यत् the others.

6) तं for तत् in all but B., where it is left out.

7) From here till मार्गावतारक left out in A. Cb.

8) दिशि A. B. दशसु दिसु O.

9) येष्वसंख्येयेषु B. Ca. Cb. यास्वसंख्येयासु A. K. W. which seems preferable, धातु being usually of fem. g. in S. P.

बुद्धा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशितवन्तः। ते ऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशितवन्तो यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव[2] तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशितवन्तः। यैरपि शारिपुत्र सत्त्वैस्तेषामतीतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात्सद्धर्मः श्रुतस्ते ऽपि सर्वे ऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो ऽभूवन्॥

ये ऽपि ते शारिपुत्रानागते ऽध्वनि भविष्यन्ति दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु[3] लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। ये च नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयिष्यन्ति। ते ऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयिष्यन्ति यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयिष्यन्ति। ये ऽपि ते शारिपुत्र सत्त्वास्तेषामनागतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात्तं धर्मं श्रोष्यन्ति ते ऽपि सर्वे ऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति॥

[1] A reads अवतारण for आरम्बण.

[2] संदर्शन in K. W. only.

[3] यास्वसंख्येयासु A. See above.

ये ऽपि ते शारिपुत्रैतर्हि प्रत्युत्पन्ने ऽध्वनि दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु[1] लोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्मं च देशयन्ति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । ये नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौ-
5 शल्यैर्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयन्ति । ते ऽपि सर्वे शारिपुत्र बुद्धा भगवन्त एकमेव यानमारभ्य सत्त्वानां धर्मं देशयन्ति यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशयन्ति । ये ऽपि ते शारिपुत्र सत्त्वास्तेषां प्रत्युत्पन्नानां
10 तथागतानामर्हतां सम्यक्संबुद्धानामन्तिकात्तं धर्मं शृण्वन्ति[2] ते ऽपि सर्वे[3] ऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति ॥

अहमपि[4] शारिपुत्रैतर्हि तथागतो ऽर्हन्सम्यक्संबुद्धो बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यैर्नानाधिमुक्ता-[5]
15 नां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा धर्मं देशयामि । अहमपि शारिपुत्रैकमेव यानमारभ्य सत्त्वानां धर्मं देशयामि यदिदं बुद्धयानं सर्वज्ञतापर्यवसानं यदिदं तथागतज्ञानदर्शनसमादापनमेव सत्त्वानां[6] तथागतज्ञानदर्शनसंदर्शनमेव तथागतज्ञानदर्शनावतारणमेव तथागतज्ञानदर्शनप्रतिबोधनमेव तथागतज्ञानदर्शनमार्गावतारणमेव सत्त्वानां धर्मं देशया-

---

1) यास्वसंख्येयासु A.
2) शृणोन्ति K.
3) A. adds शारिपुत्र.
4) ये पि ते A.
5) निर्देशना A. B.
6) In A. only.

मि। ये ऽपि ते शारिपुत्र सत्त्वा एतर्हि ममेमं[1] धर्मं शृण्वन्ति ते ऽपि सर्वे ऽनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति। तदनेनापि शारिपुत्र पर्यायेणैवं[2] वेदितव्यं यथा नास्ति द्वितीयस्य यानस्य क्वचिद्दशसु दिक्षु लोके प्रज्ञप्तिः कुतः पुनस्तृतीयस्य॥

अपि तु खलु पुनः शारिपुत्र यदा तथागता अर्हन्तः सम्यक्संबुद्धाः कल्पकषाये[3] वोत्पद्यन्ते सत्त्वकषाये वा क्लेशकषाये वा दृष्टिकषाये वायुष्कषाये वोत्पद्यन्ते। एवंरूपेषु 5 शारिपुत्र कल्पसंक्षोभकषायेषु बहुसत्त्वेषु[4] लुब्धेष्वल्पकुशलमूलेषु तदा शारिपुत्र तथागता अर्हन्तः सम्यक्संबुद्धा उपायकौशल्येन तदेवैकं बुद्धयानं त्रियाननिर्देशेन निर्दिशन्ति। तत्र शारिपुत्र ये श्रावका अर्हन्तः प्रत्येकबुद्धा वेमां क्रियां तथागतस्य बुद्धयानसमादपनां[5] न शृण्वन्ति नावतरन्ति नावबुध्यन्ति न ते शारिपुत्र तथागतस्य श्रावका वेदितव्या नाप्यर्हन्तो नापि प्रत्येकबुद्धा वेदितव्याः॥ 10

अपि तु खलु पुनः शारिपुत्र यः कश्चिद्भिक्षुर्वा भिक्षुणी वार्हत्त्वं प्रतिजानीयादनुत्तरायां[6] सम्यक्संबोधौ प्रणिधानमपरिगृह्योच्छिन्नो[7] ऽस्मि बुद्धयानादिति वदेदेतावन्मे समुच्छ्रयस्य पश्चिमकं परिनिर्वाणं वदेदाभिमानिकं तं शारिपुत्र प्रजानीयाः[8]। तत्कस्य हेतोः। अस्थानमेतच्छारिपुत्रानवकाशो यद्भिक्षुरर्हन्क्षीणास्रवः संमुखीभूते तथागत इमं धर्मं श्रुत्वा न श्रद्दध्यात्स्थापयित्वा परिनिर्वृतस्य तथागतस्य। तत्कस्य हेतोः। न हि ते शारिपुत्र 15

1) All but O. इं.

2) ने इदं Ca.

3) येषु A. पञ्चसु कषायेषु लोकेषु O.

4) A. B. add मूलेषु, but the true reading will be बहुमलेषु; sic O.

5) नं A. K. न W. नां Ca. Cb. O.

6) मे प्राप्तं ज्ञानीयात् O.

7) उच्छिन्नो निश्छन्दो A. निच्छंदो B. उच्छिन्नो K. W. निस्तीर्णा स्म इति वाचं भाषेया प्रच्छन्दिका स्मेति O. Probably to r. निष्कन्दो ऽस्मि बुद्धयान (Loc. c.) इति.

8) थ A. B. Ca. K. W. याः Cb. संज्ञानेयासि O.

श्रावकास्तस्मिन्काले तस्मिन्समये परिनिर्वृते तथागत एतेषामेवंरूपाणां सूत्रान्तानां धारका वा देशका वा भविष्यन्ति। अन्येषु पुनः शारिपुत्र तथागतेष्वर्हत्सु सम्यक्संबुद्धेषु निःसंशया भविष्यन्ति। इमेषु बुद्धधर्मेषु श्रद्दधाध्वं मे शारिपुत्र पत्तीयतावकल्पयत। न हि शारिपुत्र तथागतानां मृषावादः[1] संविद्यते। एकमेवेदं शारिपुत्र यानं यदिदं बुद्धयानम्॥

5 अथ खलु भगवानेतमेवार्थं[2] भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत॥

> अथा[3]भिमान[4]प्राप्ता[5] ये भिक्षुभिक्षुण्युपासकाः।
> उपासिकाश्च अश्राद्धाः सकृन्नाः पञ्चनूनकाः॥ ३८॥
> संपश्यन्त इमे दोषं छिद्रशिता[6]भिमन्विताः।
> 10 अप्रांश्च परिरक्षन्तः प्रक्रान्ता बालबुद्धयः॥ ३९॥
> पर्षत्कषटु ताञ्ज्ञात्वा[7] लोकनाथो ऽस्मि धंसि तान्[8]।
> नत्तेषां कुशलं नास्ति शृणुयुर्धर्म ये इमम्॥ ४०॥
> शुद्धा[9] च निष्पलावा[10] च सुस्थिता परिषन्मम[11]।
> फल्गु व्यपगता सर्वा सारा[12] चेयं प्रतिष्ठिता॥ ४१॥

---

1) दनां K. दना W.
2) निम Cb. निद् O.
3) अथ added conjecturally.
4) धि B. O.
5) A. adds थ or था.
6) शीला O.
7) कां ज्ञात्वा A. तां ज्ञात्वा B. तां ज्ञाना K. W.
8) स्मि धंसि तां A. स्मि शंसयि B. मुद्राब्रवीत् K. W. धंसन्ति जिनभाषितम् O.
9) स्र A. Ca. K. W. शु B. Cb. O.
10) लापा O.
11) पर्ष संघो मि सुस्थितम् O. संप्रस्थिता पर्षन्मम the others.
12) All सारे.

शृणोहि मे शारिसुता[1] यथैष संबुद्ध धर्मः पुरुषोत्तमेहि ।
यथा च बुद्धा कथयन्ति नायका उपायकौशल्यशतैरनेकैः ॥ ४२ ॥
यथाशयं ज्ञानिय ते चरिं च नानाधिमुक्तानिह प्राणिकोटिनाम् ।
चित्राणि कर्माणि विदित्व तेषां पुराकृतं यत्कुशलं च तेहि ॥ ४३ ॥
नानानिरुक्तीहि च कारणेहि संप्रापयामि इम तेष[2] प्राणिनाम् । 5
हेतूहि दृष्टान्तशतेहि चाहं तथा तथा तोषयि सर्वसत्त्वान् ॥ ४४ ॥
सूत्राणि[3] भाषामि तथैव गाथा[4] इतिवृत्तकं जातकमद्भुतं च ।
निदान औपम्यशतैश्च चित्रैर्गेयं च भाषामि तथोपदेशान् ॥ ४५ ॥
ये भोन्ति हीनाभिरता अविद्दसू अचीर्णचर्या बहुबुद्धकोटिषु[5] ।
संसारलग्नाश्च सुदुःखिताश्च निर्वाण तेषामुपदर्शयामि ॥ ४६ ॥ 10
उपायमेतं कुरुते स्वयंभूर्बौद्धस्य[6] ज्ञानस्य प्रबोधनार्थम् ।
न चापि तेषां प्रवदे कदाचिद्युष्मे[7] पि बुद्धा इह लोकि भेष्यथ[8] ॥ ४७ ॥
किंकारणं कालमवेक्ष्य[9] तायी क्षणं च दृष्ट्वा न तु पश्य[10] भाषते ।
सोऽयं क्षणो अद्य कथंचि लब्धो वदामि येनेह च भूतनिश्चयम् ॥ ४८ ॥

---

1) पुत्र A. पुत्रा B. Ca.

2) इमे तेषु A. इम तेष B. Cb. इमुद्देष K. इमुदृष W. इति तेष O.

3) Sic O. सूत्रांश्च Cb. सूत्रान्त the others.

4) गाथां A. था: K. W.

5) कल्प B. K.

6) बोध A. K. W. बोद् B. बौद्ध Cb. O.

7) युष्मा A. Ca. Cb.

8) Sic O; बुद्धोह भविष्यथेति the rest.

9) मुपेक्ष्य Cb.

10) पश्यद्वा K.

नवाङ्गमेतन्मम शासनं च प्रकाशितं सत्त्वबलाबलेन।
उपाय एषो वरदस्य ज्ञाने प्रवेशनार्थाय निदर्शितो मे ॥ ४९ ॥
भवन्ति मे चेह सदा विशुद्धा व्यक्ता[1] शुची सूरत बुद्धपुत्राः।
कृताधिकारा बहुबुद्धकोटिषु वैपुल्यसूत्राणि वदामि तेषाम् ॥ ५० ॥
5 तथा हि ते आशयसंपदाय[2] विशुद्धरूपाय समन्विता[3] अभूत्।
वदामि तान्[4]बुद्ध भविष्यथेति अनागते ऽध्वानि हितानुकम्पकाः ॥ ५१ ॥
श्रुत्वा च प्रीतिस्फुट भोन्ति सर्वे बुद्धा भविष्याम जगत्प्रधानाः।
पुनश्च हं जानिय तेष चर्या वैपुल्यसूत्राणि प्रकाशयामि ॥ ५२ ॥
इमे च ते श्रावक नायकस्य येन्हि श्रुतं शासनमेतमग्र्यम्।
10 एकापि गाथा श्रुत धारिता वा सर्वेष[5] बोधीय[5] न संशयो ऽस्ति ॥ ५३ ॥
एकं हि यानं द्वितियं[6] न विद्यते तृतियं[7] हि[8] नैवास्ति कदाचि लोके।
अन्यत्रुपाया पुरुषोत्तमानां यद्यानननात्वु[9]पदर्शयन्ति ॥ ५४ ॥
बौद्धस्य ज्ञानस्य[10] प्रकाशनार्थं लोके समुत्पद्यति लोकनाथः।
एकं हि कार्यं द्वितियं[11] न विद्यते न हीनयानेन नयन्ति बुद्धाः ॥ ५५ ॥

---

1) From व्यक्ता till the end of the first half of the next verse, left out in A.

2) शुद्धवीरा K. W.

3) रूपाकरुणा K. W.

4) ते B.

5) Sic O. सर्वेषु A. B. Ca. सर्वे पि K. W. All बोधाय.

6) ती A. B. K. ति Cb.

7) MSS. तृतीयं.

8) All but O. यः.

9) त्वु A. K. W. नु Cb. न्वु O.

10) यानस्य O, better.

11) ती A. B. K. W. O. ति Cb.

प्रतिष्ठितो यत्र स्वयं स्वयंभूर्यश्चैव बुद्धं यथ यादृशं च।
बलाश्च ये ध्यानविमोक्ष इन्द्रियास्तत्रैत्र[1] सत्त्वा पि प्रतिष्ठपेति[2]॥ ५६॥
मात्सर्यदोषो हि भवेत मह्यं स्पृशित्व बोधिं विरजां विशिष्टाम्।
यदि क्रोनयानस्मि प्रतिष्ठपेयमेकं पि सत्त्वं न ममेतु[3] साधु॥ ५७॥
मात्सर्य मह्यं न कच्चिंचि विद्यते[4] ईर्ष्या न मे नापि च छन्दरागः। 5
उच्छिन्नपापा मम सर्वधर्मास्तेनास्मि[5] बुद्धो जगतानुबोधात्॥ ५८॥
यथा ह्यहं चित्रितु लक्षणेहि प्रभासयन्तो इमु सर्वलोकम्।
पुरस्कृतः प्राणिशतैरनेकैर्देशेमिमां धर्मस्वभावमुद्राम्॥ ५९॥
एवं च चिन्तेम्यहु शारिपुत्र[6] कथं नु एवं भवि सर्वसत्त्वाः।
द्वात्रिंशतीलक्षणरूपधारिणः स्वयंप्रभा लोकविदू स्वयंभूः[7]॥ ६०॥ 10
यथा च पश्यामि यथा च चिन्तये यथा च संकल्प ममासि[8] पूर्वम्।
परिपूर्णमेतत्प्रणिधान मह्यं बुद्धा च बोधिं च[9] प्रकाशयामि॥ ६१॥
सचेदहं शारिसुता[10] वदेयं सत्त्वान बोधाय जनेथ छन्दम्।
अजानकाः सर्व भ्रमेयुरत्र न जातु गृह्णीयु सुभाषितं मे॥ ६२॥

1) तत्रापि B.

2) पेमि O. यन्ति the others.

3) समेतु A. मयेति B. समेति Ca. समेति Cb. ममतु K. ममेष O.

4) ह्रि Cb.

5) °न्न सर्वे मम पापधर्मा° O., preferable.

6) त्रा K. W.

7) भू A. K. W. यद्वदहं O. for लोकविदू.

8) पि for सि in all but O.

9) बुद्धा विमानोधि B. the second च in K. W. only. Have we to r. बुद्धान बो°? or बुद्धाय बो°?

10) पुत्रा K. W.

तांश्चैव हं ज्ञानिय एवद्रूपान्न चीर्णचर्याः पुरिमासु ज्ञातिषु ।
श्रध्योषिताः[1] कामगुणेषु सक्तास्[2]तृष्णाय संमूर्च्छित मोहचित्ताः ॥ ६३ ॥
ते कामहेतोः प्रपतन्ति दुर्गतिं षट्सू गतीषू परिखिद्यमानाः ।
कटसी च[3] वर्धेन्ति[4] पुनः पुनस्ते[5] दुःखेन संपीडित अल्पपुण्याः ॥ ६४ ॥
5 विलग्न दृष्टीगहनेषु नित्यमस्तीति नास्तीति तथास्ति नास्ति ।
द्वाषष्टिदृष्टीकृत निश्रयित्वा[6] असत्तभावं परिगृह्य ते स्थिताः ॥ ६५ ॥
दुःशोधका मानि च दम्भिनश्च वङ्काः शठा अल्पश्रुताश्च बालाः ।
ते नैव शृण्वन्ति सुबुद्धघोषं कदाचि पि[7] ज्ञातिसहस्रकोटिषु ॥ ६६ ॥
तेषामहं शारिसुता उपायं वदामि दुःखस्य करोथ अन्तम् ।
10 दुःखेन संपीडित दृष्ट्व सत्वान्निर्वाण तत्राप्युपदर्शयामि ॥ ६७ ॥
एवं च भाषाम्यहु नित्यनिर्वृता आदि प्रशान्ता इमि सर्वधर्माः ।
चर्यां च यो[8] पूरयि बुद्धपुत्रो अनागते ऽध्वानि जिनो भविष्यति ॥ ६८ ॥
उपायकौशल्य ममेवरूपं यत्त्रीणि यानान्युपदर्शयामि ।
एकं तु[9] यानं हि[9] नयश्च[10] एक एका चियं देशन नायकानाम् ॥ ६९ ॥

---

1) बुद्धोसिता O., श्रध्येषिताः the others.

2) सत्वा° O., शक्का° the rest.

3) कटसी च O, कटासि the rest.

4) गतिश्च विध्येन्ति K. W.

5) कां A. तां B. Ca. Cb. W. ते O.

6) गतमाश्रयित्वा O.

7) नो ज्ञा° O., पिज्ञा° the others.

8) All सो.

9) हि तु A. K. W. तु हि B. Cb.

10) नयश्च A. Cb. K. W.

व्यपनेहि काङ्क्षां तथ संशयं च येषां च केषां चिह काङ्क्ष विद्यते।
अनन्यथावादिन लोकनायका एकं इदं यान द्वितीय[1] नास्ति ॥ ७० ॥
ये चाप्यभूवन्पुरिमास्तथागताः परिनिर्वृता बुद्धसहस्रनेके।
अतीतमधानमसंख्यकल्पे[2] तेषां[3] प्रमाणं न कदाचि विद्यते ॥ ७१ ॥
सर्वेहि तेहि[4] पुरुषोत्तमेहि[4] प्रकाशिता धर्म बहू विशुद्धाः। 5
दृष्टान्तकैः कारणहेतुभिश्च उपायकौशल्यशतैरनेकैः ॥ ७२ ॥
सर्वे च ते दर्शयि एकयानमेकं च यानं अवतारयन्ति।
एकस्मि[5] याने परिपाचयन्ति अचिन्तिया प्राणिसहस्रकोट्यः ॥ ७३ ॥
अन्ये[6] उपाया विविधा जिनानां येह्वी प्रकाशेन्ति ममाग्रधर्मम्।
ज्ञात्वाधिमुक्तिं तथ आशयं च तथागतो लोकि सदेवकस्मिन्[7] ॥ ७४ ॥ 10
ये चापि सत्त्वास्तहि तेष संमुखं शृणवन्ति धर्मं अथ वा श्रुताविनः।
दानं च दत्तं चरितं च[8] शीलं[9] क्षान्त्या च संपादित सर्वचर्याः ॥ ७५ ॥
वीर्ये च[10] ध्याने च[10] कृताधिकाराः प्रज्ञाय वा चिन्तित एति धर्माः।
विविधानि पुण्यानि कृतानि येहि[11] ते सर्वि बोधाय[12] अभूषि लाभिनः ॥ ७६ ॥

---

1) यु Ca.

2) ल्पैः Cb.

3) ये Ca.

4) हि Cb. K. भिः O., the rest हो.

5) स्मिन् A. स्मिं K. W.

6) अन्यत्र उ Ca.

7) के स्मिं B.

8) चरिताश्च all but O.

9) ल A. लो B. ले Ca. K. W. लं O. Equally good would be चरिता च शीला, Nom. pl. n.

10) न B.

11) हो B.

12) All धाय.

परिनिर्वृतानां च जिनान तेषां ये शासने केचिद्भूषि सत्त्वाः ।
क्षान्ता च दान्ता च विनीत तत्र ते सर्वि बोधीय[1] अभूषि लाभिनः ॥ ७७ ॥
ये चापि धातून करोन्ति[2] पूजां जिनान तेषां परिनिर्वृतानाम् ।
रत्नामयान्स्तूपसहस्रनेकान्सुवर्णरूप्यस्य च स्फाटिकस्य ॥ ७८ ॥
5 ये चाश्मगर्भस्य करोन्ति स्तूपान्कर्केतनमुक्तमयांश्च[3] केचित् ।
वैडूर्यश्रेष्ठस्य तथेन्द्रनीले ते[4] सर्वि बोधीय[1] अभूषि लाभिनः ॥ ७९ ॥
ये चापि शैलेषु करोन्ति स्तूपान्ये चन्दनानामगुरुस्य[5] केचित् ।
ये देवदारुस्य करोन्ति स्तूपान्ये दारुसंघातमयांश्च केचित् ॥ ८० ॥
इष्टामयान्[6]मृत्तिकसंचितान्वा प्रीताश्च कुर्वन्ति जिनान स्तूपान् ।
10 उद्दिश्य ये पांसुकराशयो ऽपि अटवीषु दुर्गेषु च कारयन्ति ॥ ८१ ॥
सिकतामयान्वा पुन कूट[7] कृत्वा ये केचिदुद्दिश्य जिनान स्तूपान् ।
कुमारकाः क्रीडिषु तत्र तत्र ते सर्वि बोधीय[8] अभूषि लाभिनः ॥ ८२ ॥
रत्नामयान्बिम्ब तथैव केचिद्द्वात्रिंशतीलक्षणरूपधारिणः ।
उद्दिश्य कारापित येभि चापि ते सर्वि बोधीय[8] अभूषि लाभिनः ॥ ८३ ॥
15 ये सप्तरत्नामय तत्र केचिद्ये ताम्रिका[9] वा तथ कांसिका वा ।
कारापयीषू सुगतान बिम्बा[10] ते सर्वि बोधीय[8] अभूषि लाभिनः ॥ ८४ ॥

---

1) All धाय.

2) Here and in the sequel कारिन्सु O.

3) नं O. ना the rest.

4) All but O. तथेन्द्रनीलैस्ते.

5) मन्नूकस्य A. मरूकस्य B. मगरुस्य Cb. मगुरुस्य K. मतुगुरुस्य W. अगुरुस्य O.

6) मया Mss.

7) स्तूपं A. स्तूप K. W.

8) धाय Mss.

9) ता A. का B. Cb. K. W.

10) बिंबान् Cb. निम्बा Ca. B. बंबं A. K. W.

सोमस्य लोकस्य च मृत्तिकाय वा कारापयीषू[1] सुगतान विग्रकान्।
ये पुस्तकर्मामय दर्शनीयांस्ते सर्वि बोधीय[2] अभूषि लाभिन. ॥ ८५ ॥
ये चित्रभित्तीषु करोत्ति विग्रकान्परिपूर्णगात्रांञ्शतपुण्यलक्षणान्।
लिखेत्स्वयं चापि लिखापयेद्वा ते सर्वि बोधीय[2] अभूषि लाभिनः ॥ ८६ ॥
ये चापि केचित्तहि शिक्षमाणाः क्रीडारतिं चापि विनोदयन्तः। 5
नखेन काष्ठेन कृतासि[3] विग्रकांस्ते सर्वि बोधाय[2] अभूषि लाभिनः ॥ ८७ ॥
भित्तीषु पुरुषा च कुमारका वा सर्वे च ते कारुणिका अभूवन्।
सर्वे ऽपि ते तारयि[4] प्राणिकोट्यः समादपेत्ता[5] बहुबोधिसत्त्वान् ॥ ८८ ॥
धातूषु ये चापि तथागतानां स्तूपेषु वा मृत्तिकविग्रकेषु वा।
आलेख्य[6] भित्तीष्वपि पांसुस्तूपे पुष्पा च गन्धा च प्रदत्त आसीत् ॥ ८९ ॥ 10
वाद्या[7] च वादापित येहि[8] तत्र भेर्यो ऽथ शङ्खाः पटहाः सुघोषकाः।
निर्नादिता दुन्दुभयश्च येहि पूजाविधानाय वराग्रबोधिनाम् ॥ ९० ॥
वीणाश्च[9] ताडा पणवाश्च[10] येहि[11] मृदङ्गवंशा[12] प्रणदा[13] मनोज्ञाः।
एकोत्सवा[14] वा सुकुमारका[15] वा ते सर्वि बोधीय अभूषि लाभिनः ॥ ९१ ॥

---

1) यिन्सु O. The lengthening of the last syllable not necessary.
2) धाय Mss.
3) One would expect अकासि or अकासु; O. has च आलिखिन्सु.
4) All but O. सर्वे ऽपि चोत्ता; सर्वे च ते ता O.
5) यिन्सु O. यत्ता or पत्ता the others.
6) आलेख O.
7) वाद्यापि K. W. वाद्यं च O.
8) येभि O. थैव the rest.
9) व A. B. Ca. Cb. च K. W.
10) श्च A. K. W.
11) की B.
12) शङ्ख B. Cb.
13) तुणावा O.
14) एकोत्सवा A. K. W. एकोनडा B. Cb. एकावचारा O.
15) कुसु A. Cb.

वाद्यापिता कह्मरियो[1] ऽपि येहि जलमण्डका[2] वाप्यथ मण्डका[3] वा।
सुगतान उद्दिश्य थ पूजनार्थ गीतं सुगीतं[4] मधुरं मनोज्ञम्॥ ९२॥
सर्वे च ते बुद्ध अभूषि लोके कृत्वान तां बहुविधधातुपूजाम्।
किमल्पकं पि[5] सुगतान धातुषु एकं पि वाद्यापिय वाद्यभाण्डम्॥ ९३॥
5 पुष्पेण चैकेन पि पूजयित्वा आलेख्य भित्ती सुगतान बिम्बम्।
विक्षिप्तचित्ता पि च पूजयित्वा अनुपूर्व द्रक्ष्यन्ति च[6] बुद्धकोट्यः॥ ९४॥
येश्चाञ्जलि तत्र कृतो ऽपि[7] स्तूपे परिपूर्ण एका तलशक्तिका वा।
उन्नामितं शीर्षमभून्मुहूर्तमवनामितं कायु तथैकवारम्॥ ९५॥
नमो ऽस्तु बुद्धाय[8] कृतैकवारं येही तदा धातुधरेषु तेषु।
10 विक्षिप्तचित्तैरपि एकवारं ते सर्वि प्राप्ता इममग्रबोधिम्॥ ९६॥
सुगतान तेषां तद तस्मि[9] काले[10] परिनिर्वृतानामथ तिष्ठतां वा।
ये धर्मनामापि श्रुणेन्सु सत्त्वास्ते सर्वि बोधीय[11] अभूषि लाभिनः॥ ९७॥
अनागता पि[12] बहुबुद्धकोट्यो अचिन्तिया येषु प्रमाणु नास्ति।
ते पी जिना उत्तमलोकनाथाः प्रकाशयिष्यन्ति उपायमेतम्॥ ९८॥

---

1) जर्जरिकाश्च O.
2) मंदका A. मद्दुका B. मत्तका K. मत्तका W. मण्डुका O.
3) मडका A. मड्डुका B. मुच्च K. सत्र W. Probably to r. मड्डुका.
4) च A. B. K. W. सु Cb.
5) All but O. पी. अल्पाल्पकापि O.
6) ते A. B. Ca. Cb. च K. W. दृष्टा बहु O.
7) घि A. मि K. पि B. W. कृतापि O.
8) बोधाय K. W.
9) तस्मिं A. B. Ca. K. W. तस्मि Cb.
10) Thus O; the others लोके.
11) All बोधाय.
12) All पी.

उपायकौशल्यमनन्तु तेषां भविष्यति[1] लोकविनायकानाम्।
येना विनेष्यन्तिह प्राणकोट्यो बौद्धस्मि ज्ञानस्मि अनास्रवस्मिन्[2] ॥ ९९ ॥
एको ऽपि सत्त्वो न कदाचि तेषां श्रुत्वान धर्मं न भवेय बुद्धः।
प्रणिधानमेतद्धि तथागतानां चरित्व बोधाय चरापयेयम् ॥ १०० ॥
धर्ममुखा कोटिसहस्रनेके[3] प्रकाशयिष्यन्ति अनागते ऽध्वे[4]।
उपदर्शयन्तो इममेकयानं वदर्यान्ति धर्मं हि तथागतत्वे ॥ १०१ ॥
स्थितिका हि एषा सद धर्मनेत्री प्रकृतिश्च धर्माण सदा प्रभास्वरा।
विदित्व बुद्धा द्विपदानमुत्तमा प्रकाशयिष्यन्ति ममेकयानम् ॥ १०२ ॥
धर्मस्थितिं धर्मनियामतां च नित्यस्थितां लोकि इमामकम्प्याम्।
बुद्धाश्च बोधिं पृथिवीय मण्डे प्रकाशयिष्यन्ति उपायकौशलम्[5] ॥ १०३ ॥
दशसू दिशासू नरदेवपूजितास्तिष्ठन्ति बुद्धा यथ गङ्गवालिकाः।
सुखापनार्थं इह सर्वप्राणिनां ते चापि भाषन्तिममग्रबोधिम्[6] ॥ १०४ ॥
उपायकौशल्य प्रकाशयन्ति विविधानि यानान्युपदर्शयन्ति[7]।
एकं च यानं परिदीपयन्ति बुद्धा इमामुत्तमशान्तभूमिम् ॥ १०५ ॥
चरितं च ते ज्ञानिय सर्वदेहिनः यथाशयं यच्च पुरा निषेवितम्[8]।
वीर्यं च स्थामं च विदित्व तेषां ज्ञात्वाधिमुक्तिं च प्रकाशयन्ति ॥ १०६ ॥

1) ष्यते O. ष्यतो the rest.

2) बोधेस्मिं ज्ञानेस्मि अनाश्रवेस्मिन् A. बुद्धस्मि ज्ञानेस्मि B. बोद्धस्मि Cb. बौद्धस्मि K. बोधेस्मि W. बौद्धस्मि यानस्मि O.

3) Thus Mss.

4) ध्वे A. K. W. O. ध्वनि B. Cb.

5) All कौशल्यम्, in O, however, कौशल्य प्रकाशयन्ति.

6) यथानं B. Cb. K. O.

7) यन्ति Cb. याति O. यन्तः the rest.

8) ह्युपाणिसेवितं A.

दृष्टान्तहेतून्बहु दर्शयन्ति बहुकारणाऽज्ञानबलेन नायकाः ।
नानाधिमुक्तांश्च विदित्व सत्त्वान्नानाभिनिर्हारु[1]पदर्शयन्ति ॥ १०७ ॥
ग्रहं पि चैतर्हि जिनेन्द्रनायको[2] उत्पन्न सत्त्वान सुखापनार्थम् ।
संदर्शयामि[3] इम बुद्धबोधिं नानाभिनिर्हारसहस्रकोटिभिः ॥ १०८ ॥
5 देशेमि धर्मं च बहुप्रकारं ग्रधिमुक्तिमध्याशय ज्ञात्व प्राणिनाम् ।
संहर्षयामि[3] विविधैरुपायैः प्रत्यात्मिकं ज्ञानबलं ममैतत् ॥ १०९ ॥
ग्रहं पि पश्यामि दरिद्रसत्त्वान्प्रज्ञाय पुण्येहि च विप्रहीणान् ।
प्रस्कन्द[4] संसारि निरुद्ध दुर्गे[5] मग्नाः पुनः दुःखपरंपरासु ॥ ११० ॥
तृष्णाविलग्नांश्चमरीव वाले कामैरिहान्धीकृतसर्वकालम् ।
10 न बुद्धमेषन्ति महानुभावं न धर्म मार्गन्ति दु[6]खान्तगामिनम्[7] ॥ १११ ॥
गतीषु षट्सु[8] परिरुद्धचित्ताः कुदृष्टिदृष्टीषु स्थिता ग्रकम्प्याः[9] ।
दुःखेन दुःखानुप्रधावमानाः[10] कारुण्य मह्यं बलवत्तु तेषु[11] ॥ ११२ ॥
सो ऽहं विदित्वा तहि बोधिमण्डे सप्ताह त्रीणि परिपूर्ण संस्थितः ।
ग्रर्थं[12] हि चिन्तेमिममेवद्भूपं[13] उल्लोकयन्पादपमेव तत्र[14] ॥ ११३ ॥

---

1) र उप A. K. W. र प्र O.

2) को A. काः B. को K. W. राजा for नायको O.

3) All मी.

4) One would expect प्रस्कन्न.

5) मार्गे Cb. The three nominatives in this verse ungrammatical.

6) दुः A. W

7) नाम् B.

8) All °सु followed by परिम्रुद्ध, ऽपरिम्रुद्ध, but पलिम्रुद्ध O. Our reading conjectural. Cp. Pāli *palibuddha.*

9) म्प्यान् W.

10) दुःखेन दुःखातु प्रधावमानः O. दुःखानुदुःखं प्रतिवेधमानः the others. दुःखानु° is for दुःखमनु°.

11) All but O. षाम्.

12) ग्रर्थे A. K. W. कथं B. ग्रथं Cb. O.

13) विचिन्तेमि कथं करोमि O.

14) ग्रालोक B.

प्रेक्षामि तं चानिमिषं द्रुमेन्द्रं तस्यैव क्षेत्रे अनुचङ्क्रमामि ।
आश्चर्यज्ञानं च इदं[1] विशिष्टं सत्त्वाश्च मोहान्ध अविद्वसू इमे[2] ॥ ११४ ॥
ब्रह्मा च मां याचति तस्मि काले शक्रश्च चत्वारि च लोकपालाः ।
महेश्वरो ईश्वर एव चापि मरुद्गणानां च सहस्रकोट्यः ॥ ११५ ॥
कृताञ्जली सर्वि स्थिताः सगौरवा अर्थं च चिन्तेमि कथं करोमि । 5
अहं च बोधीय वदामि वर्णान् इमे च दुःखेरभिभूत सत्त्वाः ॥ ११६ ॥
ते मह्य धर्मं क्षिपि बाल भाषितं क्षिपित्व गच्छेयुरपायभूमिम् ।
श्रेयो मम[3] नैव कदाचि भाषितुं अद्यैव मे निर्वृतिरस्तु शान्ता ॥ ११७ ॥
पुरिमांश्च बुद्धान्समनुस्मरन्तो[4] उपायकौशल्य[5] यथा च तेषाम् ।
यंनून हं पि[6] इम बुद्धबोधिं त्रिधा विभाज्येह प्रकाशयेयम् ॥ ११८ ॥ 10
एवं च मे चिन्तितु[7] एष[8] धर्मो[9] ये चान्ये बुद्धा दशसुद्दिशासु ।
दर्शिन्सु[10] ते मह्य तदात्मभावं साधुं[11] ति घोषं समुदीरयन्ति ॥ ११९ ॥
साधू मुने लोकविनायकाग्र[12] अनुत्तरं ज्ञानमिहाधिगम्य ।
उपायकौशल्य विचिन्तयन्तो अनुशिक्षसे लोकविनायकानाम् ॥ १२० ॥

---

1) इमां A. K. W. इमं B. इदं Ca. मिमं Cb.
2) अविद्वसाश्च O
3) All but O. ममा.
4) रामि Ca. O.
5) ल्यु Cb.
6) All पी.
7) त B. Cb.
8) एव K.
9) र्म A.
10) र्शे B. Ca. र्श Cb. K. W. र्शि O.
11) Rather साधू.
12) ग्रा A. O. ग B. Ca. गं Cb. ग्रं K. ग्रां W.

वयं पि बुद्धाय[1] परं[2] तदा पदं तृधा च कृत्वान[3] प्रकाशयामः।
क्रोनाधिमुक्ता कि अविद्वसू नरा भविष्यथा बुद्ध न श्रद्दधेयुः ॥ १२१ ॥
ततो वयं कारणासंग्रहेण उपायकौशल्य निषेवमाणाः।
फलाभिलाषं परिकीर्तयन्तः समादपेमो बहुबोधिसत्त्वान् ॥ १२२ ॥
5 अहं चुदग्रस्तद[4] आसि श्रुत्वा घोषं मनोज्ञं पुरुषर्षभाणाम्।
उदग्रचित्तो भणि तेष तायिनां न मोहवादी प्रवरा महर्षी ॥ १२३ ॥
अहं पि एवं समुदाचरिष्ये यथा वदन्ति[5] विदु लोकनायकाः।
अहं पि संक्षोभि इमस्मि दारुणे उत्पन्न सत्त्वान कषायमध्ये[6] ॥ १२४ ॥
ततो[7] ह्यहं शारिसुता विदित्वा वाराणसीं प्रस्थितु तस्मि काले।
10 तहि पञ्चकानां प्रवदामि भिक्षुणां धर्मं उपायेन प्रशान्तभूमिम् ॥ १२५ ॥
ततः प्रवृत्तं मम धर्मचक्रं निर्वाणशब्दश्च[8] अभूषि लोके।
अर्हन्तशब्दस्तथ[9] धर्मशब्दः[10] संघस्य[11] शब्दश्च अभूषि तत्र ॥ १२६ ॥
भाषामि वर्षाणि अनल्पकानि निर्वाणभूमिं[12] चुपदर्शयामि।
संसारदुःखस्य च एष अन्तो एवं वदामि[13] अहु नित्यकालम् ॥ १२७ ॥

---

1) बुद्धाय O., बुद्धा हि the others; बुद्धाय for बद्धाय.
2) हि यनं B. हि वरं B. K. हि परं Ca. W विहरं Cb. उत्तमं पदं O.
3) तृविधं करित्वान O. तृधा च कृत्वा हि the rest.
4) चप्युदग्रं A. मुदग्र B. चूदग्र Ca. चोदग्र Cb. K. W. ह्युदग्र O.
5) All but O. न्ती.
6) कशाव O. Cp. Pāli *kasaṭa*.
7) प्य A. K. W.
8) ब्दंच A. O. श्च K. W.
9) शब्दं तथ A. O.
10) शब्दं A. O.
11) श्च K. W.
12) मिमु B. O.
13) वदेमि O., a form also used in Pāli. Other Mss. वदामी.

यस्मिंश्च काले ग्रहु शारिपुत्र पश्यामि पुत्रान्द्विपदोत्तमानाम्।
ये प्रस्थिता उत्तममग्रबोधिं कोटीसहस्राणि ग्रनल्पकानि[1] ॥ १२८ ॥
उपसंक्रमित्वा च ममैव ग्रन्तिके कृताञ्जलीः सर्वि स्थिताः सगौरवाः।
येही श्रुतो धर्म जिनान ग्रासीत्[2] उपायकौशल्य बहुप्रकारम् ॥ १२९ ॥
ततो मम[3] एतदभूषि तत्क्षणं समयो मम[4] भाषितुमग्रधर्मम्।
यस्याहमर्थं इह लोकि जातः प्रकाशयामि[5] तमिहाग्रबोधिम् ॥ १३० ॥
दुःश्रद्दधं एतु भविष्यते ऽद्य निमित्तसंज्ञीनिह बालबुद्धिनाम्।
ग्रधिमानप्राप्तान[6] ग्रविद्दसूनां इमे तु श्रोष्यन्ति हि बोधिसत्त्वाः ॥ १३१ ॥
विशारदश्चाहु तदा प्रहृष्टः संलीयना[7] सर्व विवर्जयित्वा।
भाषामि मध्ये सुगतात्मजानां तांश्चैव बोधाय समादपेमि ॥ १३२ ॥ 10
संदृश्य चैतादृशबुद्धपुत्रांस्तवापि काङ्क्षा व्यपनीत भेष्यति।
ये चा शता द्वादशिमे ग्रनास्रवा बुद्धा भविष्यन्तिमि लोकि सर्वे ॥ १३३ ॥
यथैव तेषां पुरिमाण[8] तायिनाम् ग्रनागतानां च जिनान धर्मता।
ममापि एषैव विकल्पवर्जिता तथैव हं देशयि ग्रद्य तुभ्यम् ॥ १३४ ॥
कदाचि कर्हिचि[9] कथंचि कोके उत्पादु भोति पुरुषर्षभाणाम्। 15
उत्पद्य चा लोकि ग्रनन्तचक्षुषः कदाचिदेतादृशु धर्म देशयुः[10] ॥ १३५ ॥

1) ग्रनन्त A. K. W. O. ग्रनल्प B. Cb.
2) ग्राशीं A. ग्राशो B. Cb. ग्रासीत K. ग्रासीत् W. ग्रासि O.
3) All but O. मया.
4) ममा A. K. W. मया B. मम O.
5) All but O. मो.
6) प्राप्तामवि A. प्राप्तान् ग्र B. Cb. प्राप्तान ग्र Ca. O. प्राप्ता ग्र K, प्राप्तो वि W.
7) नं सर्वि B. Ca.
8) All परि.
9) कर्हिचि A. किंचिच्च B. कंचिच्च Ca. कश्चिच्च Cb. कर्हिंचिच्च K. कोर्हिं-चिच्च W. The metre in A., K., W. faultive.
10) देशकः A. K. W. °युः B. Ca. °सुः Cb. यिषुा O (a misread यिषु).

सुदुर्लभो ईदृशु अग्रधर्मः कल्पान कोटीनयुतैरपि स्यात्।
सुदुर्लभा ईदृशकाश्च सत्त्वाः श्रुत्वान[1] ये श्रद्दधि अग्रधर्मम् ॥ १३६ ॥
औदुम्बरं पुष्प यथैव दुर्लभं कदाचि कर्हिचि[2] कथंचि दृश्यते।
मनोज्ञरूपं च जनस्य तद्भवेदाश्चर्य[3] लोकस्य सदेवकस्य ॥ १३७ ॥
5 अतश्च आश्चर्यतरं वदामि श्रुत्वान[4] यो धर्ममिमं सुभाषितम्।
अनुमोदि एकं पि भणेय[5] वाचं कृत सर्वबुद्धान भवेय पूजा[6] ॥ १३८ ॥
व्यपनेहि काङ्क्षामिह संशयं च आरोचयामि[7] अहु धर्मराजा।
समादपेमि[7] अहमग्रबोधौ[8] न श्रावकाः केचिदिहास्ति मह्यम् ॥ १३९ ॥
तव शारिपुत्रैतु रहस्यु भोतु ये चापिमे श्रावक मह्य सर्वे।
10 ये बोधिसत्त्वाश्च इमे प्रधाना रहस्यमेतन्मम धारयन्तु ॥ १४० ॥
किंकारणं पञ्चकषायकाले क्षुद्राश्च दुष्टाश्च भवन्ति सत्त्वाः।
कामैरिहान्धीकृत बालबुद्धयो न तेष बोधाय कदाचि चित्तम् ॥ १४१ ॥
श्रुत्वा च यानं मम एतदेकं प्रकाशितं तेन जिनेन[10] आसोत्[11]।
अनागतेऽध्वानि भ्रमेयु सत्त्वाः सूत्रं क्षिपित्वा नरकं व्रजेयुः ॥ १४२ ॥

---

1) च A. K. W. न B. Cb.

2) कर्हिचिच्च A. K. W. किंचिच्च B. Ca. O. कश्चिच्च Cb. The same remark as above.

3) र्यु Ca.

4) च सो A. च यो B. K. W. न यो Cb.

5) ष्य A. र्य K. W. पि B. Cb. वाच भाषि O.

6) भवेत पूजा O. भवेयु पूजाम् the rest.

7) All but O. मी.

8) अहु अग्र A. K. W. अहु बुद्ध B. अहमग्र Ca. अहमग्र्य Cb.

9) त्र K. W.

10) तेहि जिनेहि A. K. W. तने हि जिनेहि B. तेभि जिनेहि Ca. तेन जिनेन Cb. O.

11) आसि O.

लब्धो शुची ये च भवेयु सत्त्वाः संप्रस्थिता उत्तममग्रबोधिम् ।
विशारदो भूत्व वदेमि तेषामेकस्य यानस्य अनन्तवर्णान्[1] ॥ १४३ ॥
एतादृशी देशन नायकानामुपायकौशल्यमिदं वरिष्ठम् ।
बहूनि संधावचनेहि चोक्तं दुर्बोध्यमेतं हि अशिक्षितेहि ॥ १४४ ॥
तस्माद्धि संधावचनं विजानिया बुद्धान लोकाचरियाण तायिनाम् ।
जहित्व काङ्क्षां विजहित्व संशयं भविष्यथा बुद्ध जनेथ हर्षम्[2] ॥ १४५ ॥

इत्यार्य[3]सद्धर्मपुण्डरीके धर्मपर्याय उपायकौशल्यपरिवर्तो नाम द्वितीयः ॥

---

1) र्णा A. K W. र्णान् B. र्णं Cb.

2) Mss. add इति.

3) इति in A. K. W. आर्य in B. श्री is added in A. instead of आर्य. The same in similar cases hereafter. O has सद्धर्मपुण्डरीके महावैतुल्यसूत्ररत्ने.

# III.

अथ खल्वायुष्माञ्छारिपुत्रस्तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीति-
सौमनस्यजातो येन भगवांस्तेनाञ्जलिं प्रणाम्य[1] भगवतो[2] ऽभिमुखो[2] भगवन्तमेव[2] व्यवलोकय-
मानो भगवन्तमेतदवोचत्। आश्चर्याद्भुतप्राप्तो ऽस्मि भगवन्नौद्बिल्यप्राप्त इदमेवंरूपं भगवतो
ऽन्तिकाद्घोषं श्रुत्वा। तत्कस्य हेतोः। अश्रुत्वैव तावदहं भगवन्निदमेवंरूपं[3] भगवतो ऽन्ति-
5 काद्धर्मं तदन्यान्बोधिसत्त्वान्दृष्ट्वा बोधिसत्त्वानां चानागते ऽध्वनि बुद्धनाम श्रुत्वातीव शोचा-
म्यतीव संतप्ये भ्रष्टो ऽस्म्येवंरूपात्तथागतज्ञान[गोचरा(ऽज्ञान]दर्शनात्[4]। यदा चाहं भगवन्न-
भीक्ष्णं गच्छामि पर्वतगिरिकन्दराणि वनषण्डान्यारामनदीवृक्षमूलान्येकान्तानि दिवा-
विहाराय तदाप्यहं भगवन्यद्भूयस्त्वेनानेनैव विहारेण विहरामि। तुल्ये[5]नामधर्मधातुप्र-
वेशे वयं भगवता हीनेन यानेन निर्यातिताः। एवं च मे भगवंस्तस्मिन्समये भवत्यस्माक-
10 मेवैषो ऽपराधो नैव भगवतो ऽपराधः। तत्कस्य हेतोः। सचेद्भगवानस्माभिः प्रतीक्षितः
स्यात्सामुत्कर्षिकीं धर्मदेशनां कथयमानो यदिदमनुत्तरां सम्यक्संबोधिमारभ्य तेष्वेव
वयं भगवन्धर्मेषु[6] निर्याताः स्याम। यत्पुनर्भगवन्नस्माभिरनुपस्थितेषु बोधिसत्त्वेषु संधा-
भाष्यं भगवतो ऽजानमानैस्त्वरमाणैः प्रथमभाषितैव तथागतस्य धर्मदेशना श्रुत्वोद्गृहीता
धारिता भाविता चिन्तिता मनसिकृता सो ऽहं भगवन्नात्मपरिभाषणयैव[7] भूयिष्ठेन रात्रिं-

---

1) Mss. प्रणाम्य. Equally good would be प्रणामय्य and प्रणामयित्वा.

2) भगवतो ऽभिमुखो एव left out in A. K. W.

3) रूपं left out in K. W.

4) The syllables in brackets wanting in O.

5) तुल्य A. Ca. Cb. K. W. तुल्यो B. तुल्ये O. Cp. Kern's version, p. 60, note 2, and st. 8.

6) K. adds अ.

7) या एव A. B. या एवं K. W. यथैव Ca. यैवया Cb. याप एवं O.

दिवान्यतिनामयामि[1]। अद्यास्मि[2] भगवन्निर्वाणप्राप्तः। अद्यास्मि[2] भगवन्परिनिर्वृतः। अद्य मे भगवन्नर्हत्वं प्राप्तं। अद्याहं भगवन्[3]भगवतः पुत्रो ज्येष्ठ औरसो मुखतो जातो धर्मजो धर्मनिर्मितो धर्मदायादो धर्मनिर्वृत्तः[4]। अपगतपरिदाहो ऽभ्यद्य भगवन्निममेवंरूपमद्भुतधर्मम-श्रुतपूर्वं भगवतो ऽन्तिकाद्घोषं श्रुत्वा[5]॥

अथ खल्वायुष्मान्शारिपुत्रस्तस्यां वेलायां भगवन्तमाभिर्गाथाभिरध्यभाषत॥ 5

आश्चर्यप्राप्तो ऽस्मि महाविनायक[6] औद्बिल्यजातो इमु घोष[7] श्रुत्वा।
कथंकथा मह्य न भूय काचित्परिपाचितो ऽहं इह[8] अग्रयाने॥ १॥
आश्चर्यभूतः सुगतान घोषः काङ्क्षां च शोकं च जहाति प्राणिनाम्।
क्षीणास्रवस्य मम यश्च शोको विगतो मि[9] सर्व श्रुणियान घोषम्॥ २॥
दिवाविहारं अनुचङ्क्रमन्तो[10] वनषण्ड आरामथ वृक्षमूलम्[11]। 10
गिरिकन्दरांश्चाप्युपसेवमानो अनुचिन्तयामि[12] इममेवचिन्ताम्॥ ३॥
अहो ऽस्मि परिवञ्चितु पापचित्तैस्तुल्येषु धर्मेषु अनास्रवेषु।
यन्नाम त्रैधातुकि अग्रधर्मं न देशयिष्यामि अनागते ऽध्वे॥ ४॥

---

1) दिवा K. दिवा परिणामयामि W. रात्रिदिवसान्य° O.
2) स्मि A. Ca. Cb. स्मिन् B. स्मिं K. W.
3) भगवन् left out in A. K. W.
4) निर्वृतः O.
5) सान्तिकाच्छ्रुत्वा O.
6) उ K. W.
7) षं B. Ca. Cb. ष K. W.
8) इमु A.
9) म A. मि B. Ca. Cb. स्मिं K. W. पि O.
10) हारं चानु A. हारमनु B. हाराममनु Cb. हारं च नु Ca. हानं चनु K. हानं चानु W.
11) Thus O.; मूलान् the rest.
12) All but O. मी.

द्वात्रिंशतीलक्षणा मह्य भ्रष्टा[1] सुवर्णवर्णाच्छविता[2] च भ्रष्टा।
बला विमोक्षाश्चिमि सर्वि रिञ्चिता तुल्येषु धर्मेषु ग्रहो ऽस्मि मूढः॥ ५॥
ग्रनुव्यञ्जना ये च महामुनीनामशीतिपूर्णाः प्रवरा विशिष्टाः।
ग्रष्टादशावेणिक ये च धर्मास्ते चापि भ्रष्टा ग्रहु वञ्चितो ऽस्मि॥ ६॥
5 दृष्ट्वा च त्वां लोकहितानुकम्पी[3] दिवाविहारं परिगम्य चैकः।
हा वञ्चितो ऽस्मीति विचिन्तयामि ग्रसङ्गज्ञानात् ग्रचिन्तियातः॥ ७॥
रात्रिंदिवानि[4] तपयामि नाथ भूयिष्ठ सो एव विचिन्तयन्तः।
पृच्छामि तावद्भगवन्तमेव[5] भ्रष्टो ऽहमस्मीत्यथ वा न वेति॥ ८॥
एवं च मे चिन्तयतो जिनेन्द्र गच्छन्ति रात्रिंदिव नित्यकालम्।
10 दृष्ट्वा च ग्रन्यान्बहु बोधिसत्त्वान्संवर्णितांल्लोकविनायकेन॥ ९॥
श्रुत्वा च सो ऽहं इमु बुद्धधर्मं संधाय एतत्किल भाषितं ति।
ग्रतर्किकं सूक्ष्ममनास्रवं च ज्ञानं प्रणेति[6] जिन बोधिमण्डे॥ १०॥
दृष्टीविलग्नो ह्यहमासि पूर्वं परिव्राजकस्तीर्थिकसंमतश्च।
ततो मम ग्राशयु ज्ञात्व नाथो दृष्टीविमोक्षाय ब्रवीति निर्वृतिम्॥ ११॥
15 विमुच्य ता दृष्टिकृतानि सर्वशः शून्यांश्च धर्मानहु स्पर्शयित्वा।
ततो विजानाम्यहु निर्वृतो ऽस्मि न चापि निर्वाणमिदं प्रबुध्यति[7]॥ १२॥

1) भ्रष्ट O., भ्रष्टाः and भ्राष्टाः the others.

2) All but O. विना.

3) I. e. Skr. °कम्पिन्. O. has °कम्पका.

4) ति Cb. K. W.

5) वा K. W.

6) All but O. ती.

7) प्रकत्थ्यते O. Undoubtedly an older reading had प्रवुच्यति, a Sanskrtised पवुच्चति.

यदा तु बुद्धो भवते ऽयसत्वः पुरस्कृतो नरमरूपनरागणैः ।
द्वात्रिंशतीलक्षणरूपधारो अशेषतो निर्वृतु भोति तत्र[1] ॥ १३ ॥
व्यपनीति[2] सर्वाणि[3] मि मन्यितानि श्रुत्वा च घोषं अद्यमद्य निर्वृतः ।
यदापि व्याकुर्वसि अग्रबोधौ पुरतो हि लोकस्य सदेवकस्य ॥ १४ ॥
बलवच्च आसीन्मम इञ्जितत्वं[4] प्रथमं गिरं श्रुत्व विनायकस्य । 5
मा हैव मारो स भवेद्विहेठको अभिनिर्मिनित्वा भुवि बुद्धवेषम् ॥ १५ ॥
यदा तु हेतूहि च कारणेभि दृष्टान्तकोटीनयुतैश्च दर्शिता ।
सुपरिस्थिता सा वरबुद्धबोधिस्ततो[5] ऽस्मि निष्काङ्क्ष श्रुणित्व धर्मम् ॥ १६ ॥
यदा च मे बुद्धसहस्रकोट्यः कीर्तिष्यतो[6] तान्परिनिर्वृताञ्जिनान् ।
यथा च तैर्देशितु एष धर्म उपायकौशल्य प्रतिष्ठिहित्वा ॥ १७ ॥ 10
अनागताश्चो[7] बहुबुद्ध लोके तिष्ठन्ति ये चो[7] परमार्थदर्शिनः ।
उपायकौशल्यशतैश्च धर्मं निदर्शयिस्यन्त्यथ देशयन्ति[8] च ॥ १८ ॥
यदा च ते आत्मन यादृशी चरी अभिनिष्क्रमित्वा प्रभृतीय[9] संस्तुता[10] ।

---

1) निर्वृति तत्र भोति O.

2) य A. K. W. त B. Ca. Cb.

3) नि A. सर्वं मम O.

4) चक्रेत्मितत्वं A. संचितत्वं B. चङ्भिनत्वं Ca. O. चक्रैतितत्वां Cb. इम्भितत्वं K. W.

5) धि A. B. Ca. K. W. धिं Cb. O. The Skr. Sandhi, of course, not original.

6) कीर्ति, O. कीर्ति the others.

7) च for चो O., rightly.

8) दर्शयंति A. B. Ca. Cb. देशयन्ति K. W.

9) अभिनिष्क्रमणात्प्रवृत्तो A. Cb. अ° प्रभूतो B. अ° प्रभृतो Ca. अ° प्रभूतो K. W. Our r. = O.

10) All but O. तः.

बुद्धं[1] च ते यादृशु धर्मचक्रं यथा च ते ऽवस्थित धर्मदेशना ॥ १९ ॥
ततश्च जानामि न एष मारो भूतां चरिं दर्शयि लोकनाथः ।
न ह्यत्र माराण गतीह विद्यते ममैव चित्तं विचिकित्सप्राप्तम् ॥ २० ॥
यदा तु मधुरेण गभीर[2]वल्गुना संहर्षितो बुद्धस्वरेण चाहम् ।
5 तदा मि विध्वंसित [3]सर्वसंशया विचिकित्स नष्टा च स्थितो ऽस्मि[4] ज्ञाने ॥ २१ ॥
निःसंशयं भेष्यि तथागतो ऽहं पुरस्कृतो लोकि सदेवकेस्मिन्[5] ।
संधाय वक्ष्ये इमु बुद्धबोधिं समादपेन्तो[6] बहुबोधिसत्त्वान् ॥ २२ ॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् । आरोचयामि ते शारिपुत्र प्रतिवेदयामि ते ऽस्य सदेवकस्य लोकस्य पुरतः समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः
10 प्रजायाः[6] पुरतो मया त्वं शारिपुत्र विंशतीनां बुद्धकोटी[7]नयुतशतसहस्राणामन्तिके[8] परिपाचितो ऽनुत्तरायां सम्यक्संबोधौ । मम च त्वं[9] शारिपुत्र दीर्घरात्रमनुशिक्षितो ऽभूत् । स त्वं शारिपुत्र बोधिसत्त्व[10]संमन्त्रितेन बोधिसत्त्वरहस्येनेह मम प्रवचन उपपन्नः । स त्वं शारिपुत्र बोधिसत्त्वाधिष्ठानेन तत्पौर्वकं चर्याप्रणिधानं बोधिसत्त्वसंमन्त्रितं बोधिसत्त्वरहस्यं न समनुस्मरसि । निर्वृतो[11] ऽस्मीति मन्यसे । सो ऽहं त्वां[11] शारिपुत्र पूर्वचर्याप्रणिधानज्ञानानुबो-

---

1) बुद्धश्च B.
2) MSS. गम्भीर.
3) सर्वि B.
4) स्मिं K. W.
5) कस्मिं K. कस्मि O. केस्मिन् the rest.
6) पिष्ये O.
7) left out in K. W.
8) न Ab. O. नि in other MSS.
9) सत्वं A. मम च त्वं B. Cb. स च त्वं K. W. मया च त्वं O.
10) स A. B. Ca. K. W. and it is left out in Cb. But see below.
11) अनिर्वृतो निर्वृतो O. All but O. स्तीति.

धमनुस्मारयितुकाम इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सूत्रान्तं महावैपुल्यं बोधिसत्त्वाववादं[1] सर्वबुद्धपरिग्रहं श्रावकाणां संप्रकाशयामि ॥

अपि खलु पुनः शारिपुत्र भविष्यसि त्वमनागते ऽध्वन्यप्रमेयैः कल्पैरचिन्त्यैरप्रमाणैर्[2] बहूनां तथागतकोटीनयुत[3]शतसहस्राणां सद्धर्मं धारयित्वा विविधां च पूजां कृत्वेममेव बोधिसत्त्वचर्यां परिपूर्य[4] पद्मप्रभो नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यसि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च[5] बुद्धो भगवान् ॥

तेन खलु पुनः शारिपुत्र समयेन तस्य भगवतः पद्मप्रभस्य तथागतस्य विरजं नाम बुद्धक्षेत्रं भविष्यति समं रमणीयं प्रासादिकं परमसुदर्शनीयं[6] परिशुद्धं च स्फीतं चर्द्धं च क्षेमं च सुभिक्षं च बहुजननारीगणाकीर्णं च[7] मरुप्रकीर्णं च वैडूर्यमयं सुवर्णसूत्राष्टापदनिबद्धम्। तेषु चाष्टापदेषु[8] रत्नवृक्षा भविष्यन्ति सप्तानां रत्नानां पुष्पफलैः सततसमितं समर्पिताः ॥

सो ऽपि शारिपुत्र पद्मप्रभस्तथागतो ऽर्हन्सम्यक्संबुद्धस्त्रीण्येव यानान्यारभ्य धर्मं देशयिष्यति । किंचापि शारिपुत्र स तथागतो न कल्पकषाये[9] उत्पत्स्यते । अपि तु प्रणिधानवशेन धर्मं देशयिष्यति ॥

---

1) The title in O. is constantly सूत्रं महावैतुल्यं बोधिसत्त्वोत्पादं.

2) अप्रमाणैर् left out in K. W.

3) न Cb. O. The others have नि.

4) परिपूरयित्वा A. K. W. O. परिपूर्य B. Ca. Cb.

5) O. has regularly देवमनुष्याणां, agreeing with Pāli *devamanussānam*.

6) प्रदर्श A. K. W. दर्श B. O. सुदर्श Ca. परमदर्श Cb.

7) बहुजनमनुष्याकीर्णं Cb. बहुनरदेवपरिपूर्णं च O, with omission of मरुप्रकीर्णं च. One MS. has बहुजनमरुप्रकीर्णं.

8) °पदीकृतं सर्वत्र चाष्टापदे O. Have we to r. तत्र चाष्टापदे?

9) B. adds काले.

महारत्नप्रतिमण्डितश्च नाम शारिपुत्र स कल्पो भविष्यति। तत्किं मन्यसे शारिपुत्र केन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते। रत्नानि[1] शारिपुत्र बुद्धक्षेत्रे बोधिसत्त्वा उच्यन्ते। ते तस्मिन्काले[2] तस्यां विरजायां लोकधातौ बहवो बोधिसत्त्वा भविष्यन्त्यप्रमेयासंख्येयाचिन्त्यातुल्यामाप्या गणनां[3] समतिक्रान्ता[4] अन्यत्र तथाग-
5 तगणनया। तेन कारणेन स कल्पो महारत्नप्रतिमण्डित इत्युच्यते॥

तेन खलु पुनः शारिपुत्र[5] समयेन बोधिसत्त्वास्तस्मिन्बुद्धक्षेत्रे यद्भूयसा[6] रत्नपद्मविक्रामिणो भविष्यन्ति। अनादिकर्मिकाश्च ते बोधिसत्त्वा भविष्यन्ति चिरचरितकुशलमूला बहुबुद्धशतसहस्रचीर्णब्रह्मचर्यास्तथागतपरिसंस्तुता[7] बुद्धज्ञानाभियुक्ता महाभिज्ञापरिक[8]र्मनिर्जाताः[9] सर्वधर्मनयकुशला[10] मार्दवाः स्मृतिमन्तः। भूयिष्ठेन[11] शारिपुत्रैवंरूपाणां बोधिस-
10 त्त्वानां परिपूर्णं तद्बुद्धक्षेत्रं भविष्यति॥

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य द्वादशान्तरकल्पा आयुष्प्रमाणं[12] भविष्यति स्थापयित्वा कुमारभूतत्वम्। तेषां च सत्त्वानामष्टान्तरकल्पा आयुष्प्रमाणं भवि-

---

1) रत्नं A. B. Ca. Cb. W., left out in K. रत्नानि O.

2) B. adds तस्मिन्समये, then reads तस्मि विरजासि. O has कल्पे for काले.

3) MSS. ना.

4) वीतिवृत्ता O. Cp. Pāli *vītivatta*.

5) शारिपुत्र is put in after समयेन in A. K. W.

6) भूयसो O.

7) र्णाः A. W. र्ण Cb. र्णाः K. चरित B.

8) भियुक्ता महाभिज्ञा left out in A. यान for ज्ञान O. ज्ञाना W.

9) कार्य B.

10) कुशलमूला B.

11) भूयस्त्वेन B. भूयिष्ठं O.

12) कल्पमायु A. K. W. कल्पा आयु B. Cb. कल्पनायु O.

ष्यति[1]। स च शारिपुत्र पद्मप्रभस्तथागतो द्वादशानामन्तर[2]कल्पानामत्ययेन धृतिपरिपूर्णो नाम बोधिसत्त्वं महासत्त्वं व्याकृत्या[3]नुत्तरायां सम्यक्संबोधौ परिनिर्वास्यति। अयं भिक्षवो धृतिपरिपूर्णो बोधिसत्त्वो महासत्त्वो ममानन्तर[4]मनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। पद्मवृषभविक्रामी[5] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। 5
तस्यापि शारिपुत्र पद्मवृषभविक्रामिणस्तथागतस्यैवंरूपमेव बुद्धक्षेत्रं भविष्यति॥

तस्य खलु पुनः शारिपुत्र पद्मप्रभस्य तथागतस्य परिनिर्वृतस्य द्वात्रिंशदन्तरकल्पान्सद्धर्मः[6] स्थास्यति। ततस्तस्य तस्मिन्सद्धर्मक्षीणे द्वात्रिंशदन्तरकल्पान्सद्धर्मप्रतिरूपकः स्थास्यति॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥ 10

भविष्यसे शारिसुता तुवं पि[7] अनागते ऽध्वानि जिनस्तथागतः।
पद्मप्रभो नाम समन्तचक्षु[8]र्विनेष्यसे प्राणिसहस्रकोट्यः॥ २३॥
बहुबुद्धकोटीषु करित्व सत्क्रियां[9] चर्याबलं तत्र उपार्जयित्वा।
उत्पादयित्वा च दशो[10] बलानि स्पृशिष्यसे उत्तममग्रबोधिम्॥ २४॥

---

1) From स्थापयित्वा till भविष्यति left out in B. कल्पाना O.

2) दशान्तर Cb.

3) त्वा A. Ca. Cb. K. W. त्या B.

4) MSS. ममान्तरम° and ममान्तराद°.

5) क्रमो O. So too in the sequel.

6) A. K. W. add प्रति.

7) सुतानुकम्पी Cb. Cp. Kern's English version, p. 68 note 2.

8) चक्षुः in all MSS.

9) यां A. याम् K. W. यान् Cb. पूजां B.

10) दशब्व Cb.

अचिन्तिये अपरिमितस्मिं[1] कल्पे प्रभूतरत्नस्तद कल्पु[2] भेष्यति।
विरजा[3] च नामा[4] तद लोकधातुः क्षेत्रं विशुद्धं द्विपदोत्तमस्य॥ २५॥
वैडूर्यसंस्तीर्ण[5] तथैव भूमिः सुवर्णसूत्रप्रतिमण्डिता च।
रत्नामयैर्वृक्षशतैरुपेता सुदर्शनीयैः फलपुष्पमण्डितैः॥ २६॥
5 स्मृतिमन्त तस्मिन्[6] बहुबोधिसत्त्वाः चर्याभिनिर्हारसुकोविदाश्च।
ये शिक्षिता बुद्धशतेषु चर्या ते तत्र क्षेत्रे उपपद्य सन्ति॥ २७॥
सो चन्तिजिनः[7] पश्चिमके समुच्छ्रये कुमारभूमीमतिनामयित्वा।
जहित्व कामानभिनिष्क्रमित्वा स्पृशिष्यते उत्तममग्रबोधिम्॥ २८॥
सम द्वादशा[8] अन्तरकल्प तस्य भविष्यते आयु तदा[9] जिनस्य।
10 मनुजानमभ्यन्तर[10]कल्प अष्ट आयुष्प्रमाणं तहि तेष भेष्यति॥ २९॥
परिनिर्वृतस्यापि जिनस्य[11] तस्य द्वात्रिंशती[12] अन्तरकल्पपूर्णाम्।
सद्धर्म संस्थास्यति तस्मि[13] काले हिताय लोकस्य सदेवकस्य॥ ३०॥

---

1) स्मिं A. K. W.

2) ल्प A. B.

3) जा A. B. Ca. Cb. O. जो K. W.

4) नामा O. नाम्नस्त° the others.

5) All but O. संतीर्ण.

6) तत्र A. B. K. W. O.

7) सचेज्जिनः A. K. W. सचञ्जिनः B. सो पिञ्जिनः Ca. सो जिनः Cb. स च जिनः O.

8) शाद् B. शाभ्य O.

9) स A. K. W. त Cb. left out in B. तत्र O.

10) Thus O.; the others ज्ञानयी अन्त°.

11) तथाग Cb.

12) द्वाविंश O. तो in all.

13) स्मिं A. K. W. स्मि B. O. तत्र Cb.

सद्धर्मि[1] तीणि प्रतिरूपको स्य[2] द्वात्रिंशती अन्तरकल्प स्थास्यति।
शरीरवैस्तारिक तस्य तायिनः सुसत्कृतो नरमरुतैश्चनित्यम्॥ ३१॥
एतादृशः सो भगवान्भविष्यति प्रहृष्ट त्वं शारिसुता भवस्व।
त्वमेव सो तादृशको भविष्यसि अनाभिभूतो द्विपदानमुत्तमः[3]॥ ३२॥

अथ खलु तास्तनम्राः पर्षदो भिक्षुभिक्षुण्युपासकोपासिकादेवनागयक्षगन्धर्वासुरग- 5
रुडकिंनरमहोरगमनुष्यामनुष्या[4] आयुष्मतः शारिपुत्रस्येदं व्याकरणमनुत्तरायां सम्यक्सं-
बोधौ भगवतो ऽन्तिकात्संमुखं श्रुत्वा तुष्टा उदग्रा आत्तमनसः[5] प्रमुदिताः प्रीतिसौमनस्य-
जाताः स्वकस्वकैश्चीवरैर्भगवन्तमभिच्छादयामासुः। शक्रश्च देवानामिन्द्रो ब्रह्मा च सहां-
पतिरन्याश्च देवपुत्रशतसहस्रकोट्यो भगवन्तं दिव्यैर्वस्त्रैरभिच्छादयामासुः। दिव्यैश्च मा-
न्दारवैर्महा[6]मान्दारवैश्च पुष्पैरभ्यवकिरन्ति स्म। दिव्यानि च वस्त्राण्युपर्यन्तरीक्षे भ्रामय- 10
न्ति स्म। दिव्यानि च तूर्यशतसहस्राणि दुन्दुभयश्चोपर्यन्तरीक्षे पराहनन्ति[7] स्म। महन्तं
च पुष्पवर्षमभिप्रवर्षयित्वैवं च वाचं भाषन्ते स्म। पूर्वं भगवता वाराणस्यामृषिपतने मृग-
दावे धर्मचक्रं प्रवर्तितमिदं पुनर्भगवताद्यानुत्तरं द्वितीयं धर्मचक्रं प्रवर्तितम्॥

ते च देवपुत्रास्तस्यां वेलायामिमा गाथा अभाषन्त॥

धर्मचक्रं प्रवर्तेसि लोके अप्रतिपुद्गल[8]। 15
वाराणस्यां महावीर स्कन्धानामुदयं व्ययम्॥ ३३॥

---

1) Thus O.; the others धर्म.

2) All but O. कस्य

3) उ B. O.

4) ण्यशतश्च A. K. ण्यश्च शतश्च W. ण्यशतसहस्राणि O.

5) मनस्का A. K. W.

6) रवमहा B. Cb.

7) पराघ्नंति A. B. Ca. Cb. पराहनन्ति K. W. पराहनितमु O.

8) लः A. K. W.

प्रथमे प्रवर्तितं तत्र द्वितीयमिह नायक ।
दुःश्रद्धेय यस्तेषां[1] देशितो ऽद्य विनायक[2] ॥ ३४ ॥
बहुधर्मः श्रुतो ऽस्माभिर्लोकनाथस्य[3] संमुखम् ।
न चायमीदृशो धर्मः श्रुतपूर्वः कदाचन ॥ ३५ ॥
5 अनुमोदाम महावीर संधाभाष्यं महर्षिणाम् ।
यथार्यो[4] व्याकृतो ह्येष शारिपुत्रो विशारदः ॥ ३६ ॥
वयमप्येदृशाः स्यामो बुद्धा लोके अनुत्तराः ।
संधाभाष्येण[5] देशेन्तो बुद्धबोधिमनुत्तराम् ॥ ३७ ॥
यच्छ्रुतं कृतमस्माभिरस्मिँल्लोके[6] परत्र वा ।
10 आरागितञ्च[7] यद्बुद्धः[8] प्रार्थना भोतु बोधये ॥ ३८ ॥

अथ खल्वायुष्माञ्छारिपुत्रो भगवन्तमेतदवोचत् । निष्काङ्क्षो ऽस्मि भगवन्विगतकथंकथो भगवतो ऽन्तिकात्संमुखमिदमात्मनो व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधौ । यानि चेमानि भगवन्द्वादश वशीभूतशतानि भगवता पूर्वं शैक्षभूमौ स्थापितान्येवमव[9]वदितान्येवमनुशिष्टान्यभूवन् । एतत्पर्यवसानो मे भिक्षवो धर्मविनयो यदिदं जातिजराव्या-

1) दुःश्रद्धधेयो यदन्येषां A. दुश्रद्दयो यमन्येष्यन् B. दुःश्रद्देयो यस्तेषां Cb. दुःश्रद्धेयं । यदन्यषां K. दुःश्रद्दधेयं यदन्येषां W. दुःश्राद्वेयमिदं धर्म O.

2) देशितं अद्य शास्तृणां (r. शास्तृणा) O. Perhaps the whole to r. दुःश्रद्धेयं यदन्येषां देशिताद्य (i. e. देशितमद्य) विनायक.

3) स्माकं लो K. W.

4) यथा यो A. B. K. W. यथार्यो Ca. Cb.

5) संधाय K. W.

6) स्मिं लोके A. Ca. Cb. K. W. स्मिन्लोके B.

7) आराधित O.

8) All but O. संबुद्धः.

9) All but O. एव.

धिमरणशोकसमतिक्रमो निर्वाणसमवसरणः[1]। इमे च भगवन्द्वे भिक्षुसहस्रे शैक्षाशैक्षाणां[2] भगवतः श्रावकाणां सर्वेषामात्मदृष्टिविभवदृष्टिसर्वदृष्टिविवर्जितानां[3][4] निर्वाणभूमिस्थिता स्म इत्यात्मानं संजानन्तः ते भगवतो ऽन्तिकादिममेवंरूपमश्रुतपूर्वं[5] धर्मं श्रुत्वा कथंकथामापन्नाः। तत्साधु भगवान्भाषतामेषां[6] भिक्षूणां कौकृत्यविनोदनार्थं यथा[7] भगवन्निमाश्चतस्रः[8] पर्षदो निष्काङ्क्षा निर्विचिकित्सा भवेयुः[9]॥ 5

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। ननु ते मया शारिपुत्र पूर्वमेवाख्यातं यथा नानाभिनिर्हारनिर्देशविविधहेतुकारणनिदर्शनारम्बणनिरुक्त्युपायकौशल्यै[10]र्नानाधिमुक्तानां सत्त्वानां नानाधात्वाशयानामाशयं विदित्वा तथागतो ऽर्हन्सम्यक्संबुद्धो धर्मं देशयति। इमामेवानुत्तरां सम्यक्संबोधिमारभ्य सर्वधर्मदेशनाभिर्बोधिसत्त्वयानमेव समादापयति[11]। अपि तु खलु पुनः शारिपुत्रौपम्यं ते करिष्यामि अस्यैवार्थस्य भूयस्या[12] 10 मात्रया संदर्शनार्थम्। तत्कस्य हेतोः। उपमयेहैकत्या[13] विज्ञपुरुषा भाषितस्यार्थमाजानन्ति॥

---

1) व्याधि in Cb. O. only.

2) शैक्षा left out in B. K. W.

3) विभवदृष्टि left out in K. W.

4) सत्व B.

5) All दृ.

6) भाष त्वमेषां A. भाषतामेवं एषां B. भाषतामेषां Cb. भाषस्व त्वमेषः K. W.

7) Left out in K. W.

8) वाश्चिमाश्च A. वनिमां च K. W.

9) विहरेयुः A. K. W.

10) निर्देश A. K. W.

11) तीति B.

12) भूयसो O.; cp. Pāli *bhiyoso.*

13) All but O. एकया.

तद्यथापि नाम शारिपुत्रेह स्यात्कस्मिंश्चिदेव ग्रामे वानगरे वा निगमे वा जनपदे [1]वा [1]जनपदप्रदेशे वा राष्ट्रे वा राजधान्यां वा गृहपतिर्जीर्णो वृद्धो महल्लको ऽभ्यतीतवयोऽनुप्राप्त आढ्यो [2]महाधनो महाभोगः । महच्चास्य निवेशनं भवेदुच्छ्रितं च विस्तीर्णं च चिरकृतं च जीर्णं च द्वयोर्वा त्रयाणां वा चतुर्णां वा पञ्चानां वा प्राणिशतानां[3]-
5 मावासः । एकद्वारं च तन्निवेशनं [4]भवेत् । तृणसंछन्नञ्च भवेत् । विगडितप्रासादं च भवेत् । पूतिस्तम्भमूलं च भवेत् । संशीर्ण[5]कुड्यकटलेपनं च भवेत् । तच्च सहसैव महताग्निस्कन्धेन सर्वपार्श्वेषु सर्वावन्तं [6]निवेशनं [6]प्रदीप्तं भवेत् । तस्य च पुरुषस्य बहवः कुमारकाः स्युः पञ्च वा दश वा विंशतिर्वा स च [7]पुरुषस्तस्मान्निवेशनाद्बहिर्निर्गतः स्यात् ॥

अथ खलु शारिपुत्र स पुरुषस्तं स्वकं निवेशनं महताग्निस्कन्धेन समन्तात्संप्रज्व-
10 लितं दृष्ट्वा भीतस्त्रस्त उद्विग्नचित्तो भवेदेवं चानुविचिन्तयेत्प्रतिबलो ऽहमनेन महताग्निस्कन्धेनासंस्पृष्टो ऽपरिदग्धः क्षिप्रमेव स्वस्तिनास्माद्गृहादादीप्ताद्द्वारेण निर्गन्तुं निर्धावितुम् । अपि तु [8]य इमे ममैव पुत्रा बालकाः कुमारका अस्मिन्नेव निवेशन आदीप्ते तैस्तैः क्रीडनकैः क्रीडन्ति रमन्ति [9]परिचारयन्ति [10]। इमं चागारमादीप्तं न जानन्ति न बुध्यन्ते न विदन्ति न चेतयन्ति नोद्वेगमापद्यन्ते । संतप्यमाना अप्यनेन महताग्निस्कन्धेन महता च
15 दुःखस्कन्धेन स्पृष्टाः समाना न दुःखं मनसि कुर्वन्ति । नापि निर्गमनमनसिकारमुत्पादयन्ति ॥

1) Left out in K. W.
2) महान्तं चास्य A. B. K. W. महन्तं चास्य O.
3) K. W. add क.
4) In Cb. only.
5) सज्ञीर्ण A. संसीर्ण B. संकीर्ण Cb. संशीर्ण K. O. संजीर्ण W.
6) Left out in B. O.
7) सचेत्पु A. K. W. स च पु B. Ca. Cb.
8) B. adds खलु पुनर् O. खलु.
9) Better would be रमन्ते, the reading later on.
10) Left out in K. W.

स च शारिपुत्र पुरुषो बलवान्भवेद्बाहुबलिकः । स एवमनुविचिन्तयेदहमस्मि बलवान्बाहुबलिकश्च । यन्वहं सर्वानिमान्कुमारकान्[1] [2]एकपिण्डयित्वोत्सङ्गेनादायास्माद्गृहान्निर्गमयेयम् । स पुनरेवमनुविचिन्तयेत् । इदं खलु निवेशनमेकप्रवेशं संवृतद्वारमेव कुमारकाश्चपलाश्चञ्चला बालजातीयाश्च मा हैव परिभ्रमेयुः । ते ऽनेन महताग्निस्कन्धेनानयव्यसनमापद्येरन् । यन्नूनमहमेतान्संचोदयेयमिति प्रतिसंख्याय तान्कुमारकानामन्त्रयते 5 स्म । आगच्छत[3] भवन्तः[4] कुमारका निर्गच्छत[5] । आदीप्तमिदं गृहं महताग्निस्कन्धेन । मा हैवात्रैव सर्वे ऽनेन महताग्निस्कन्धेन धक्ष्यथानयव्यसनमापत्स्यथ[6] ॥ अथ खलु ते कुमारका एवं तस्य हितकामस्य पुरुषस्य तद्भाषितं नावबुध्यन्ते नोद्विजन्ति नात्त्रसन्ति न संत्रसन्ति[7] न संत्रासमापद्यन्ते न विचिन्तयन्ति न निर्धावन्ति नापि जानन्ति[8] न विजानन्ति किमेतदादीप्तं नामेति । अन्यत्र तेन तेनैव धावन्ति विधावन्ति पुनः पुनश्च तं पितरमवलोकयन्ति । तत्कस्य हेतोः । यथापीदं बालभावत्वात् ॥ 10

अथ खलु स पुरुष एवमनुविचिन्तयेत् । आदीप्तमिदं निवेशनं महताग्निस्कन्धेन संप्रदीप्तं मा हैवाहं चेमे च कुमारका इहैवानेन महताग्निस्कन्धेनानय[9]व्यसनमापत्स्यामहे । यन्वहमुपायकौशल्येनेमान्कुमारकानस्माद्गृहान्निष्क्रामयेयम्[10] । स च पुरुषस्तेषां कुमारकाणामाशयज्ञो भवेदधिमुक्तिं च विजानीयात् । तेषां च कुमारकाणामनेकविधान्य- 15

---

1) सर्वाणीमानि O. सर्वाणिमां the rest.

2) All यान्ये.

3) थ A. O.

4) भगवन्तः कुमारकाहो O.

5) थ A. K. W. O. त Cb.

6) A. K. W. add ये खलु पुनः व्यसनमापत्स्यधं. O. has याह (r. दाह)मामाद्यानगाद्यसनमापत्स्यथेति. The correct Skr. form is °ध्ये.

7) Left out in K. W.

8) न तुलयन्ति O.

9) नया व्यसना व्य O.

10) निष्कामयेयं O. Cp. p. 76, l. 10.

नेकानि क्रीडनकानि[1] भवेयुर्विविधानि[2] च रमणीयकानीष्टानि[3] कान्तानि प्रियाणि मनआ-पानि[4] तानि च दुर्लभानि भवेयुः। अथ खलु स पुरुषस्तेषां कुमारकाणामाशयं ज्ञानंस्ता-न्कुमारकानेतदवोचत्। यानि तानि कुमारका युष्माकं क्रीडनकानि रमणीयकान्याश्च-र्याद्भुतानि येषामलाभात्संतप्यथ[5] नानावर्णानि बहुप्रकाराणि। तद्यथा गोरथकान्यजरथ[6][7]-
5 कानि[7] मृगरथकानि[7]। यानि भवतामिष्टानि कान्तानि प्रियाणि मनआपानि तानि च मया सर्वाणि बहिर्निवेशनद्वारे स्थापितानि युष्माकं क्रीडनहेतोः। आगच्छन्तु भवन्तो निर्धा-वन्त्वस्मान्निवेशनाद्हं वो यस्य यस्य येनार्थो येन प्रयोजनं भविष्यति तस्मै तस्मै तत्प्र-दास्यामि। आगच्छत[8] शीघ्रं तेषां कारणं निर्धावत[9]। अथ खलु ते कुमारकास्तेषां क्रीडन-कानां रमणीयकानामर्थाय[10] यथेप्सितानां यथासंकल्पितानामिष्टानां कान्तानां प्रियाणां
10 मनआपानां नामधेयानि श्रुत्वा तस्मादादीप्तादगारात्क्षिप्रमेवारब्धवीर्या[11] बलवता जवेना-न्योन्यमप्रतीक्षमाणाः कः प्रथमं कः प्रथमतरमित्यन्योन्यं संघट्टितकायास्[12]तस्मादादीप्ता-दगारात्क्षिप्रमेव निर्धाविताः॥

---

1) डापन Ca. O.

2) From भवेयु till कानि left out in A. K. W. क left out in Ca. रमणीय-कानि left out in A. K. W.

3) From कान्तानि till भवतामिष्टानि left out in A.

4) मनापानि B. Cb. O. K. W. मनआपानि Ca.

5) घे K. W. संतापमापद्यथ O.

6) गोन B.

7) नि left out in B. Cb.

8) च्छथ A. K. W. O. च्छन्त B. च्छन्त Cb.

9) थ Cb. O.

10) अर्थाय left out in K. W.

11) All but O. °लब्ध.

12) या त A. K. W. योस्त B. यां त Cb.

अथ स पुरुषः क्षेमस्वस्तिना तान्कुमारकान्निर्गतान्[1] दृष्ट्वाभयप्राप्तानिति विदित्वा[2] आकाशे ग्रामचत्वरे उपविष्टः प्रीतिप्रामोद्यजातो निरुपादानो विगतनिवरणो[3] ऽभयप्राप्तो भवेत्। अथ खलु ते कुमारका येन स पिता तेनोपसंक्रामन्नु[4]पसंक्रम्यैवं वदेयुः। देहि नस्तात तानि विविधानि क्रीडनकानि रमणीयानि[5]। तद्यथा गोरथकान्य[6]जरथकानि मृगरथकानि। अथ खलु शारिपुत्र स पुरुषस्तेषां स्वकानां पुत्राणां वातजवसंपन्नान्गोरथकानेवानुप्रयच्छेत्सप्तरत्नमयान्सवेदिकान्सकिङ्किणीजालाभिप्रलम्बितानुच्चान्प्र[7]गृहीतानाश्चर्याद्भुतरत्नालंकृतान्रत्नदामकृतशोभान्पुष्पमाल्यालंकृतांस्तूलिकागोणिकास्तरणान्दूष्यपट्टप्रत्यास्तीर्णा[8]नुभयतो लोहितोप[9]धानाञ्श्वेतैः प्रपाण्डरैः शीघ्रजवैर्गोणैर्योजितान्[10]बहुपुरुषपरिगृहीतान्सवैजयन्तान्। गोरथ[11]कानेव वातबलजवसंपन्नानेकवर्णानेकविधानेकैकस्य दारकस्य दद्यात्। तत्कस्य हेतोः। तथा हि[12] शारिपुत्र स पुरुष आढ्यश्च भवेन्महाधनश्च प्रभूतकोशकोष्ठागारश्च। स[13] एवं पश्येत्[14]। अलं म एषां कुमारकाणामन्यैर्यानैर्दत्तै[15]रिति।

1) निर्गतान् left out in B. परिमुक्ता O.

2) वा B.

3) नी O.; the form constantly used in Mahāvastu, agreeing with Pāli *nivarana*.

4) उपसंक्रामन् in B. Cb. only. उपसंक्रमेयुरुपसंक्रमित्वा O.

5) O. has better यमानि; cp. above p. 74.

6) गोन B.

7) च्चात्प्र A. च्चा प्र B. K. W. च्चान्प्र Cb.

8) प्रत्यातो A. K. W. वस्त्रास्तो B. प्रत्यास्तो Cb. O.

9) हितकृता A. K. W.

10) योजितां A. B. योजयित्वा Cb. O. योजयितां K. W.

11) गोणा Cb.

12) Left out in K. W.

13) In K. W. only.

14) मन्येद° O. B.

15) नैदत्ते A. Cb. K. W. नैदाते B. नैर्दत्तैस्त O.

तत्कस्य हेतोः। सर्व एवैते कुमारका ममैव पुत्राः सर्वे च मे प्रिया मनआपाः[1]। संविद्यन्ते च मे[2] इमान्येवंरूपाणि महायानानि समं च मयैते कुमारकाः सर्वे चिन्तयितव्या न विषमम्। अहमपि बहुकोशकोष्ठागारः सर्वसत्त्वानामप्य[3]हमिमान्येवंरूपाणि महायानानि दद्याम्। किमङ्ग पुनः स्वकानां पुत्राणाम्। ते च दारकास्तस्मिन्समये तेषु महायानेष्वभिरूढाश्च-

5 र्याद्भुतप्राप्ता भवेयुः। तत्किं मन्यसे शारिपुत्र मा हैव तस्य पुरुषस्य मृषावादः स्याद्येन तेषां दारकाणां पूर्वं त्रीणि यानान्युपदर्शयित्वा पश्चात्सर्वेषां[4] महायानान्येव दत्तान्युदारया-नान्येव दत्तानि॥

शारिपुत्र[5] आह[5]। न ह्येतद्भगवन्[6] ह्येतत्सुगत। अनेनैव तावद्भगवन्कारणेन स पुरुषो न मृषावादी भवेद्यत्तेन पुरुषेणोपायकौशल्येन ते दारकास्[7]तस्मादादीप्ताद्गृहान्नि-

10 ष्कासिता[8] जीवितेन चाभिच्छादिताः। तत्कस्य हेतोः। आत्मभावप्रतिलम्भेनैव भगवन्स-र्वक्रीडनकानि लब्धानि भवन्ति। यद्यपि[9] तावद्भगवन्स पुरुषस्तेषां कुमारकाणामेकरथ-मपि न दद्यात्तथापि तावद्भगवन्स पुरुषो न[10] मृषावादी भवेत्। तत्कस्य हेतोः। तथा हि भगवंस्तेन पुरुषेण पूर्वमेवै[11]वमनुविचिन्तितमुपायकौशल्येनाहमिमान्कुमारकांस्[12]तस्मान्महतो दुःखस्कन्धात्परिमोचयिष्यामीति। अनेनापि भगवन्पर्यायेण तस्य पुरुषस्य न मृषावादो

---

1) मनापाः in all MSS. for मनआपाः.

2) मे in all MSS.

3) सत्त्वेभ्यो B.

4) सर्वेभ्यो B.

5) Left out in Cb.

6) Left out in K. W.

7) कुमारका B. Cb. बालदारका O.

8) निष्कामिता O. Cp. p. 73, l. 14.

9) All but O. यद्यदि.

10) In B. K. only. नं A.

11) एव in K. W. only.

12) MSS. कान्त.

भवेत्। कः पुनर्वादो यत्तेन पुरुषेण प्रभूतकोशकोष्ठागारमस्तीति कृत्वा पुत्रप्रियतामेव मन्यमानेन श्लाघमानेनैकवर्णान्येकयानानि दत्तानि यदुत[1] महायानानि। नास्ति भगवंस्तस्य पुरुषस्य मृषावादः॥

एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत्। साधु साधु शारिपुत्र। एवमेतच्छारिपुत्र। एवमेतद्यथा वदसि। एवमेव[2] शारिपुत्र तथागतो[3] ऽर्हन्सम्यक्संबुद्धः सर्वभयविनिवृत्तः सर्वोपद्रवोपायासोपसर्गदुःखदौर्मनस्याविद्यान्धकारतमस्तिमिरपटलपर्यवनाहेभ्यः सर्वेण सर्वं[4] सर्वथा विप्रमुक्तः। तथागतो ज्ञानबलवैशारद्यावेणिकबुद्धधर्मसमन्वागत ऋद्धिबलेनातिबलवाँल्लोकपिता महोपायकौशल्यज्ञान[5]परमपारमिताप्राप्तो महाकारुणिको ऽपरिखिन्नमानसो हितैष्यनुकम्पकः। स[6] त्रैधातुके महतो[7] दुःखदौर्मनस्यस्कन्धेनादीप्त[8]जीर्णपटलशरणनिवेशनसदृश उत्पद्यते सत्त्वानां जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासाविद्यान्धकारतमस्तिमिरपटलपर्यवनाहप्रतिष्ठानां रागद्वेषमोहपरिमोचनहेतोरनुत्तरायां सम्यक्संबोधौ समादापनहेतोः। स उत्पन्नः[9] समानः पश्यति सत्त्वान्दह्यतः पच्यमानांस्तप्यमानान्परितप्यमानाञ्जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासैः परिभोगनिमित्तं च कामहेतुनिदानं चानेकविधानि दुःखानि प्रत्यनुभवन्ति। दृष्टधार्मिकं च पर्येष्टि[10]निदानं परिग्रहनिदानं च सांपरायिकं नरकतिर्यग्योनियमलोकेष्वनेक-

---

1) यदिदं Cb. O.

2) एवं A. K. W. एवमेव B. Cb.

3) A. K. W. add एव.

4) Left out in K. W.

5) ज्ञान left out in Cb. K. शल्येन K. ज्ञानदर्शन O.

6) सर्व A. W.

7) त left out in A. K. W.

8) तेन A. K. W. स B. सो Cb.

9) समुत्प A. K. W. स उप B. सदुन्प Cb.

10) पर्याष्ट K. W.

विधानि दुःखानि प्रत्यनुभविष्यन्ति[1]। देवमनुष्यदारिद्र्यमनिष्टसंप्रयोगमिष्टविनाभावविकारानि च दुःखानि प्रत्यनुभवन्ति। तत्रैव च दुःखस्कन्धे परिवर्तमानाः क्रीडन्ति रमन्ते परिचारयन्ति नोत्त्रसन्ति न संत्रसन्ति न संत्रासमापद्यन्ते न बुध्यन्ते न चेतयन्ति[2] नोद्विजन्ति न निःसरणं[3] पर्येषन्ते तत्रैव चादीप्तागारसदृशे त्रैधातुके ऽभिरमन्ति तेन तेनैव विधावन्ति।
5 तेन च महता दुःखस्कन्धेनाभ्याहता न दुःखमनसिकारसंज्ञामुत्पादयन्ति ॥

तत्र शारिपुत्र तथागत एवं पश्यति। अहं खल्वेषां सत्त्वानां पिता। मया ह्येते सत्त्वा अस्मादेवंरूपान्महतो दुःखस्कन्धात्परिमोचयितव्या मया चैषां[4] सत्त्वानामप्रमेयमचिन्त्यं बुद्धज्ञानसुखं दातव्यं येनैते सत्त्वाः क्रीडिष्यन्ति रमिष्यन्ति परिचारयिष्यन्ति विक्रीडितानि च[5] करिष्यन्ति ॥

10 तत्र शारिपुत्र तथागत एवं पश्यति। सचेदहं ज्ञानबलो ऽस्मीति कृत्वर्द्धिबलो ऽस्मीति कृत्वानुपायेनैषां सत्त्वानां तथागतज्ञान[6]बलवैशारद्यानि संश्रावयेयं नैते सत्त्वा एभिर्धर्मैर्निर्यायेयुः। तत्कस्य हेतोः। अध्यवसिता ह्यमी सत्त्वाः पञ्चसु कामगुणेषु[7] त्रैधातुक[8]रत्यामपरिमुक्ता जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यो दह्यन्ते पच्यन्ते तप्यन्ते परितप्यन्ते[9]। अनिर्धावितास्त्रैधातुकादादीप्तजीर्णपटलशरणनिवेशनसदृशा[10]-
15 त्कथमेते बुद्धज्ञानं परिभोत्स्यन्ते[11] ॥

---

1) भवन्ति A. Ca. Cb. K. W. भविष्यन्ति B.
2) चिन्तयन्ति O.
3) निश A. K. निस B. निःश Cb. W. निस्स O.
4) चेभ्यः सत्वेभ्य अप्र B.
5) In Cb. K. only.
6) ज्ञान left out in K. W. ज्ञानदर्शन O.
7) A. K. W. add अध्यवसिता ह्यमी सत्त्वाम्.
8) के K. W. Cb.
9) Left out in W.
10) Thus O., agreeing with p. 79, l. 9—10. The others have दीप्तशरणपटलनि°.
11) बुद्धेयुस्तत्र O.

तत्र शारिपुत्र तथागतो [1]यद्यथापि नाम स पुरुषो बाहुबलिकः स्थापयित्वा बा-
हुबलमुपायकौशल्येन तान्कुमारकांस्तस्मादादीप्तादगारान्निष्कामये[2]न्निष्कामयि[3]त्वा च तेषां
पश्चादुदाराणि महायानानि[4] दद्यात्[5] एवमेव शारिपुत्र तथागतो ऽर्हन्सम्यक्संबुद्धः
तथागतज्ञानबलवैशारद्यसमन्वागतः स्थापयित्वा तथागतज्ञान[6]बलवैशारद्यमुपायकौशल्य-
ज्ञानेनादीप्ताज्जीर्णपटलशरणनिवेशनसदृशात्त्रैधातुकात्सत्त्वानां निष्कासनहेतोस्त्रीणि याना- 5
न्युपदर्शयति यदुत[7] श्रावकयानं प्रत्येकबुद्धयानं बोधिसत्त्वयानमिति । त्रिभिश्च यानैः
सत्त्वाँल्लोभयत्येवं चैषां वदति । मा भवन्तो ऽस्मिन्नादीप्तागारसदृशे त्रैधातुके ऽभि[8]रमध्वं ही-
नेषु रूपशब्दगन्धरसस्पर्शेषु । अत्र हि यूयं त्रैधातुके ऽभिरताः पञ्चकामगुणसहगतया
तृष्णया दह्यध्व तप्यध्व परितप्यध्व[9] । निर्धावध[10]मस्मात्त्रैधातुकात्त्रीणि यानान्यनुप्राप्स्यथ[11]
यदिदं श्रावकयानं प्रत्येकबुद्धयानं बोधिसत्त्वयानमिति । अहं वो ऽत्र स्थाने प्रतिभूरहं 10
वो[12] दास्याम्येतानि त्रीणि यानान्यभियुज्य[13]ध्वे त्रैधातुकान्निःसरणहेतोः । एवं चैताँल्लोभ-
यामि । एतानि भोः सत्त्वा यान्यार्याणि चार्यप्रशस्तानि[14] च महारमणीयकसमन्वागतानि चा-

---

1) In O. तद्यथा.

2) ष्कासितानि नि A. ष्कामये नि B. ष्कासये नि Cb. ष्कासितानि नि K. ष्कामितानि नि W. ष्कामयति O.

3) ष्काम्य चैतेभ्यः कुमारेभ्य पश्चा B. ष्कामयित्वा O.

4) दारान्महायानानिव B.

5) °ह्ये A. Ca. Cb. W. त् । ए B.

6) ज्ञान left out in B. Cb. ज्ञानदर्शन O.

7) यदिदं B. Cb. O.

8) भि in A. O. only. °ध्व O.

9) In B. O. only.

10) ध्वम् A. त B. K. W. थ Cb. निर्धापय O.

11) Thus O. °प्राप्नुवन्ति the others.

12) Left out in K. W.

13) ध्व Cb. O. Correct would be ध्वं.

14) Left out in A. Cb.

कृपणैरेतैर्भवन्तः क्रीडिष्यथ रमिष्यथ परिचारयिष्यथ । इन्द्रियबलबोध्यङ्गध्यानविमोक्षसमाधिसमापत्तिभिश्च महतीं रतिं प्रत्यनुभविष्यथ । महता च सुखसौमनस्येन समन्वागता भविष्यथ ॥

तत्र शारिपुत्र ये सत्त्वाः पण्डितजातीया भवन्ति[1] ते तथागतस्य लोकपितुर्[2]अभिश्रद्दधति[3] । अभिश्रद्दधित्वा[4] च तथागतशासने ऽभियुज्यन्ते[5] उद्योगमापद्यन्ते[6] । तत्र केचित्सत्त्वाः परघोषश्रवानुगमनमाकाङ्क्षमाणा[7] आत्मपरिनिर्वाणहेतोश्चतुरार्यसत्यानुबोधाय[8] तथागतशासने ऽभियुज्यन्ते[9] । त उच्यन्ते श्रावकयानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति तद्यथापि नाम तस्मादादीप्तादगारादन्यतरे[10] दारका मृगरथमाकाङ्क्षमाणा[11] निर्धाविताः । अन्ये सत्त्वा अनाचार्यकं ज्ञानं दमशमथमाकाङ्क्षमाणा आत्मपरिनिर्वाणहेतोर्हेतुप्रत्ययानुबोधाय तथागतशासने ऽभियुज्यन्ते[12] । त उच्यन्ते प्रत्येकबुद्धयानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति तद्यथापि नाम तस्मादादीप्तादगारादन्यतरे[13] दारका अजरथमाकाङ्क्षमाणा[14] निर्धाविताः[15] । अपरे

1) भविष्यंति B. Cb.
2) तुम् A. K. W. तुर्भाषितम् O.
3) श्रद्दास्यन्ति B. Cb. O.
4) श्रद्दाय B. too correct.
5) रुञ्जंत A. युज्यन्ते K. W. left out in B. Cb. °द्योगमारप्स्यन्ति O.
6) उद्यो left out in Cb. पत्स्यंते B. Cb.
7) नुयामा K.
8) A. Ca. add परित्याग between आत्म and प°.
9) रुञ्जंते A. ति Cb. O.
10) र K.
11) B. adds क.
12) ति Cb. O.
13) अगाराद् left out in K. निष्क्रान्ता इति O.
14) K. W. add क.
15) धावंति A. K. W.

पुनः सत्त्वाः सर्वज्ञज्ञानं बुद्धज्ञानं[1] स्वयंभुज्ञानमनाचार्यकं[2][3] ज्ञानमाकाङ्क्षमाणा बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च सर्वसत्त्वपरिनिर्वाणहेतोस्तथागतज्ञानबलवैशारद्यानुबोधाय तथागतशासने ऽभियुज्यन्ते । त उच्यन्ते महायानमाकाङ्क्षमाणास्त्रैधातुकान्निर्धावन्ति । तेन कारणेनोच्यन्ते बोधिसत्त्वा महासत्त्वा इति । तद्यथापि नाम तस्मादादीप्तादगारादन्यतरे दारका गोरथमा[4]काङ्क्षमाणा निर्धाविताः[5] ॥

तद्यथापि नाम शारिपुत्र स पुरुषस्तान्कुमारकांस्तस्मादादीप्तादगारान्निर्धावितान्दृष्ट्वा क्षेमस्वस्तिभ्यां[6] परिमुक्तानभयप्राप्तानिति विदित्वात्मानं च महाधनं विदित्वा[7] तेषां दारकाणामेकमेव[8] यानमुदारमनुप्रयच्छेत्[9] एवमेव शारिपुत्र तथागतो ऽप्यर्हन्सम्यक्संबुद्धो यदा पश्यत्यनेकाः सत्त्वकोटीस्त्रैधातुकात्[10]परिमुक्ता दुःखभयभैरवोपद्रवपरिमुक्तां[11]स्तथागतशासने द्वारेण निर्धाविताः परिमुक्ताः सर्वभयोपद्रवकान्तारेभ्यो निर्वृतिसुखप्राप्ताः । तानेताञ्[12]शारिपुत्र तस्मिन्समये तथागतो ऽर्हन्सम्यक्संबुद्धः प्रभूतो महाज्ञानबलवैशारद्यकोश इति विदित्वा सर्वे चैते ममैव पुत्रा इति ज्ञात्वा बुद्धयानेनैव तान्सत्त्वान्परिनिर्वापयति । न च कस्यचित्सत्त्वस्य प्रत्यात्मिकं परिनिर्वाणं वदति[13] । सर्वांश्च तान्सत्त्वांस्तथागतपरिनि-

---

1) Left out in B. Cb.

2) स्वयंभुवस्थानंमाचा A. स्वयंभुज्ञानमनाचा B. Cb. स्वयंभुवः ज्ञानंमाचा K.W.

3) कं left out in Cb.

4) Cb. adds क.

5) ता स्युः A. K. W निष्क्रान्तामिति O.

6) त्वां W. क्षेमेण स्वास्तिना O

7) From आत्मानं till विदित्वा left out in Cb. आत्मनश्च W.

8) तेभ्यो दारकेभ्यः एक B.

9) प्रदत्तं । ए A. W. प्रदत्ते । ए K. प्रयच्छेत् । ए B. प्रयच्छेत् Cb. प्रयच्छति O.

10) का सत्वकोटीः A. K. W. का सत्वकोटी B. °कोटीस् O का: सत्वकोत्याम् Cb

11) पूर्णा Cb.

12) तानेतांच्छा A. तानेनांच्छा K W. एता शा B. तमेनाच्छा Cb.

13) वदति B O. वदामि A. Cb. K. W.

र्वाणेन महापरिनिर्वाणेन[1] परिनिर्वापयति[2]। ये चापि ते शारिपुत्र सत्त्वास्त्रैधातुकात्परि-
मुक्ता भवन्ति तेषां[3] तथागतो ध्यानविमोक्षसमाधिसमापत्तीरार्याणि[4] परमसुखानि क्रीड-
नकानि रमणीयकानि[5] ददाति सर्वाण्येतान्येकवर्णानि[6]। तद्यथापि नाम शारिपुत्र तस्य
पुरुषस्य न मृषावादो भवेद्येन[7] त्रीणि यानान्युपदर्शयित्वा तेषां कुमारकाणामेकमेव[8] महा-
5 यानं सर्वेषां[9] दत्तं[10] सप्तरत्नमयं सर्वालंकारविभूषितमेकवर्णमेवोदारयानमेव सर्वेषामग्रया-
नमेव दत्तं भवेत्[11] एवमेव शारिपुत्र तथागतो ऽर्हन्सम्यक्संबुद्धो न मृषावादी भवति येन
पूर्वमुपायकौशल्येन त्रीणि यानान्युपदर्शयित्वा पश्चान्महायानेनैव सत्त्वान्परिनिर्वापयति।
तत्कस्य हेतोः। तथागतो हि शारिपुत्र प्रभूतज्ञानबलवैशारद्यकोशकोष्ठागारसमन्वागतः
प्रतिबलः सर्वसत्त्वानां सर्वज्ञज्ञानसहगतं धर्ममुपदर्शयितुम्। अनेनापि शारिपुत्र पर्यायेणैवं
10 वेदितव्यम्। यथोपायकौशल्यज्ञानाभिनिर्हारैस्तथागत एकमेव महायानं देशयति॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

यथा[12] हि पुरुषस्य भवेदगारं जीर्णं महन्तं[13] च सुदुर्बलं[14] च।
विशीर्ण प्रासाद तथा भवेत स्तम्भाश्च मूलेषु भवेषु पूतिकाः॥ ३६॥

---

1) Left out in B.
2) पयामि Cb.
3) तेभ्यस्त B.
4) त्तिरा A. K. W. त्तो आ B. त्तय आ Cb. त्तयः आ O
5) रा A. K. W.
6) एतानि in B. only.
7) भवति। येन Cb. O.
8) तेभ्यः कुमारकाभ्यः B.
9) सर्वेभ्यो B.
10) दत्तं A. B. Ca Cb. O. दद्याततं K. दद्यात W.
11) Left out in O. B. Cb.
12) यथा K. O. तथा A. B. Ca. Cb. W.
13) All but O. महान्तं.
14) सुदुर्लभं च A. B. Cb. सुदुर्बलं च K. O. सुदुर्बलश्च W.

गवाक्षहर्म्या गडितैकदेशा[1] विशीर्णा कुड्यं कटलेपनं च।
जीर्णप्रवृद्धं धुत[2]वेदिकं च तृणाच्छदं सर्वत ओपतन्तम्॥ ४० ॥
शतान पञ्चान अनूनकानां आवासु सो तत्र भवेत प्राणिनाम्[3]।
बहूनि च[4] निष्कुटसंकटानि[5] उच्चारपूर्णानि जुगुप्सितानि॥ ४१ ॥
गोपानसी विगडित तत्र सर्वा कुड्याश्च भित्तीश्च तथैव स्रस्ताः। 5
गृध्राण कोट्यो निवसन्ति तत्र पारावतोलूक तथान्यपक्षिणाः॥ ४२ ॥
आशी[6]विषा दारुण तत्र सन्ति देशे प्रदेशेषु महाविषोग्राः।
विचित्रिका वृश्चिक मूषिकाश्च एतान[7] आवासु सुदुष्टप्राणिनाम्॥ ४३ ॥
देशे च देशे अमनुष्य भूगो[8] उच्चारप्रस्रावविनाशितं च।
कृमिकीटखद्योतकपूतिकं च श्वभिः शृगालैश्च[9] निनादितं[10] च॥ ४४ ॥ 10
भेरुण्डका दारुण तत्र सन्ति मनुष्यकुणपानि विभक्षयन्तः[11]।
तेषां च निर्याणु प्रतीक्षमाणाः श्वाना[12]: शृगाला[9]श्च वसन्त्यनेके॥ ४५ ॥
ते दुर्बला नित्य क्षुधाभिभूता देशेषु देशेषु विवादमाना[13]:।
कलहं करोन्ताश्च निनादयन्ति सुभैरवं तद्गृहमेवरूपम्॥ ४६ ॥

---

1) MSS. शां, but O. quite different.
2) प्रवृद्धोद्धृत O.
3) All but O. तेषाम्.
4) All but O. चा.
5) O. संकुटानि.
6) आसी B. Ca. Cb. K W. आशी A. O.
7) ने K. विविधान O.
8) रूपो अमनुज्ञा (i. e. नोज्ञा) भूमगः O. To read अमनुज्ञभूम्यो?
9) All but O. ैश्च
10) निनदितं A. विनासितं B. Cb. निनादितं Ca. K. O. निनादिश्च W.
11) ये भक्षयन्ति O.
12) श्वाना: A. O. श्वाना B Cb. K. W.
13) विषादमाणाः A.

मुरौद्रचित्ता पि वसन्ति यत्ता मनुष्यकुणपानि विकड्डमानाः।
देशेषु देशेषु वसन्ति तत्र शतापदी[1] गोनसकाश्च[2] व्याडाः ॥ ४७ ॥
देशेषु देशेषु च निलिपन्ति[3] ते पोतकान्यालयनानि[4] कृत्वा।
न्यस्तानि न्यस्तानि च तानि तेषां ते यत्त भूयो परिभक्षयन्ति ॥ ४८ ॥
5 यदा च ते यत्त भवन्ति तृप्ताः परसत्व खादित्व सुरौद्रचित्ताः।
परसत्वमांसैः परितृप्तगात्राः कलहं तदा तत्र करोन्ति तीव्रम् ॥ ४९ ॥
विध्वस्तलेनेषु[5] वसन्ति तत्र कुम्भाण्डका दारुणरौद्रचित्ताः।
वितस्तिमात्रास्तथ हस्तमात्रा द्विहस्तमात्राश्चनुचङ्क्रमन्ति[6] ॥ ५० ॥
ते चापि श्वानान्परिगृह्य पादैरुत्तानकान्[7] कृत्व तथैव भूमौ।
10 ग्रीवासु चोत्पीड्य वितंमयन्तो[8] व्यायासयन्तश्च[9] रमन्ति तत्र ॥ ५१ ॥
नानाश्च कृष्णाश्च तथैव दुर्बला उच्चा महन्ताश्च[10] वसन्ति प्रेताः।
जिघत्सिता भोजन मार्गमाणा ग्रार्तस्वरं क्रन्दिषु तत्र तत्र ॥ ५२ ॥
सूचीमुखा गोणमुखाश्च केचित् मनुष्यमात्रास्तथ[11] श्वानमात्राः।
प्रकीर्णकेशाश्च करोन्ति शब्दमाहारतृष्णापरिदह्यमानाः ॥ ५३ ॥

---

1) शतपादिका O.

2) All गोणा.

3) परि B. Ca. Cb. पनि O.

4) ना A. B. का Cb. O.; left out in K. W.

5) MSS. लयनेषु; but O. ऊर्ध्वस्थले तत्र.

6) °त्रामनु° O., the *m* being a means to avoid hiatus.

7) कां A. Cb. K. W. कं B. कानि O.

8) थभत्सयन्तो A. K. च भंसमत्त B. विभर्त्सत्त Ca. च भर्त्सन्त Cb. थ तत्समत्तो W. Our r. conjectural.

9) व्यश्चावयंतश्च A. वस्यायसंतश्च B. व्यसाययंतास्च Ca. व्यसायंतश्च Cb. व्यस्वावगत्तश्च K. W. वव्यापयन्तिश्च O. Our r. conjectural.

10) All but O. महा°.

11) त् । श्रम A. K. W. त् । श्च B. त् । म Cb. न्म Ca. O. वक्त्रा for मात्र in O

चतुर्दिशं चात्र विलोकयन्ति गवाक्ष[1] उछ्लोकनकेहि नित्यम्।
ते यक्षप्रेताश्च पिशाचकाश्च गृध्राश्च आहार गवेषमाणाः ॥ ५४ ॥
एतादृशं भैरवु[2] तद्भवे भवेत् महन्तमुच्चं च सुदुर्बलं च।
विजर्जरं दुर्बलभित्तरं[3][4] च पुरुषस्य एकस्य परिग्रहे भवेत् ॥ ५५ ॥
स[5] च[6] बाह्यतः स्यात्पुरुषो गृहस्य निवेशनं तच्च भवेत्प्रदीप्तम्। 5
सहसा समन्तेन चतुर्दिशं च ज्वालासहस्रैः परिदीप्यमानम्[7] ॥ ५६ ॥
वंशाश्च दारूणि च अग्नितापिताः करोन्ति शब्दं गुरुकं सुभैरवम्।
प्रदीप्त स्तम्भाश्च तथैव भित्तयो यक्षाश्च प्रेताश्च मुचन्ति नादम् ॥ ५७ ॥
संलूषिता[8] गृध्रशताश्च भूयः[9] कुम्भाण्डकाः स्रोष्ट्रमुखा[10] भ्रमन्ति।
समन्ततो व्याडशताश्च तत्र नदन्ति क्रोशन्ति च दह्यमानाः ॥ ५८ ॥ 10
पिशाचकास्तत्र बहू भ्रमन्ति संतापिता अग्निन[11] मन्दपुण्याः[12]।
दन्तेहि पाटेन्ति ते[13] अन्यमन्यं रुधिरेण सिञ्चन्ति च दह्यमानाः ॥ ५९ ॥
भेरुण्डका कालगताश्च तत्र खादन्ति सत्त्वाश्च ते अन्यमन्यम्।
उच्चार दह्यत्यमनोज्ञगन्धः प्रवायते[14] लोकि चतुर्दिशासु ॥ ६० ॥

---

1) क्षे Cb.
2) वु K. W. व A. B. Cb. O.
3) भित्तरु A. K. W. दुर्बल B. Cb
4) All but O. भैरवं. भिन्नति O.
5) Left out in W.
6) Left out in B. K.
7) नां in all MSS. but O.
8) सलूषिता O. (Skr. स्वलोपिता). The others but K. लू.
9) भूतं A. भूवन् B. Cb. W. भूत्रम् K. भूयः O.
10) चाष्ट A. प्रोष्ट B. स्रोष्ट Cb. पाण्ड K. W. तत्र बहू O.
11) ना K. W.
12) नमल्पपुण्याः O., r. °न अ° with shortening of $\bar{a}$ before a vowel.
13) ते A. Ca. Cb. K. W. न B
14) प्रदायती O.

शतापदीयो प्रपलायमानाः कुम्भाण्डकास्तां[1] परिभ्रमयन्ति ।
प्रदीप्तकेशाश्च भ्रमन्ति[2] प्रेताः तुधाय दाहेन[3] च दह्यमानाः ॥ ६१ ॥
एतादृशं भैरव तन्निवेशनं ज्वालासहस्रैर्हि विनिश्चरद्भिः[4] ।
पुरुषश्च सो तस्य गृहस्य स्वामी द्वारस्मि अस्थासि विपश्यमानः[5] ॥ ६२ ॥
5 शृणोति चासौ स्वके[6] अत्र पुत्रान्क्रीडापनैः क्रीडनसक्तबुद्धीन्[7] ।
रमन्ति ते क्रीडनकप्रमत्ता[8] यथापि बाला अविज्ञानमानाः ॥ ६३ ॥
श्रुत्वा च सो[9] तत्र प्रविष्टु क्षिप्रं प्रमोचनार्थाय तदात्मजानाम् ।
मा मह्य बाला इमि सर्वदारका दह्येयु नश्येयु च क्षिप्रमेव ॥ ६४ ॥
स भाषते तेषमगारदोषान्दुःखं इदं भोः कुलपुत्र दारुणम् ।
10 विविधाश्च सत्त्वेह अयं च अग्नि[10] महन्तिका[11] दुःखपरंपरात्र[12] ॥ ६५ ॥
आशीविषा यत्त सुरौद्रचित्ताः कुम्भाण्डप्रेता बहवो वसन्ति ।
भेरुण्डका श्वानशृगालसंघा[13] गृध्राश्च आहार गवेषमाणाः ॥ ६६ ॥
एतादृशात्र[14] बहवो वसन्ति विनापि चाग्नेः[15] परमं सुभैरवम् ।
दुःखं इदं केवलमेवरूपं समन्ततश्चाग्निरयं प्रदीप्तः ॥ ६७ ॥

1) MSS. तान्य.
2) भवन्ति A. K. W. भ्रमन्ति B. Cb. O.
3) दाहेन A. K. W. दाह्येन B. Cb.
4) श्चरंति A. °ज्वाणि °श्चरन्ति O.
5) ना A. B. W. नाः Cb. K. नः O.
6) MSS. स्वकमत्र, the *e* short before vowel. The r. in O. quite different.
7) श A. र B. Cb. स K. W.
8) MSS. तान् and त्तान्. O. different.
9) सो B. स O. The others सौ.
10) अग्नि A. K. W. अग्नी B. Cb. अग्निर् Ca. O.
11) All but O. महा°.
12) रातु Cb.
13) All but O. र.
14) शास्मिं A. K. W. शास्तत्र B. शातत्र Cb. शात्र O.
15) All but O. चाग्या.

ते चोद्यमानास्तथ बालबुद्धयः कुमारकाः क्रीडनके प्रमत्ताः ।
न चिन्तयन्ते पितरं भणन्तं न चापि तेषां मनसीकरोन्ति ॥ ६८ ॥
पुरुषश्च सो तत्र तदा विचिन्तयेत्सुदुःखितो ऽस्मिं (1) इह पुत्रचिन्तया ।
किं मह्य पुत्रेहि अपुत्रकस्य मा नाम दह्येयुरिहाग्निना इमे ॥ ६९ ॥
उपायं (2) सो चिन्तयि तस्मिं (3) काले लुब्धा (4) इमे क्रीडनकेषु बालाः । 5
न चात्र क्रीडा च रती (5) च काचिद्बालान हो यादृशु मूढभावः ॥ ७० ॥
स तानवोचच्छृणुथा (6) कुमारका नानाविधा यानक या (7) ममास्ति ।
मृगैरजैर्गोणवरैश्च युक्ता उच्चा महन्ता (8) समलंकृता (9) च ॥ ७१ ॥
ता (10) बाह्यतो अस्य निवेशनस्य निर्धावथा तेहि करोथ (11) कार्यम् ।
युष्माकमर्थे मय कारितानि निर्याथ तैस्तुष्टमनाः समेत्य ॥ ७२ ॥ 10
ते यान एतादृशका (12) निशाम्य आरब्धवीर्यास्त्वरिता हि भूत्वा (13) ।
निर्धावितास्तत्क्षणमेव सर्वे (15) आकाशि (16) तिष्ठन्ति (17) दुखेन (18) मुक्ताः (19) ॥ ७३ ॥

---

1) All but O. स्मी.
2) All but O. उपायि.
3) स्मिं A. Cb. W.
4) यथा Cb.
5) All but O. चरतीव.
6) था B. Cb O. The rest ता.
7) ये A. W. ये B. Cb. या K.
8) All but O. कान्ता:.
9) युक्ता O. ताश्च the rest.
10) All ते
11) कुरुध A. Cb. W. कुरुध K. कुरुथ B करोथ O.
12) MSS. कान्.
13) All but O. लब्ध.
14) °ता भवित्वा O. °तंहि भूत्वा the others.
15) र्वे Cb.
16) शा A. Cb. W. स K. सि B.
17) All but O. add च.
18) All दुः.
19) न in B. only. विप्रमु Cb. O.

पुरुषश्च सो निर्गति[1] दृष्ट्व दारकान्यामम्य मध्ये स्थितु चत्वरस्मिन्[2]।
उपविश्य सिंहासनि तानुवाच अहो अहं निर्वृतु अद्य मार्षाः[3] ॥ ७४ ॥
ये दुःखलब्धा मम[4] ते तपस्विनः पुत्राः प्रिया ओरस विंश बालाः।
ते दारुणे दुर्गगृहे अभूवन्बहुप्रजन्तुपूर्णे च सुभैरवे च ॥ ७५ ॥
5 आदीप्तके ज्वालसहस्रपूर्णे रता च ते क्रीडरतीषु आसन्।
मया च ते मोचित अद्य सर्वे येनाहु निर्वाणु[5] समागतो ऽद्य ॥ ७६ ॥
सुखस्थितं तं[6] पितरं विदित्वा उपगम्य ते दारक एवमाहुः।
ददाहि नस्तात यथाभिभाषितं त्रिविधानि यानानि मनोरमाणि ॥ ७७ ॥
सचेत्तव सत्यक तात[7] सर्वं यद्भाषितं तत्र निवेशने ते[8]।
10 त्रिविधानि यानानि ह[9] संप्रदास्ये ददस्व कालो ऽयमिहाद्य तेषाम् ॥ ७८
पुरुषश्च सो कोशबली भवेत[10] सुवर्णरूप्यामणिमुक्तिकस्य[11]।
हिरण्य दासाश्च अनल्पकाः स्युरुपस्थापका[12] नेकविधानयाना[13] ॥ ७९ ॥

---

1) O. त, the rest तु. निर्गतिनिर्गते, Skr. निर्गतान्.

2) O. चरे the others चरेस्मिन्.

3) मार्षा A. K. W. सर्वाः B. सत्वाः Cb. मारिषा O.

4) मय A. मम O. मयि the rest.

5) णमुपा B. Cb. निर्वृत अद्य मारिषाः O.

6) च A. K. W. तं B. left out in Cb.

7) सचैव तं सत्यं करुता च A. W. सचैवकं सत्यक तात B. सर्वे ते सत्यक तात Cb. सचेत्तव सत्य ददाहि तात O

8) ति B. नस्मि O.

9) ह A. K. W. च B. चो Cb.

10) तु Cb. K. विदित्वा O.

11) मुक्ति Cb. O. मौक्ति K. W. मुक्त Ca. A. B.

12) उपस्थपेस्य O. उपस्थान अने the others. Our reading conjectural.

13) MSS. यानान् and यानम्.

रत्नामया गोणरथा विशिष्टाः सवेदिकाः किङ्किणिजालनद्धाः ।
छत्रध्वजेभिः समलंकृताश्च मुक्तामणीजालिकछादिताश्च[1] ॥ ८० ॥
सुवर्णपुष्पाणा[2] कृतैश्च दामैर्देशेषु देशेषु प्रलम्बमानैः ।
वस्त्रैरुदारैः परिसंवृताश्च प्रत्यास्तृता दुष्यवरैश्च शुक्लैः ॥ ८१ ॥
मृदुकान पट्टान तथैव तत्र वरतूलिकासंस्तृत[3] येहि ते रथाः । 5
प्रत्यास्तृताः कोटिसहस्रमूल्यैर्वरैश्च कोच्चव[4]कहंसलक्षणैः ॥ ८२ ॥
श्वेताः सुपुष्टा[5] बलवन्त गोणा महाप्रमाणा अभिदर्शनीयाः ।
ये योजिता रत्नरथेषु तेषु परिगृहीताः पुरुषैरनेकैः ॥ ८३ ॥
एतादृशान्सो पुरुषो ददाति पुत्राण सर्वाण वरान्विशिष्टान् ।
ते चापि तुष्टात्तमनाश्च तेहि दिशाश्च विदिशाश्च व्रजन्ति क्रीडकाः ॥ ८४ ॥ 10
एवमेव[6] हं शारिसुता महर्षी सत्त्वान त्राणश्च पिता च भोमि ।
पुत्राश्च ते[7] प्राणिन सर्वि मह्यं त्रैधातुके कामविलग्न बालाः ॥ ८५ ॥
त्रैधातुकं च[8] यथ तन्निवेशनं सुभैरवं दुःखशताभिकीर्णम् ।
अशेषतः[9] प्रज्वलितं समन्ताज्जातीजराव्याधिशतैरनेकैः ॥ ८६ ॥

---

1) Instead of the Nominatives here and in the next following vs. the MSS. have Accusatives.

2) Sic O.; पुष्पा the rest. सहस्र for कृतैश्च O.

3) All but O. संस्कृत.

4) कोट्टाम् A. कोट् B. कोटा Cb. कोडम् K. कोट्ट W. कोच्चे O. Our r. conjectural; cp. कोच्च Divyāvadāna 553, 2; Pāli *koccha*, Skr. कूर्च.

5) Sic O.; सुपुष्पा the rest.

6) एमेवाहं A. Ca. Cb. K. W. एवमेव हं B.

7) मे A. B. K. W. ते Cb.

8) वा A.

9) Sic O.; अशेषतं the rest.

अहं[1] च त्रैधातुकमुक्त शान्तो[2] एकान्तस्थायी पवने[3] वसामि।
त्रैधातुकं च ममिदं परिग्रहो ये अत्र दुःखन्ति[4] ममेति पुत्राः॥ ८७॥
अहं च आदीनव[5] तत्र दर्शयी[6] विदित्व त्राणं भवमेव चेषाम्।
न चैव मे ते शृणि सर्वि बाला यथापि कामेषु विलग्नबुद्धयः॥ ८८॥
5 उपायकौशल्यमहं प्रयोजयी यानानि त्रीणि प्रवदामि चेषाम्।
ज्ञात्वा च त्रैधातुकि नैकदोषा[7] निर्धावनार्थाय[8] वदाम्युपायम्॥ ८९॥
मां चैव ये निश्रित भोन्ति पुत्राः षडभिज्ञत्रैविद्यमहानुभावाः।
प्रत्येकबुद्धाश्च भवन्ति ये ऽत्र अविवर्तिका[9] ये चिह[10] बोधिसत्त्वाः॥ ९०॥
समान पुत्राण कु[11] तेष तत्क्षणमिमेन दृष्टान्तवरेण पण्डित[12]।
10 वदामि एकं इमु[13] बुद्धयानं परिगृह्णथा सर्वि जिना भविष्यथ॥ ९१॥
तच्चा[14] वरिष्ठं सुमनोरमं च विशिष्टरूपं चिह[15] सर्वलोके।
बुद्धान ज्ञानं द्विपदोत्तमानामुदाररूपं तथ वन्दनीयम्॥ ९२॥

---

1) From त्रै° till वसामि left out in K.

2) ता A. W. O. तः B. तौ Cb.

3) All but O. °ह वने. Cp Mahāvastu II, 372, and Pāli *pavana*.

4) मे A. B. Ca. Cb. मै K. W.

5) वु A. K. W.

6) यौं A. Cb. यि B. यी B. Ca. दर्शी K. W.

7) नै K. W. निर्धापनार्थाय O.

8) सिद्धावनास्थाय Cb. or निर्धावनार्थाय, see Kern's version, p. 88, note. The rest निर्वापना°.

9) All but O. अवैव°.

10) ये विह A. ये चिह B. ये हि च Cb. यो चिह K. या चिह W.

11) नाकु A. K. W. पाकु Ca. पाह B. नह Cb. O.

12) तां A. K. W. ता B. Cb. कोलित O.

13) वर् B. K. W.

14) तं च A. तथा B. तं चो Cb. तं चा K. W. तं चैव इष्टं O.

15) त्विह in all MSS. cp. verse 90 above.

बलानि ध्यानानि तथा विमोक्षाः समाधिनां कोटिशता चनेकाः[1]।
अयं रथो ईदृशको वरिष्ठो रमन्ति येन[2] सद बुद्धपुत्राः ॥ ९३ ॥
क्रीडन्ति एतेन क्षपेन्ति[3] रात्रयो दिवसांश्च पक्षानृतवो ऽथ मासान्।
संवत्सरानन्तरकल्पमेव[4] च क्षपेन्ति[8] कल्पान सहस्रकोट्यः ॥ ९४ ॥
रत्नामयं यानमिदं वरिष्ठं गच्छन्ति येन इह बोधिमण्डे।
विक्रीडमाना बहु[5]बोधिसत्त्वा ये च शृणोन्ति[6] सुगतस्य श्रावकाः ॥ ९५ ॥
एवं प्रजानाहि त्वमद्य तिष्य नास्तीह यानं द्वितियं[7] कहिंचित्।
दिशो दश सर्व गवेषयित्वा स्थापेत्वुपायं[8] पुरुषोत्तमानाम् ॥ ९६ ॥
पुत्रा मम यूयमहं पिता वो मया च निष्कासित यूय दुःखात्।
परिदह्यमाना[9] बहुकल्पकोट्यस्त्रैधातुकातो भयभैरवातः[10] ॥ ९७ ॥ 10
एवं च हं तत्र[11] वदामि निर्वृतिमनिर्वृता यूय तथैव चाद्य।
संसारदुःखादिह यूय मुक्ता बौद्धं[12] तु यानं च गवेषितव्यम् ॥ ९८ ॥

---

1) शतां च नैके A. K. शताश्च नेके B. Cb. शता च नैके W. सहस्रनेका O.

2) A. Ca. K. W. have येनेह.

3) Sic O.; क्षपयन्ति the others.

4) All but O. कल्प एव.

5) इह A. Cb. K. बहु B. left out in W.

6) न्ति A. B. Cb. O. न्ती K. W. To r. चो or चा for च.

7) ती A. B. K. W. ति Cb.

8) स्थाप्येत्वुपायं A. स्थापित्व [illegible] B. स्थापेदुत्वुपायं Cb. स्थापेत्तुपायं K. स्थापेत्वुपायं W. स्थाप्य उपाय° O. Cp. Pali *ṭhapetvā*.

9) गृ A. Cb.

10) भैरवातु O.; preferable.

11) अत्र K. W.

12) बौधं A. W. बोद्ध B. Cb. बौध K. बोधाय O.

ये बोधिसत्त्वाश्च इहास्ति केचिच्छृण्वन्ति सर्वे मम बुद्धनेत्रीम्[1]।
उपायकौशल्यमिदं जिनस्य येनो विनेति[2] बहुबोधिसत्त्वान्॥ ९९॥

हीनेषु कामेषु जुगुप्सितेषु रता यदा भोन्तिमि यत्र[3] सत्त्वाः[4]।
दुःखं तदा भाषति लोकनायको ग्रनन्यथावादिरिहार्यसत्यम्॥ १००॥

5 ये चापि दुःखस्य ग्रजानमाना मूलं न पश्यन्ति ह बालबुद्धयः।
मार्गं हि तेषामनुदर्शयामि समुदागमस्[5]तृष्णा दुःखस्य[6] संभवः॥ १०१॥

तृष्णानिरोधार्थ सदा ग्रनिश्रिता निरोधसत्यं तृतियं इदं[7] मे।
ग्रनन्यथा येन च मुच्यते नरो मार्गं हि भावित्व विमुक्त भोति॥ १०२॥

कुतश्च ते शारिसुता विमुक्ता ग्रसत्[8]यग्राहातु विमुक्त भोन्ति।
10 न च ताव ते सर्वत[9] मुक्त भोन्ति ग्रनिर्वृतांस्तान्वदतीह नायकः[10]॥ १०३॥

किंकारणं नास्य वदामि मोक्षमप्राप्तिमामुत्तममग्रबोधिम्।
ममैष छन्दो ग्रहु धर्मराजा सुखापनार्थायिह लोकि जातः॥ १०४॥

इय शारिपुत्र मम धर्ममुद्रा या पश्चकाले मम[12] ग्रद्य भाषिता।
हिताय लोकस्य सदेवकस्य दिशासु विदिशासु च[13] देशयस्व॥ १०५॥

---

1) त्रों Cb. त्रीन् A. Ca. K. W. धर्मनेत्राः O.

2) ये बुद्धनेत्री W. यथा विनेति O. येनो विनेत्री the rest.

3) ग्रत्र B. Cb.

4) सर्वा Cb. रमन्ति ये तत्र बहूनि बालाः O.

5) समुदागम seems here to be used as another name for समुदय, or beginning, origin; cp. Pāli.

6) Sic B. दुःखस्य the rest.

7) इदं A. इमं B. इयं Cb. K. W. ममेदम् O.

8) ग्र in B. O. only; ग्रहेर्भिर्व° O.

9) त A. Cb. O. त्र K. W.

10) नायकाः O.; the others विनायकाः.

11) पश्चिमके कालि Cb. पश्चिमकालि K.

12) All but O. मयाद्य.

13) प्रकाशयस्व O. Kumārajīwa seems to read न instead of च as he translates 所乃遂力勿 宣傳

यश्चापि ते भाषति कश्चि सत्त्वो[1] अनुमोदयामीति वदेत वाचम्।
मूर्धेन चेदं प्रतिगृह्य सूत्रं अविवर्तिकं तं नरु धारयेस्त्वम्[2] ॥ १०६ ॥

दृष्टाश्च[3] तेन[4] पुरिमास्तथागताः सत्कारु तेषां च कृतो अभूषि[5]।
श्रुतश्च धर्मो अयमेवरूपो य एत सूत्रं अभिश्रद्दधेत ॥ १०७ ॥

अहं च त्वं चैव भवेत दृष्टो अयं च सर्वो मम भिक्षुसंघः। 5
दृष्टाश्च सर्वे इमि बोधिसत्त्वा ये श्रद्दधे भाषितमद्य मह्यम् ॥ १०८ ॥

सूत्रं इमं बालजनप्रमोहनमभिज्ञ[6] ज्ञात्वा न ममैत[7] भाषितम्।
विषयो हि नैवास्तिह श्रावकाणां प्रत्येकबुद्धान गतिर्न चात्र ॥ १०९ ॥

अधिमुक्तिसारस्तुव शारिपुत्र किं वा पुनर्मह्य इमे ऽन्यश्रावकाः[8]।
एते ऽपि श्रद्धाय ममैव यान्ति प्रत्यात्मिकं ज्ञानु न चैव विद्यते ॥ ११० ॥ 10

मा चैव त्वं स्तम्भिषु मा च मानिषु मायुक्तयोगीन वदेसि एततू[9]।
बाला हि कामेषु सदा प्रमत्ता अजानका धर्मु क्षिपेयु भाषितम्[10] ॥ १११ ॥

उपायकौशल्य क्षिपित्व मह्यं या बुद्धनेत्री सद लोकि संस्थिता।
भृकुटिं करित्वान क्षिपित्व यानं विपाकु[11] तस्येह शृणोहि तीव्रम् ॥ ११२ ॥

---

1) सत्त्वः । अनु A. B. K. W. O. सर्वः । अनु Cb. सत्त्वो ऽनु Ca

2) नर धारयाहि O.

3) Sic O.; दृष्ट्वा च the rest.

4) तेन A. Cb. K. W. O. तेनो B.

5) भविष्यति A. B. अभूवन् Cb. K. W. अभूषि O.

6) हं । अ A. K. W. हनं । अ Cb. O. बोधनं । अ B

7) Sic O.; हि मि एव तु A. हि मि एत्र Cb. W. एवं K. ममैव Cb.

8) का in all MSS.

9) एव तत् A. एतं B. एव Cb. एतत् K. W. The r. in O. is °गोषु ब्रवीहि सूत्रम्.

10) धर्म प्रतिक्षिपत्ति O.

11) क B. Cb. O.

त्रिपिव्र मूत्रं इदमेवद्रूपं मयि तिष्ठमाने परिनिर्वृते वा।
भिन्नूषु वा तेषु खिलानि कृत्वा तेषां विपाकं ममिक्के[1] भृणोक्ति[3]॥ ११३॥
च्युत्वा मनुष्येषु ग्रवीचि तेषां प्रतिष्ठ भोती परिपूर्णकल्पान्।
ततश्च भूयो ऽन्तरकल्पनेकांश्च्युताश्च[3] तत्र प्रपतन्ति[4] बालाः॥ ११४॥
5 यदा च नरकेषु[5] च्युता भवन्ति ततश्च तिर्यन्तु व्रजन्ति भूयः[6]।
सुदुर्बलाः श्वानशृगालभूताः परेष[7] क्रीडापनका भवन्ति॥ ११५॥
वर्णेन ते कालक तत्र भोन्ति कल्माषका[8] व्राणिक कण्डुलाश्च[9]।
निर्लोमका दुर्बल भोन्ति भूयो विद्वेषमाणा मम ग्रग्रबोधिम्॥ ११६॥
जुगुप्सिता प्राणिषु नित्य भोन्ति लोष्टप्रहाराभिहता रुदन्तः।
10 दण्डेषु[10] संत्रासित तत्र तत्र जुधापिपासाहत शुष्कगात्राः॥ ११७॥
उष्ट्राश्च वा गर्दभ भोन्ति भूयो भारं वहन्तः कशदण्डताडिताः।
ग्राहारचिन्तामनुचिन्तयन्तो ये बुद्धनेत्री[11] त्रिपि बालबुद्धय॥ ११८॥
पुनश्च ते क्रोष्टुक भोन्ति[12] तत्र बीभत्सका[13]ः काणकु कण्डकाश्च।
उत्पीडिता ग्रामकुमारकेहि लोष्टप्रहाराभिहताश्च बालाः॥ ११९॥

---

1) विपाकममिक्कं A. W. विपाकममिक्क B. विपाकं ममिक्क Cb. O. विपाकमिक्क K. Perhaps originally इदं in the sense of «now».
2) श्च A. K. W. O.
3) न्तरनेककल्पान् B. °नेकांश् A. K. W.
4) व्रजेति Cb. च्युताश्च्युतास्तत्र पतन्ति O. preferable.
5) नरकेभ्य O.
6) तिर्यग्गतौ ते पुनरेव यान्ति O.
7) Sic O.; परेषु the rest.
8) व्र A. Cb. K. W. व्रा B.
9) एड A. B. K. W. एडु Cb. खुड्डुलका व्रणोत्सता O.
10) दण्डेन O. दण्डेषु perhaps a misread दण्डेक्ति.
11) R. °नेत्रीं?
12) तु A. K. W. भोंति B. शांति Cb.
13) विभत्स A. भीभत्स B. K W. भभित्स Cb.

ततश्च्यविवान च भूपु बालाः पञ्चाशतीनां मम योजनानाम् ।
दीर्घात्मभावा हि भवन्ति प्राणिनो जडाश्च मूढाः परिवर्तमानाः ॥ १२० ॥
अपादका भोन्ति च कोडमक्किनो[(1)] विखाद्यमाना बहुप्राणिकोटिभिः ।
सुदारुणां ते अनुभोन्ति वेदनां क्षिपित्व सूत्रं इदमेवरूपम् ॥ १२१ ॥
पुरुषात्मभावं च यदा लभन्ते ते कुण्डका लङ्क[(2)] भोन्ति तत्र ।
कुब्जाश्च काणा च जडा जघन्या अश्रद्दधन्ता[(3)] इम सूत्र मह्यम् ॥ १२२ ॥
अप्रत्ययनीयाश्च[(4)] भवन्ति लोके पूती मुखात्तेष[(5)] प्रवाति गन्धः[(6)] ।
यतश्च्यको उक्कमि[(7)] तेष[(8)] काये अश्रद्दधन्तानिम[(9)] बुद्धबोधिम् ॥ १२३ ॥
दरिद्रका प्रेषणकारकाश्च उपस्थायका नित्य परस्य दुर्बलाः[(10)] ।
आबाध तेषां बहुकाश्च भोन्ति अनाथभूता विहरन्ति लोके ॥ १२४ ॥ 10
यस्यैव ते तत्र करोन्ति सेवनामदातुकामो भवती[(11)] स तेषाम् ।
दत्तं पि चो[(12)] नश्यति क्षिप्रमेव फलं हि पापस्य इमेवरूपम् ॥ १२५ ॥

---

1) कोत्रशक्किणो A. क्रोधिसंक्रान: B. कोडमक्किना Cb. कोटमंक्किणो K. कोटमक्किणो W. कोडसर्पि O.

2) ल A. Cb. K. W. O. ला B. For कुण्डका O. has खुड्का.

3) धन्ता Cb. धिन्ता O.

4) का Cb.

5) षु Cb.

6) नित्यं Cb.

7) उक्कमि A. Cb. K. O. अोक्कमि B. उपमि W.

8) षु A. W.

9) तानि मम A. तानिम B. K. W. तानि मम Cb.

10) ला in all MSS. The original Prākṛt had, of course, no visarga. Cp. काणा च for Skr. काणाश्च १२२. Likewise दरिद्रका.

11) ति K. W.

12) चो A. B. K. W. चा Cb. The lengthening here not necessary. The reading in O. quite different

पश्चापि[1] ते तत्र लभन्ति औषधं सुयुक्तरूपं कुशलेहि दत्तम्।
तेनापि तेषां हु भूय वर्धते सो व्याधिरत्तं न कदाचि गच्छति ॥ १२६ ॥
अन्येहि चौर्याणि कृतानि भोन्ति डमराथ[2] डिम्बास्तथ विग्रहाश्च।
द्रव्यापहाराश्च कृतास्तथान्यैर्निपतन्ति तस्योपरि[3] पापकर्मणः ॥ १२७ ॥
न जातु सो पश्यति लोकनाथं नरेन्द्रराजं महि शासमानम्।
तस्याक्षणेष्वेव हि वासु[4] भोति इमां क्षिपित्वा मम बुद्धनेत्रीम् ॥ १२८ ॥
न चापि सो धर्म शृणोति बालो बधिरश्च सो भोति अचेतनश्च।
क्षिपित्व बोधीमिममेवरूपामुपशान्ति तस्या न कदाचि भोति ॥ १२९ ॥
सहस्रनेका[5] नयुतांश्च भूयः कल्पान कोट्यो यथ गङ्गवालिकाः।
जडात्मभावो विकलश्च भोति क्षिपित्व सूत्रं इमु पापकं[6] फलम् ॥ १३० ॥
उद्यानभूमी नरको ऽस्य भोति निवेशनं तस्य अपायभूमिः।
खरसूकरा क्रोष्टुक भूमिसूचका[7]ः प्रतिष्ठितस्येह भवन्ति नित्यम् ॥ १३१ ॥
मनुष्यभावत्वमुपेत्य चापि अन्धत्व बधिरत्व जडत्वमेति।
परप्रेष्य[8] सो भोति दरिद्र नित्यं तत्कालि[9] तस्याभरणा[10]निमानि ॥ १३२ ॥
वस्त्राणि चो व्याधय भोन्ति[11] तस्य व्रणान कोटीनयुताश्च काये।
विचर्चिका कण्डु तथैव पामा कुष्ठं किलासं तथ आमगन्धः ॥ १३३ ॥

---

1) पत्रापि A. यं चापि B. Cb. पश्चापि K. W.
2) डमरं च डिम्ब कलहं च O.
3) तस्य Cb. तेषां O.
4) धासु K. W. भवाति वासं O.
5) All but O. नेके.
6) इममीदृशं A. B. K. W. इमु पापकं Cb. इदं पापकं O
7) सूचिका: O.
8) ष्य A. Cb. K. W. O ष्यु B.
9) त्र Cb. K. W. सत्कालस्तस्या B. तांहि कालि O.
10) °वरणा भवन्ति O.
11) बहूनि तस्यैव भवन्ति व्याधयो O.

सत्कायदृष्टिश्च घनास्य भोति उदीर्यते क्रोधबलं च तस्य।
संरागु तस्यातिभृशं च भोति तिर्याग्योनीषु[1] च सो सदा रमी ॥ १३४ ॥
सचेद्वदे शारिसुताग्र तस्य परिपूर्णकल्पं प्रवदेय दोषान्।
ये ल्ही ममा एतु क्षिपेय[2] सूत्रं पर्यन्तु दोषाण न शक्य गन्तुम् ॥ १३५ ॥
संपश्यमानो इदमेव चार्थं त्वां संदिशामी[3] ग्रहु शारिपुत्र ॥
मा हैव त्वं[4] बालजनस्य ग्रग्रतो भाषिष्यसे सूत्रमिमेवरूपम् ॥ १३६ ॥
ये तू इह व्यक्त बहुश्रुताश्च स्मृतिमन्त ये पण्डित ज्ञानवन्तः।
ये प्रस्थिता उत्तममग्रबोधिं ताञ्श्रावयेस्त्वं परमार्थमेतत् ॥ १३७ ॥
दृष्टाश्च येही बहुबुद्धकोट्यः कुशलं च यै रोपितमप्रमेयम्।
ग्रध्याशयश्चा दृढ येष[5] च स्यात्ताञ्श्रावयेस्त्वं परमार्थमेतत् ॥ १३८ ॥
ये वीर्यवन्तः सद मैत्रचित्ता भावेन्ति[6] मैत्रीमिह दीर्घरात्रम्।
उत्सृष्टकाया तथ जीविते च तेषामिदं[7] सूत्र भणेः समीक्षम् ॥ १३९ ॥
ग्रन्योन्यसंकल्प सगौरवाश्च येषां च बालेहि[8] न संस्तवो[9]ऽस्ति।
ये चापि तुष्टा गिरिकन्दरेषु ताञ्श्रावयेस्त्वं[10] इद[11] सूत्र भद्रकम् ॥ १४० ॥

---

1) हि A. B.

2) क्षिपेत O. B. K. क्षिपेय A. W. क्षिपित्व Cb.

3) संधितस्याग्यङ्क Cb. संदिशामि O.

4) मार्षो के ख त्वं A. मा खे कु त्वं B. मा को खु त्वं Ca. मा खा कु त्वं Cb. मा खो कु त्वं K. मा खो कु त्वं W. मा त्वमिद O. Our reading conjectural.

5) ष K. O. षु the others.

6) भवेन्ति Cb. K. भवन्ति B. भावेन्ति O भवित्वा A. W.

7) मं B. K.

8) षु A. Ca. Cb. W. न O.

9) सम्भवो K.

10) यस्व O.

11) म A. B. K. W. द Cb. O.

कल्याणमित्रांश्च निषेवमाणाः[1] पापांश्च मित्रान्परिवर्जयन्ताः ।
यानीदृशान्पश्यसि बुद्धपुत्रांस्तेषामिदं सूत्र[2] प्रकाशयेसि ॥ १४१ ॥
अच्छिद्रशीला[3] मणिरत्नसादृशा वैपुल्यसूत्राण परिग्रहे स्थिताः ।
पश्येसि यानीदृशबुद्धपुत्रांस्तेषाग्रतः[4] सूत्रमिदं वदेसि ॥ १४२ ॥
5 अक्रोधना ये सद आर्जवाश्च कृपासमन्वागत सर्वप्राणिषु ।
सगौरवा ये सुगतस्य अन्तिके तेषाग्रतः[4] सूत्रमिदं वदेसि ॥ १४३ ॥
यो धर्मु[5] भाषे परिषाय मध्ये असङ्गप्राप्तो वदि[6] युक्तमानसः ।
दृष्टान्तकोटीनयुतैरनेकैस्तस्येद सूत्रं उपदर्शयेसि[7] ॥ १४४ ॥
मूर्धाञ्जलिं यश्च करोति बद्धा[8] सर्वज्ञभावं परिमार्गमाणः ।
10 दिशो दृश[9] यो ऽपि च चङ्क्रमेत[10] सुभाषितं भिक्षु गवेषमाणः ॥ १४५ ॥
वैपुल्यसूत्राणि च धारयेत[11] न चास्य रुच्यन्ति[12] कदाचिदन्ये ।
एकां[13] पि गाथां न च धारये ऽन्यतः[14] संश्रावयेस्त्वं वरसूत्रमेतत् ॥ १४६ ॥

---

1) ना A. B. Cb. W. नां K. नाः O.

2) त्रं K. तेषाग्रतः सूत्रमिदं भणस्व O.

3) ला A. Cb. K. O. W. लात्म B.

4) षामग्रतः W. भाषाहि तेषाग्रत एत सूत्रम् O. But तेषाग्रतः सूत्रमिदं भणाहि vs. 143.

5) धर्म A. B. Cb. W. O. धर्मु K.

6) वदि for वदे (वदेत्).

7) दर्शयासि O.

8) बधा in all MSS. except O., which has करित्व तिष्ठेत्.

9) दिशोदृशो B. K. O. has दिशा च विदिशापि. दशो दिशो the others.

10) ते A. W. तत् B. तं Cb. त K.

11) यानि A. येत् B. K. येन Cb. येत W. यत्तो O.

12) रोदंति A. W. रुच्यंति B. Cb. K. O.

13) एका A. B. Cb. W. एकां K.

14) येन्यतः A. येत्तत् B. येतः Cb. येत्ततः K. येन्यंतं W. रेत अन्यम् O.

तथागतस्य यथ धातु धारयेत्तथैव यो मार्गति कोचि तं नरः[1]।
एमेव[2] यो मार्गति सूत्रमीदृशं लभित्व[3] च मूर्धनि[4] धारयेत ॥ १४७ ॥
अन्येषु सूत्रेषु[5] न कदाचि चित्ता लोकायतैरन्यतरैश्च शास्त्रैः[6]।
बालान एतादृश भोन्ति गोचरास्तांस्त्वं[7] विवर्जित्व प्रकाशयेरिदम्[8]॥ १४८ ॥
पूर्णं पि[9] कल्पं अहु शारिपुत्र वदेयमाकारसहस्रकोट्यः।
ये प्रस्थिता उत्तममग्रबोधिं तेषामतः सूत्रमिदं वदेसि[10] ॥ १४९ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय औपम्यपरिवर्तो नाम तृतीयः ॥

---

1) कोविते नरः A. कोविडं नरः W. कोविदन्यः B. Cb. केचिदन्यः K.

2) K. adds व.

3) Sic O.; लब्धा the rest.

4) मूर्ध्नारिक्त A. मूर्ध्नेनि च B. मूर्द्धेति च Cb. मूर्ध्नेक्त च K. मूर्ध्नि इक्त W. मूर्धनि O.

5) अन्येभि सूत्रेभि न तस्य O. Corrupt; perhaps to r. अन्येहि सूत्रेहि न तस्य.

6) लोकायतं नैव कदाचि चिन्तयी O.

7) रान् ते त्वं A. W. राः तास्त्वं B. रा एवं Cb. रास्तांस्त्वं K.

8) °शयेरिदम् all but O which has °शयेसि.

9) पूर्णापि A. W.

10) भोति A. Cb. K. भणाहि O.

# IV.

अथ खल्वायुष्मान्सुभूतिरायुष्मांश्च महाकात्यायन आयुष्मांश्च महाकाश्यप आयुष्मांश्च महामौद्गल्यायन इममेवंरूपमश्रुतपूर्वं धर्मं श्रुत्वा भगवतो ऽन्तिकात्संमुखमायुष्मतश्च शारिपुत्रस्य व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधावाश्चर्यप्राप्ता अद्भुतप्राप्ता औद्बिल्यप्राप्तास्तस्यां वेलायामुत्थायासनेभ्यो येन भगवांस्तेनोपसंक्रामन्[1]नुपसंक्रम्यैकांसमुत्तरासङ्गं[2] कृत्वा दक्षिणं[2] जानुमण्डलं[2] पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणामयित्वा[3] भगवन्तमभिमुखमुल्लोकयमाना अवनतकाया[4] अभिनतकायाः[5] प्रणतकायास्तस्यां[6] वेलायां भगवन्तमेतदवोचन्॥

वयं हि भगवञ्जीर्णा वृद्धा महल्लका अस्मिन्भिक्षुसंघे स्थविरसंमता जराजीर्णीभूता[7] निर्वाणप्राप्ताः स्म इति भगवन्निरुद्यमा[8] अनुत्तरायां सम्यक्संबोधावप्रतिबलाः स्माप्रतिवीर्यारम्भाः स्म। यदापि भगवान्धर्मं देशयति चिरं निषण्णश्च भगवान्भवति वयं च तस्यां धर्मदेशनायां प्रत्युपस्थिता भवामः। तदाप्यस्माकं भगवन् चिरं निषण्णानां भगवन्तं चिरं पर्युपासितानामङ्गप्रत्यङ्गानि दुःखन्ति संधिविसंधयश्च दुःखन्ति[9]। ततो वयं भगवन्भगवतो

---

1) उपसंक्रामन् left out in K. उपसंक्रमी पसंक्रमित्वा O.

2) ॰सङ्गानि॰ दक्षिणानि ॰मण्डलानि.

3) Sic O.; प्रणाम्य the rest; correct would be प्रणम्य or प्रणमय्य.

4) अभि K.

5) वि K. O.

6) A. adds प्रणष्टकाया.

7) All but O. जीर्णाभूता.

8) रुत्सुका A. B. W. रुद्यमाना Ca Cb. रुद्यामः O.

9) दुःख्यंति A. Ca.

धर्मं देशयमानस्य शून्यतानिमित्ताप्रणिहितं सर्वमाविष्कुर्मो[1] नास्माभिरेषु बुद्धधर्मेषु बुद्ध-
क्षेत्रव्यूहेषु वा बोधिसत्त्वविक्रीडितेषु वा तथागतविक्रीडितेषु वा स्पृहो[2]त्पादिता। तत्क-
स्य हेतोः। यच्चास्माद्भगवंस्त्रैधातुकान्निर्धाविता निर्वाणसंज्ञिनो वयं च जराजीर्णाः[3]। ततो
भगवन्नस्माभिरप्यन्ये बोधिसत्त्वा अववदिता अभूवन्ननुत्तरायां सम्यक्संबोधावनुशिष्टाश्च[4]
न च भगवंस्तत्रास्माभिरेकमपि स्पृहाचित्तमुत्पादितमभूत्। ते वयं भगवन्नेतर्हि भगवतो 5
ऽन्तिकाच्छ्रावकाणामपि व्याकरणमनुत्तरायां सम्यक्संबोधौ भवतीति श्रुत्वाश्चर्याद्भुतप्रा-
प्ता महालाभप्राप्ताः स्म भगवन्नद्य सहसैवेममेवंरूपमश्रुतपूर्वं तथागतघोषं श्रुत्वा महार-
त्नप्रतिलब्धाश्च[5] स्म भगवन्नप्रमेयरत्नप्रतिलब्धाश्च[5] स्म। भगवन्नमार्गितमपर्येष्ट[6]मचिन्ति-
तमप्रार्थितं चास्माभिर्भगवन्निदमेवंरूपं महारत्नं प्रतिलब्धम्। प्रतिभाति[7] नो भगवन्प्रति-
भाति नः[7] सुगत॥ 10

तद्यथापि नाम भगवन्कश्चिदेव पुरुषः पितुरन्तिकादपक्रामेत्[8] सो ऽपक्रम्यान्यतरं
जनपदप्रदेशं गच्छेत्। स तत्र बहूनि वर्षाणि विप्रवसेद्विंशतिं वा त्रिंशद्वा चत्वारिंशद्वा
पञ्चाशद्वा। अथ स भगवन्महान्पुरुषो भवेत्स च दरिद्रः स्यात्स च[9] वृत्तिं पर्येषमाण आहा-
रचीवरहेतोर्दश दिशः[10] प्रक्रामन्नन्यतरं जनपदप्रदेशं गच्छेत्। तस्य च[11] स पितान्यतमं[12] जन-

---

1) ष्करोम Cb ष्क्रामः K. मनसि करोम O.
2) हो प्यु A. B. हाप्यु Ca. हामु Cb. हा उ K. होत्पा W. O.
3) जराव्याधिकीर्णा A. जराभिभूता O.
4) शास्ता Cb.
5) श्चा A. B. Ca. Cb. W. चा K.
6) पर्यन्विष्ट A. B. Ca. W. पर्येष्ट Cb. K. पर्येषित O., better.
7) प्रतिलाभिनो °नः A. Ca. W.
8) क्रा Cb. K. W. क्र Cb. O. का प्रका A. सान्तिकादपक्र O.
9) च in Ca. only.
10) दिशविदिशः A. B. W. दिशोविदिशः Ca. दिशोदिशः Cb. दशोदिशः K.
11) In Ca. Cb. O. only.
12) तम left out in Ca. Cb. O.

एवं प्रक्रान्तः स्याद्बहुधनधान्य(1)हिरण्यकोशकोष्ठागारश्च भवेद्बहुसुवर्णरूप्य(2)मणिमुक्तावैडूर्यशङ्खशिलाप्रवाडजातरूपरजत(3)समन्वागतश्च भवेद्बहुदासीदासकर्मकरपौरुषेयश्च भवेद्बहुहस्त्यश्वरथगवेडकसमन्वागतश्च भवेत्। महापरिवारश्च भवेन्महाजनपदेषु च धनिकः स्यादायोगप्रयोगकृषिवणिज्य(4)प्रभूतश्च भवेत्॥

5 अथ खलु(5) भगवन्स दरिद्रपुरुष आहारचीवरपर्येष्टिहेतोर्ग्रामनगरनिगमजनपदराष्ट्रराजधानीषु पर्यटमानो(6)ऽनुपूर्वेण यत्रासौ पुरुषो बहुधनहिरण्यसुवर्णकोशकोष्ठागारस्तस्यैव पिता वसति तन्नगरमनुप्राप्तो भवेत्। अथ खलु भगवन्स दरिद्रपुरुषस्य पिता बहुधनहिरण्यकोशकोष्ठागारस्तस्मिन्नगरे वसमानस्तं पञ्चाशद्वर्षनष्टं पुत्रं सततसमितमनुस्मरेत्समनुस्मरमाणश्च न कस्यचिदाचक्षे(7)दन्यत्रैक एवात्मनाध्यात्मं संतप्येदेवं च चि-

10 तयेत्। अहमस्मि जीर्णो वृद्धो महल्लकः प्रभूतं मे हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं संविद्यते न च मे पुत्रः कश्चिदस्ति। मा हैव मम कालक्रिया भवेत्सर्वमिदमपरिभुक्तं विनश्येत्। स तं पुनः पुनः पुत्रमनुस्मरेत्। अहो नामाहं निर्वृतिप्राप्तो भवेयं(8) यदि मे स पुत्र इमं धनस्कन्धं परिभुञ्जीत(9)॥

अथ खलु भगवन्स दरिद्रपुरुष आहारचीवरं पर्येषमाणो ऽनुपूर्वेण येन तस्य प्रभूत-

15 हिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य समृद्धस्य(10) पुरुषस्य(11) निवेशनं तेनोपसंक्रामेत्।

---

1) धान्य in K. only.

2) रूप्य left out in A. W.

3) रजत left out in K.

4) वाणिज्य P. वणिक् O.

5) खलु is left out in B. Ca. Cb. throughout this chapter.

6) Sic P. अनुहिण्डमानः O. पर्येषमाणो the rest.

7) चक्षेयाद्° O.; an instance of wrong Sanskritisation of an original आचक्खेय, Skr. आचक्षीत.

8) भूयो Ca. Cb. K. भूयां P. भवेद्व O. भूयां for भूयासं.

9) तु A. Cb. त Ca. यात् K. P.

10) In Cb. only.

11) In Cb. K. only.

अथ खलु भगवन्स तस्य दरिद्रपुरुषस्य पिता स्वके निवेशनद्वारे महत्या ब्राह्मणक्षत्रि-
यविट्छूद्र[1]परिषदा परिवृतः पुरस्कृतो महासिंहासने सपादपीठे सुवर्णरूप्यप्रतिमण्डित
उपविष्टो हिरण्यकोटीशत[2]सहस्रैर्व्यवहारं कुर्वन्वालव्यजनेन वीज्यमानो विततविताने
पृथिवीप्रदेशे मुक्तकुसुमाभिकीर्णे रत्नदामाभिप्रलम्बिते[3] महत्यर्द्ध्योपविष्टः स्यात्[4] ।
अद्राक्षीत्स भगवन्दरिद्रपुरुषस्तं स्वकं पितरं स्वके निवेशनद्वार एवंरूपयर्द्ध्योपविष्टं 5
महता जनकायेन परिवृतं गृहपतिकृत्यं कुर्वाणम् । दृष्ट्वा च पुनर्भीतस्त्रस्तः संविग्नः संहृ-
ष्ट[5]रोमकूपजात उद्विग्नमानस[6] एवमनुविचिन्तयामास[7] । सहसैवायं मया राजा वा राजमात्रो
वासादितो नास्त्यस्माकमिह किंचित्कर्म । गच्छामो वयम् । येन दरिद्रवीथी तत्रास्मा-
कमाहारचीवरमल्पकृच्छ्रेणैवोत्पत्स्यते । अलं मे चिरं विलम्बितेन । मा हैवाहमिह
वैष्टिको[8] वा गृह्येयान्यतरं वा दोषमनुप्राप्नुयाम् ॥ 10

अथ खलु भगवन्स दरिद्रपुरुषो दुःखपरंपरामनसिकारभयभीतस्त्वरमाणः प्रक्रा-
मेत्पलायेन्न तत्र संतिष्ठेत् । अथ खलु भगवन्स आढ्यः पुरुषः स्वके निवेशनद्वारे सिंहासन
उपविष्टस्तं स्वकं पुत्रं सहदर्शनेनैव प्रत्यभिजानीयात् । दृष्ट्वा च पुनस्तुष्ट उदग्र आत्तम-
नस्कः[9] प्रमुदितः प्रीतिसौमनस्यजातो भवेदेवं च चिन्तयेत् । आश्चर्यं यावद्यत्र[10] हि[11] नामास्य[11]
महतो[11] हिरण्यसुवर्णधनधान्यकोशकोष्ठागारस्य परिभोक्तोपलब्धः । अहं चैतमेव पुनः 15
पुनः समनुस्मरामि । अयं च स्वयमेवेहागतः । अहं च जीर्णो वृद्धो महल्लकः ॥

---

1) विटच्छू A. K. गृहपतिपर्षदा B. Cb. गृहपतिपरिषदा O.
2) शत in Ca. Cb. O. only.
3) रत्नवितान A. B. K. W. P.
4) स्यात् left out in K.
5) संहर्षित Cb. संहृष्ट O. The others संहर्षित.
6) Left out in Cb.
7) अनुवि left out in A. Cb. K. O. P.
8) विष्टीकारको O. 9) मनाः B. O.
10) यावत् यस्य A. यत्र (without यावत्) Ca. Cb. O.
11) Left out in K. नामेमस्य for नामास्य O.

अथ खलु भगवन्स पुरुषः पुत्रतृष्णासंपीडितस्तस्मिन्तणालवमुहूर्ते जवनान्पुरुषान्संप्रेषयेत्[1][2][3][4][5]। गच्छत मार्षा एतं पुरुषं शीघ्रमानयथम्। अथ खलु भगवंस्ते पुरुषाः सर्व एव जवेन प्रधाविताऽस्तं दरिद्रपुरुषमध्यालम्बेयुः। अथ खलु भगवन्स दरिद्रपुरुषस्तस्यां वेलायां भीतस्त्रस्तः संविग्नः संहृष्टरोमकूपजात उद्विग्नमानसो दारुणमार्तस्वरं मुञ्चेदारवे-
5 द्विरवेत्[6][7]। नाहं[8] युष्माकं किंचिदपराध्यामिति वाचं भाषेत। अथ खलु ते पुरुषा बलात्कारेण तं दरिद्रपुरुषं विरवन्तमप्याकर्षेयुः। अथ खलु स दरिद्रपुरुषो भीतस्त्रस्तः संविग्न[9] उद्विग्नमानस[10] एवं च चिन्तयेत्। मा तावदहं वध्यो दण्ड्यो भवेयं नश्यामीति। स मूर्च्छितो धरण्यां प्रपतेत्। विसंज्ञश्च स्यादासन्ने[11] चास्य स पिता भवेत्। स तान्पुरुषानेवं[12] वदेत्। मा भवन्त एतं[13] पुरुषमानयन्त्विति[14] तमेनं शीतलेन वारिणा परिषिञ्चित्वा न भूय

---

1) ष्णायां B. ष्णाया O.

2) Cb. O. add तस्मिन्समये.

3) B. Cb. read क्षणे तस्मिं लवे तस्मिं मुहूर्ते. O. has क्षणे लवमुहूर्ते.

4) Sic O.; जविनान् the rest.

5) संप्रयच्छति K.

6) MSS. संहृषित.

7) From सो till उद्विग्नमान (before एवं चिंतयेत्) left out in Cb. मना Ca. O.

8) रवेन्नाहं in all MSS.

9) O. has समुद्विग्नमना एवं च. After संविग्नः MSS. except Cb. O. add संहृषितरोमकूपजात.

10) मना A. Ca. K.

11) विसञ्ज्ञश्च भवेदा O. विषर्षाश्च स्या A. B. K. W. विषषाश्च सा Ca. निषषा स्या Cb.

12) स च तावत्पु Cb.

13) एवं A. K. W. एन Ca. एतं Cb.

14) नयिस्त्विति A. नयतस्तमेन B. नयतेति Ca. नयंतु Cb. नयगुरिति K. नयेयुरिति P. नयास्त्विति W. नयथ A. थ माथ्वपुरुषस्त O.

आलपेत्। तत्कस्य हेतोः। जानाति स गृहपतिस्तस्य[1] दरिद्रपुरुषस्य हीनाधिमुक्तिकतामात्मनश्चोदारस्थामतां जानीते च ममैष[2] पुत्र इति॥

अथ खलु भगवन्स गृहपतिरुपायकौशल्येन न कस्यचिदाचक्षेन्ममैष पुत्र इति।[3] अथ खलु भगवन्स गृहपतिरन्यतरं पुरुषमामन्त्रयेत्। गच्छ त्वं भोः पुरुष। एनं दरिद्रपुरुषमेवं वदस्व। गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि मुक्तो ऽसि। एवं वदति स पुरुषस्तस्मै प्रतिश्रुत्य येन स दरिद्रपुरुषस्तेनोपसंक्रामेदुपसंक्रम्य तं दरिद्रपुरुषमेवं वदेत्। गच्छ त्वं भोः पुरुष येनाकाङ्क्षसि मुक्तो ऽसीति।[4] अथ खलु स दरिद्रपुरुष इदं वचनं श्रुत्वाश्चर्याद्भुतप्राप्तो[5] भवेत्। स उत्थाय तस्मात्पृथिवीप्रदेशाद्येन दरिद्रवीथी तेनोपसंक्रामेदाहारचीवरपर्येष्टिहेतोः। अथ खलु स गृहपतिस्तस्य दरिद्र[6]पुरुषस्याकर्षणहेतोरुपायकौशल्यं प्रयोजयेत्। स तत्र द्वौ पुरुषौ प्रयोजयेद्दुर्वर्णावल्पौजस्कौ। गच्छतां[7] भवन्तौ यो ऽसौ पुरुष इहागतो ऽभूत्[8]। तं युवां द्विगुणया दिवसमुद्रयात्मवचनेनैव भरयित्वेह मम निवेशने कर्म कारापयेथाम्[10]। सचेत्स एवं वदेत्किं कर्म कर्तव्यमिति स युवाभ्यामेवं वक्तव्यः संकारधानं शोधयितव्यं सहावाभ्यामिति। अथ[11] तौ पुरुषौ तं दरिद्र[6]पुरुषं पर्येषयित्वा[12] तया क्रियया संपादयेताम्। अथ खलु तौ द्वौ पुरुषौ स च दरिद्रपुरुषो वेतनं गृहीत्वा तस्य महाधनस्य

1) A. K. add च.

2) व A. B. ष Ca. Cb. K. स्ववशगतश्च मे एष O.

3) This sentence is left out in Cb.

4) इति in B. Ca. only.

5) धर्म is added in A. B. Cb. K. W. आश्चर्यप्राप्तो O.

6) दरिद्र left out in K.

7) द्य A. त B. Ca. Cb. W. तं K. तु O.

8) भवेत् A. K. W.

9) भरित्वा आनयथ इह O.

10) यथाः A. यतः B. P. येथाः Ca. K. W. गत Cb. कारापणाय O.

11) K. adds खलु.

12) पर्येष्य Ca. पर्येषित्वा Cb.

पुरुषस्यान्तिकात्तस्मिन्नेव निवेशने संकारधानं शोधयेयुः[1]। तस्यैव च महाधनस्य पुरुषस्य गृहपरिसरे कटपलिकुञ्चिकायां[2] वासं कल्पयेयुः। स चाढ्यः पुरुषो गवाक्षवातायनेन तं स्वकं पुत्रं पश्येत्संकारधानं शोधयमानम्। दृष्ट्वा च पुनराश्चर्यप्राप्तो भवेत्॥

अथ खलु स गृहपतिः स्वकान्निवेशनादवतीर्यापनयित्वा[3] माल्याभरणान्यपनयित्वा 5 मृदुकानि वस्त्राणि चौक्षाण्युदाराणि[4] मलिनानि वस्त्राणि प्रावृत्य दक्षिणेन पाणिना पिटकं परिगृह्य पांसुना स्वगात्रं दूषयित्वा दूरत एव संभाषयमाणो[5] येन स दरिद्रपुरुष-स्तेनोपसंक्रामेदुपसंक्रम्यैवं वदेत्। वहन्तु भवन्तः पिटकानि मा तिष्ठत[6] हरत पांसूनि। अनेनोपायेन तं पुत्रमालपेत्संलपेच्चैनं वदेत्। इहैव त्वं भोः[7] पुरुष कर्म कुरुष्व मा भूयो ऽन्यत्र गमिष्यसि। सविशेषं ते ऽहं वेतनकं दास्यामि। येन येन च ते कार्यं भवेत्तद्विश्रब्धं 10 मां याचेर्यदि वा कुण्डमूल्येन यदि वा कुण्डिकामूल्येन यदि वा स्थालिका[8]मूल्येन यदि वा काष्ठमूल्येन यदि वा लवणमूल्येन यदि वा भोजनेन यदि वा प्रावरणेन। अस्ति मे भोः पुरुष जीर्णशाटी। सचेत्तया ते कार्यं स्याद्याचेरहं ते ऽनुप्रदास्यामि। येन येन ते भोः पुरुष कार्यमेवंरूपेण परिष्कारेण तं तमेवाहं ते सर्वमनुप्रदास्यामि। निर्वृतस्त्वं भोः पुरुष भव यादृशस्ते पिता तादृशस्ते ऽहं मन्तव्यः। तत्कस्य हेतोः। अहं च वृद्धस्त्वं च दहरो मम 15 च त्वया बहु कर्म कृतमिमं संकारधानं शोधयता न च त्वया भोः पुरुषात्र कर्म कुर्वता

1) शोधयामासुः Ca. शोधयामास Cb.

2) गृहपतिसरे कटके पल्लिकंचिकायां A. W. कटकपल्लेकंचिकाया B. गृहपरिसरे कटपल्लिकुंचिकया Ca. °कायां Cb. गृहपतिसकरे K. P. कटपलिकुंचिकायां P. गृहपार्श्वे कुन्तिपलोकुञ्चे O. Cp. vs. 23 below.

3) अपनीय B. तीर्य संकरदूषितगात्रस्य। मूलमुपसंक्रमति। अपनामयित्वा O.

4) चौक्षाणि left out in K.

5) Probably an error for संभावयमानो; O. has संक्रामयमाणो.

6) त A. B. Cb. K. W. ता Ca.

7) In Cb. only. For भोः MSS. except O. commonly भो.

8) क A. B. Ca. K. P. W. चोटकम्बलेन O. and for भोजनेन is has स्थाली-मूल्येन.

शाठ्यं[1] वा वक्रता वा कौटिल्यं वा मानो वा म्रक्षो वा कृतपूर्वः करोषि वा। सर्वथा ते भोः पुरुष न समनुपश्याम्येकमपि पापकर्म यथैषामन्येषां पुरुषाणां कर्म कुर्वतामिमे दोषाः संविद्यन्ते। यादृशो मे पुत्र औरसस्तादृशस्त्वं ममाभ्याप्रेण भवसि॥

अथ खलु भगवन्स गृहपतिस्तस्य दरिद्रपुरुषस्य पुत्र इति नाम कुर्यात्स च दरिद्रपुरुषस्तस्य गृहपतेरन्तिके पितृसंज्ञामुत्पादयेत्। अनेन भगवन्पर्यायेण स गृहपतिः पुत्रकाम[2]तृषितो विंशतिवर्षाणि[3] तं पुत्रं संकारधानं शोधापयेत्। अथ विंशतेर्वर्षाणामत्ययेन स दरिद्रपुरुषस्तस्य गृहपतेर्निवेशने विश्रब्धो[4] भवेन्निष्क्रमणप्रवेशे[5] तत्रैव च कटपलिकुञ्चिकायां[6] वासं कल्पयेत्॥

अथ खलु भगवंस्तस्य गृहपतेर्ग्लान्यं प्रत्युपस्थितं भवेत्स मरणकालसमयं चात्मनः प्रत्युपस्थितं समनुपश्येत्। स तं दरिद्रपुरुषमेवं वदेत्। आगच्छ त्वं भोः पुरुष[7]। इदं मम प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागारमस्त्यर्क[8] बाढग्लान इच्छाम्येतं[9] यस्य दातव्यं यतश्च[10] ग्रहीतव्यं यच्च[11] निधातव्यं भवेत्। सर्वं संजानीयाः। तत्कस्य हेतोः। यादृश एवाहमस्य[12] द्रव्यस्य स्वामी तादृशस्त्वमपि मा च मे त्वं किंचिदतो विप्रणाशयिष्यसि[13]॥

---

1) साथता A. शाठ्यता K.

2) का A. W. P. क Ca. Cb. K.

3) विंशतीनां O. A. B. Cb. K. W. P. विंशतेर् Ca.

4) विस्रम्भी P. विस्रम्भिको O.

5) ष्क्रा A.

6) परिकुंचिताया A. पलिकुंचे Ca. पलिकुंचे Cb. परिकुंचिकायां K P. पलिकुंचिनायां W. कोणपलिकुंचे O.

7) पुरुषेदं O.

8) A. adds च.

9) तं A. K. P. नं Ca.

11) त left out in K.

10) यतश्च Cb. Read येन च?

12) मे Ca. Cb. K.

13) शेयासीति O.

अथ खलु भगवन्स दरिद्रपुरुषो ऽनेन पर्यायेण तच्च तस्य गृहपतेः प्रभूतं हिरण्यसुवर्णधनधान्यकोशकोष्ठागारं संजानीयादात्मना च ततो निःस्पृहो भवेन्न च तस्मात्किंचित्प्रार्थयेद्न्तशः सक्तुप्रस्थमूल्यमात्रमपि तत्रैव च कटपलिकुञ्चिकायां[1] वासं कल्पयेत्तामेव दरिद्रचिन्तामनुविचिन्तयमानः[2] ॥

5 अथ खलु भगवन्स गृहपतिस्तं पुत्रं शक्तं परिपालकं[3] परिपक्वं विदित्वावमर्दितचित्तमुदारसंज्ञया च पौर्विकया दरिद्रचिन्तयार्तीयन्तं[4] जेह्रीयमाणं जुगुप्समानं विदित्वा मरणकालसमये प्रत्युपस्थिते तं दरिद्रपुरुषमानाय्य[5] महतो ज्ञातिसंघस्योपनामयित्वा[6] राज्ञो वा राजमात्रस्य वा पुरतो नैगमजानपदानां च संमुखमेवं संश्रावयेत् । शृण्वन्तु भवन्तो ऽयं मम पुत्र औरसो मयैव जनितः । अमुकं नाम नगरं तस्मादेष पञ्चाशद्वर्षो नष्टः । अमुको

10 नामैष नाम्नाहमप्यमुको नाम । ततश्चाहं नगरादेतमेव मार्गमाण इहागतः । एष मम पुत्रो ऽहमस्य पिता । यः कश्चिन्ममोपभोगो ऽस्ति तं सर्वमस्मै पुरुषाय निर्यातयामि यच्च मे किंचिदस्ति प्रत्यात्मकं धनं तत्सर्वमेष एव जानाति ॥

अथ खलु भगवन्स दरिद्रपुरुषस्तस्मिन्समय इममेवंरूपं घोषं श्रुत्वाश्चर्याद्भुतप्राप्तो भवेदेवं च विचिन्तयेत्सहसैव मयेदमेव तावद्धिरण्यसुवर्णधनधान्यकोशकोष्ठागारं प्रति-

15 लब्धमिति ॥

एवमेव भगवन्वयं तथागतस्य पुत्रप्रतिरूपकास्तथागतश्चास्माकमेवं वदति पुत्रा मम यूयमिति यथा स गृहपतिः । वयं च भगवंस्तिसृभिर्दुःखताभिः संपीडिता अभूम[7] ।

---

1) पलिकुंचितायां A. परि° W. पलिकुंचे Ca. पलिकुंचे Cb. कटकपलिकुंचिकायां K. कोणे पलिकुंचे O.

2) चिन्तयेत् Ca

3) परि left out in K. परिपालनसमर्थं O.

4) Better °यर्तीय° (i. e. °या + ऋतीय); °या ऋतीय° P.

5) Sic P.; नयित्वा the others.

6) उपनाम्य च added in K. P.

7) अभूवन् A. K. W. अभूवं Cb. आसीत् O.

कतमाभिस्तिसृभिर्यदुत दुःखदुःखतया संस्कारदुःखतया[1] विपरिणामदुःखतया च संसारे च हीनाधिमुक्तिकाः। ततो वयं भगवता बहून्धर्मान्प्रत्यवरान्[2]संकारधानसदृशाननुविचिन्तयिताः[3]। तेषु चास्म प्रयुक्ता घटमाना व्यायच्छमाना[4] निर्वाणमात्रं च वयं भगवन्दिवसमुद्गामिव पर्येषमाणा मार्गामः। तेन च वयं भगवन्निर्वाणेन प्रतिलब्धेन तुष्टा भवामो बहु च लब्धमिति मन्यामहे[5] तथागतस्यान्तिकादेषु[6] धर्मेष्वभियुक्ता[7] घटित्वा व्यायमित्वा[8]। प्रजानाति[9] च तथागतो ऽस्माकं हीनाधिमुक्तिकतां ततश्च भगवानस्माननुपेक्षते[10] न संभिनत्ति[11] नाचष्टे यो ऽयं तथागतस्य ज्ञानकोश एष एव युष्माकं भविष्यतीति। भगवांश्चास्माकमुपायकौशल्येनास्मिंस्तथागतज्ञानकोशे दायादान्संस्थापयति[12]। निःस्पृहाश्च[13] वयं भगवंस्तत एवं जानीम एतदेवास्माकं बहुकरं[14] यद्वयं[15] तथागतस्यान्तिकाद्दिवसमुद्रामिव निर्वाणं प्रतिलभामहे। ते वयं भगवन्[16]बोधिसत्त्वानां महासत्त्वानां तथागतज्ञानदर्शनमारभ्योदारां 10

---

1) K. puts the 2nd as the 3rd.

2) बहवो धर्माः प्रत्यवराः P. बहवो धर्माः वयं च तथागतज्ञानं व्यवहारयामः प्रत्यवराः K.

3) विचिंतापिताम् Ca. चिन्तापयमानाम् O. चिन्तयिता P.

4) घटामहे व्यायच्छामहे Ca.

5) मन्यमानाः॥ B. K.

6) व A. W.

7) युज्य B. योजित्वा O., more original.

8) व्यायम्य B. Ca.

9) प्र left out in K. O. P.

10) Sic P. नस्यानु K. नस्माकमनु A. B. Ca. Cb. ज्ञात्वा चास्माकं तथागत उपेक्षति O.

11) संभिन्दति O.

12) A. W. P. add वयं च तथागतज्ञानं व्यवहारयामः O. has तथागतज्ञानरत्नकोशे व्योहारापयि.

13) K. adds तत्र.

14) All but O. तरं.

15) यद् left out in A. W.

16) भगवन् left out in A. W.

धर्मदेशनां कुर्मस्तथागतज्ञानं विवरामो दर्शयाम उपदर्शयामो [1] वयं भगवंस्ततो निःस्पृहाः समानाः [2]। तत्कस्य हेतोः। उपायकौशल्येन तथागतो ऽस्माकमधिमुक्तिं प्रजानाति। तच्च वयं न जानीमो न बुध्यामहे यदिदं भगवतेतर्हि कथितं यथा वयं भगवतो भूताः पुत्रा भगवांश्चास्माकं स्मारयति तथागतज्ञानदायादान् [3]। तत्कस्य हेतोः। यथापि नाम वयं तथागतस्य भूताः पुत्रा इति। अपि तु खलु पुनर्हीनाधिमुक्ताः। सचेद्भगवानस्माकं पश्येदधिमुक्तिबलं बोधिसत्त्वशब्दं भगवानस्माकमुदाहरेद्वयं पुनर्भगवता द्वे कार्ये कारापिता [4] बोधिसत्त्वानां चाग्रतो हीनाधिमुक्तिका इत्युक्तास्ते चोदारायां बुद्धबोधौ समादापिताः [4]। अस्माकं चेदानीं भगवानधिमुक्तिबलं ज्ञात्वेदमुदाहृतवाननेन वयं भगवन्पर्यायेणैवं वदामः। सहसैवास्माभिर्निःस्पृहैर् [5] नाकाङ्क्षितममार्गितमपर्येषितमचिन्तितमप्रार्थितं सर्वज्ञतारत्नं प्रतिलब्धं यथापीदं तथागतस्य पुत्रैः॥

अथ खल्वायुष्मान्महाकाश्यपस्तस्यां वेलायामिमा गाथा अभाषत॥

आश्चर्य [6] भूता स्म तथाद्भुता [7] श्च [8] औद्बिल्यप्राप्ता स्म श्रुणित्व घोषम्।
सहसैव अस्माभिरयं तथाद्य [9] मनोज्ञघोषः श्रुतु नायकस्य॥ १॥
विशिष्टरत्नान महन्तराशिर् [10] मुहूर्तमात्रेणयमद्य लब्धः।
न चिन्तितो नापि कदाचि प्रार्थितस्तं श्रुत्व आश्चर्यगता स्म सर्वे॥ २॥

---

1) In A. added च.

2) In A. K. W. P. only.

3) दानं A. दानां B. दान्मान Ca. दान् K. दायं W. दर्शनस्य दातार दा° O.

4) पि A. Ca. W. O. पि K. P.

5) निःस्पृहैभिर्निष्पिपासैभिर् O.

6) र्याद्भु A. K. र्याद्भू P. र्यभू Ca. र्यप्राप्ता O.

7) भू A. W. द्भु Ca. K.

8) स्म Ca.

9) तद्यथा A. K. तवाद्य Ca. Quite different O.: सहसा हि अस्मैरिदमेवरूपं मनुज्ञघोषं श्रुत.

10) All but O. महान्त So too in the sequel.

यथापि बालः पुरुषो भवेत उत्प्लावितो बालजनेन सत्तः।
पितुः सकाशातु[1] अपक्रमेत[2] अन्यं च देशं व्रजि सो सुदूरम्॥ ३॥
पिता च तं शोचति तस्मि काले पलायितं ज्ञात्व स्वकं हि पुत्रम्।
शोचन्तु सो दिग्विदिशासु कुंचे[3] वर्षाणि पञ्चाशदनूनकानि॥ ४॥
तथा च सो पुत्र गवेषमाणो अन्यं महन्तं नगरं हि गत्वा। 5
निवेशनं मापिय तत्र तिष्ठेत्समर्पितो कामगुणेहि पञ्चभिः॥ ५॥
बहुं हिरण्यं च सुवर्णरूप्यं धान्यं धनं शङ्खशिलाप्रवाडम्।
हस्ती च अश्वाश्च पदातयश्च गावः पशूश्चैव तथैडकाश्च॥ ६॥
प्रयोग आयोग तथैव तेत्रा दासी च दासा बहु प्रेष्यवर्गः।
सुसत्कृतः प्राणिसहस्रकोटिभी[4] राज्ञश्च सो वल्लभु नित्यकालम्॥ ७॥ 10
कृताञ्जली तस्य भवन्ति[5] नागरी[6] ग्रामेषु ये चापि वसन्ति ग्रामिणः[7]।
बहुवाणिजास्तस्य व्रजन्ति अन्तिके बहूहि कार्येहि कृताधिकाराः॥ ८॥
एतादृशो ऋद्धिमतो नरः स्याज्जीर्णश्च वृद्धश्च महल्लकश्च।
स पुत्रशोकं अनुचिन्तयन्तः तपेय[8] रात्रिंदिव नित्यकालम्॥ ९॥

---

1) MSS. शात्तु.

2) तु B. W. स प्रक्रमेय O.

3) कुंच A. कुंचो B. कुंचे K. दिशा च विदिशा च समन्त अण्वन्ते O. The verb omitted in P. Cp. अण्वति in Mahāvastu, but also Skr. अञ्चति; further अण्ठते and Pāli *andhati.*

4) भि A. K. W. O. षु Cb. भी Ca. P.

5) भवन्ति A. B. K. W. O. P. नमन्ति Ca.

6) रो A. K. W. P. र Ca. रा Cb. O.

7) भवन्ति ग्रामिका O.

8) Sic P. O. तेपेय the rest.

स तादृशो दुर्मति मह्य पुत्रः पञ्चाश वर्षा पि तदा पलायकः[1]।
अयं च कोशो विपुलो ममास्ति कालक्रिया चो[2] मम प्रत्युपस्थिता ॥ १० ॥
सो चापि बालो तद तस्य पुत्रो दरिद्रकः कृपणकु नित्यकालम्।
ग्रामेण ग्रामं अनुचङ्क्रमन्तः पर्यषते भक्त[3] तथापि चोडम् ॥ ११ ॥
पर्येषमाणो ऽपि कदाचि किंचिल्लभेत किंचित्पुन नैव किंचित्।
स शुष्यते[4] परसरणेषु[5] बालो दद्रूय कण्डूय विदिग्धगात्रः[6] ॥ १२ ॥
सो च व्रजेत्तं नगरं[7] यहिं पिता अनुपूर्वशो[8] तत्र गतो भवेत।
भक्तं च चोडं च गवेषमाणो निवेशनं यत्र पितु स्वकस्य[9] ॥ १३ ॥
सो चापि आढ्यः पुरुषो महाधनो द्वारस्मि सिंहासनि[10] संनिषण्णः।
परिवारितः प्राणिशतैरनेकैर्वितान[11] तस्य[12] विततो ऽन्तरीक्षे ॥ १४ ॥
आप्तो जनश्चास्य समन्ततः स्थितो धनं हिरण्यं च गणेन्ति केचित्।
केचित्तु लेखानपि लेखयन्ति केचित्प्रयोगं च प्रयोजयन्ति ॥ १५ ॥

---

1) Better in O. वर्षाणि यदा पलायितः.

2) यां A. चो B. Ca. K. W. P. च Cb. O. The lengthening not necessary before the pause.

3) भक्तम A. Ca. भक्तं त K. भक्त तथैव चोटकम् O.

4) शोचते O.

5) Read परि?

6) Have we to r. विदग्ध? O. has किलासगात्रः.

7) ह्रिषिं A.

8) शस्त O.; सो त the others.

9) पितु सो उपागमि O.; पिता स्वकोऽस्य P.; पिता स्वकस्य the rest.

10) न K. P. ने Cb.

11) नु B. Ca. Cb. K. P. न A. W. नि O.

12) Sic O.; तस्यो P.; तस्या the rest.

सो चा[1] दरिद्रो तहि एतु दृष्ट्वा विभूषितं गृहपतिनो निवेशनम्।
कहिं नु[2] अद्य अहमत्र आगतो राजा अयं भेष्यति राजमात्रः ॥ १६ ॥
मा दानि[3] दोषं पि लभेयमत्र गृह्णित्व वेष्टिं पि च कारयेयम्।
अनुचिन्तयन्तः स पलायते नरो दरिद्रवीथीं परिपृच्छमानः ॥ १७ ॥
सो चा धनी[4] तं स्वकु पुत्र दृष्ट्वा सिंहासनस्थश्च भवेत्प्रहृष्टः। 5
स दूतकान्प्रेषयि तस्य अन्तिके आनेथ एतं पुरुषं दरिद्रम् ॥ १८ ॥
समनन्तरं तेहि गृहीतु सो नरो गृहीतमात्रो अथ मूर्च्छ[5] गच्छेत्।
ध्रुवं खु मह्यं वधका उपस्थिताः किमद्य चोडेन थ[6] भोजनेन वा ॥ १९ ॥
दृष्ट्वा च सो पण्डितु तं महाधनी हीनाधिमुक्तो अयु बाल दुर्मतिः।
न श्रद्दधी मह्यमिमां विभूषितां पिता ममायं ति न[7] चापि श्रद्दधीत् ॥ २० ॥ 10
पुरुषांश्च सो तत्र प्रयोजयेत[8] वङ्काश्च ये काणक कुण्ठकाश्च।
कुचेलका[9] कृष्णक हीनसत्त्वाः पर्येषथा तं नरु कर्मकारकम् ॥ २१ ॥
संकारधानं इमु मह्य पूतिकमुच्चारप्रस्रावविनाशितं च।
तं शोधनार्थाय करोहि[10] [11] कर्म द्विगुणं च ते वेतनकं प्रदास्ये ॥ २२ ॥

---

1) च O.

2) तु Cb. W.

3) मेदानि O.

4) धनि A. B. Ca. W. धनी Cb. वनी K. धनो O. MSS. च for चा.

5) मूर्च्छि A. B. K. W. P. मूर्च्छ Ca. Cb. O.

6) च A. B. Cb. K. W. O P. थ Ca.

7) पि ति A. W. पि न K. P. ति न B. Ca. Cb. न चापि श्रोकल्पयि एष मे पिता O.

8) त A. K. त् Ca. Cb. W.

9) चे A. B. Ca. W. चै K. ले Cb. दुश्चोडिका: O.

10) Better तच्छोध O.

11) थ A. B. Cb. K. W. P. हि Ca. O.

एतादृशं घोष श्रुणित्व सो नरो आगत्य संशोधयि तं प्रदेशम् ।
तत्रैव सो आवसथं च कुर्यान्निवेशनस्य[1] पलिकुञ्चिके ऽस्मिन् ॥ २३ ॥
सो चा धनी[2] तं पुरुषं निरीक्षिद्धवान श्रोलोकन[3]केहि नित्यम् ।
हीनाधिमुक्तो अयु मह्य पुत्रः संकारधानं शुचिकं करोति ॥ २४ ॥
5 स[4] ओतरित्वा पिटकं गृहीत्वा मलिनानि वस्त्राणि च प्रावरित्वा ।
उपसंक्रमेत्तस्य नरस्य अन्तिके अवभर्त्स[5]यन्तो न करोथ कर्म ॥ २५ ॥
द्विगुणं च ते वेतनकं ददामि द्विगुणं च भूयस्तथ पादतैलम् ।
सलोणभक्तं च ददामि तुभ्य शाकं च शाटिं च पुनर्ददामि ॥ २६ ॥
एवं च तं भर्त्स[6]यि तस्मि काले संश्लेषयेत्तं पुनरेव पण्डितः ।
10 सुष्ठु खलु[7] कर्म करोषि अत्र पुत्रो ऽसि व्यक्तं मम नात्र संशयः ॥ २७ ॥
स स्तोकस्तोकं च गृहं प्रवेशयेत्कर्म च कारापयि तं मनुष्यम् ।
विंशच्च वर्षाणि सुपूरितानि क्रमेण विश्रम्भयि तं नरं सः ॥ २८ ॥
हिरण्यु[8] सो मौक्तिकु[8] स्फाटिकं च प्रतिशामयेत्तत्र[9] निवेशनस्मिन्[10] ।
सर्वं च सो संगणनां करोति अर्थं च सर्वं अनुचिन्तयेत[11] ॥ २९ ॥

---

1) स्या P.; other MSS. have स्यो; O. has स्यमतिदूरि वासम्.

2) द्वनो A. धनी O. वनो P. MSS. च. Original r. perhaps चद्ध.

3) Sic P.; श्रोलो O.; उल्लो the others.

4) प्रत A. प्रेत W. श्रोत्त Ca. Cb. श्रोत K. O. P.

5) भर्त्स in all MSS. except O., which has उत्स्येच्चयत्तश्च! probably for उत्तेजयतश्च.

6) भर्त्सिय A. B. W. भर्त्सिय Ca. भंर्त्सिय Cb. भंसयि K. P.

7) खलु A. B. Ca. K. W. च लं Cb. च म O.

8) ण्यु कु Ca. ण्य क in other MSS.

9) ये तस्मिन् P.; येत्तत्र A. B. Ca. Cb. W. K. Our r. follows O.

10) All but O. नेऽस्मिन्. To r. also कास्मिन् vs. 23.

11) येत या A. येत Ca. येत्वा Cb. गिरगे K. O. गेतगा W.

[1] बाल्कर्ध सो तस्य निवेशनस्य कुटिकाय एको वसमानु बालः।
दरिद्रचित्तामनुचित्तयेत न मे ऽस्ति एतादृश भोगु[2] केचित्[3] ॥ ३० ॥
ज्ञात्वा च सो तस्य इमेवं[4] रूपमुदारसंज्ञाभिगतो मि पुत्रः।
स ग्रानयित्वा सुकृज्ञातिसंघं[5] निर्यातयिष्याम्यकु[6] सर्वमर्थम् ॥ ३१ ॥
राजान सो नैगमनागरांश्च[7] समानयित्वा बहुवाणिजांश्च। 5
एवं उवाच[8] परिषाय मध्ये पुत्रो ममायं चिर विप्रनष्टकः ॥ ३२ ॥
पञ्चाश वर्षाणि सुपूर्णकानि[9] अन्ये यतो विंशतिये मि[10] दृष्टः[11]।
अमुकातु नगरातु ममैष नष्टो अहं च मार्गन्त इहैवमागतः[12] ॥ ३३ ॥
सर्वस्य द्रव्यस्य अयं प्रभुर्मे एतस्य निर्यातयि सर्वशेषतः।
करोतु कार्यं च पितुर्धनेन सर्वं कुटुम्बं च ददामि एतत् ॥ ३४ ॥ 10
आश्चर्यप्राप्तश्च भवेन्नरो ऽसौ दरिद्रभावं पुरिमं स्मरित्वा।
हीनाधिमुक्तिं च पितुश्च तान्गुणाँल्लब्ध्वा[13] कुटुम्बं सुखितो ऽस्मि अद्य ॥ ३५ ॥

---

1) वर्किधू A. बाल्किश्च O.
2) Some MSS. भाग or भागु.
3) किञ्चित् O. Read कोचित्.
4) इमे A. B. Ca. K. W. इममे Cb. P.
5) घाज्ञि K. घानि P.
6) ष्ये ऽस्मिन् P. ष्ये ऽस्यम O.
7) नागरनैगमांश्च B.
8) एवमुवाच A. B. W. O. एवं उवाच Ca. Cb. उवाच एवं K. P.
9) र्णा सर्वे A. Ca. W. र्णकानि B. K. P. रितानि Cb. सुपूर पूर्वम् O.
10) मी A. कि B. पि Ca. P. K. मि Cb. षि W. विंशानि यतोस्मि O.
11) दृष्ट्वा K. P.
12) हैव आगतः O. The *m* is a means to avoid hiatus.
13) गुणां दृष्ट्वा A. B. K. P. गुणान् दृष्ट्वा Cb. गुणां लब्ध्वा Ca.

तथैव चास्माक[1] विनायकेन कीनाधिमुक्तिव[2] विज्ञानियान[3]।
न श्रावितं बुद्ध भविष्यथेति यूयं किल श्रावक मह्य पुत्राः ॥ ३६ ॥
अस्मांश्च अध्येषति लोकनाथो ये प्रस्थिता उत्तममग्रबोधिम्।
तेषां वदे[4] काश्यप मार्गनुत्तरं[5] यं मार्ग[6] भाविल[7] भवेयु बुद्धाः ॥ ३७ ॥
5 वयं च तेषां सुगतेन प्रेषिता बहुबोधिसत्वान महाबलानाम्।
अनुत्तरं मार्ग[8] प्रदर्शयामि[9] दृष्टान्तहेतूनयुतान कोटिभिः ॥ ३८ ॥
श्रुत्वा च अस्माक जिनस्य पुत्रा बोधाय भावेन्ति सुमार्गमग्र्यम्।
ते व्याक्रियन्ते च तणास्मि तस्मिन्[10] भविष्यथा बुद्ध इमस्मि लोके ॥ ३९ ॥
एतादृशं कर्म करोम तायिनः[11] संरक्षमाणा इम धर्मकोशम्।
10 प्रकाशयन्तश्च जिनात्मजानां वैश्वासिकस्तस्य यथा नरः सः ॥ ४० ॥
दरिद्रचित्ताश्च विचिन्तयाम विश्राणयन्तो इम[12] बुद्धकोशम्[13]।
न चैव प्रार्थेम जिनस्य ज्ञानं जिनस्य ज्ञानं च प्रकाशयामः[14] ॥ ४१ ॥

---

1) कं A. K. कु Ca. क Cb. W. O. P.

2) क्तिं च A. B. Ca. W. क्तिव Cb. O. क्तिस्त्व K. P. It ought to be क्तत्व.

3) नं A. W. नः B. न् Ca. न Cb. K. P.

4) च ते K. P. देशेद्धि त्वं O.

5) एतमर्थं B. एवमर्थं W.

6) र्ग A. B. Cb. W. O. र्गु Ca. र्गं K.

7) Sic all for भावेत्व.

8) र्ग A. B. Cb. K. W. O. P. र्गु Ca.

9) मी Ca. प्रकाशयाम Cb. प्रदापोम W

10) तस्मि O.

11) नां A. O. नः Ca. Cb. K. W. P.

12) इम Ca. Cb. K. P. O. इमु A. W.

13) घोषं Cb. K.

14) A. W. read this half a line as प्रकाशयामो इममग्रबोधिं.

प्रत्यात्मिकीं निर्वृति[1] कल्पयाम एतावता ज्ञानमिदं न भूयः ।
नास्माक हर्षो[2] ऽपि कदाचि भोति क्षेत्रेषु बुद्धान श्रुणित्व व्यूहान्[3] ॥ ४२ ॥
शान्ताः किल सर्विमि धर्म नास्रवा निरोधउत्पादविवर्जिताश्च ।
न चात्र कश्चिद्भवतीह धर्मो[4] एवं तु चिन्तेत्व[5] न भोति श्रद्धा[6] ॥ ४३ ॥
[7]सुनिःस्पृहा स्म वयं[8] दीर्घरात्रं बौद्धस्य ज्ञानस्य अनुत्तरस्य[9] । 5
प्रणिधान[10]मस्माक न जातु तत्र इमं परा निष्ठ जिनेन उक्ता ॥ ४४ ॥
निर्वाणपर्यन्ति[11] समुच्छ्रये ऽस्मिन्परिभाविता शून्यत दीर्घरात्रम् ।
परिमुक्त[12] त्रैधातुक[13]दुःखपीडिताः[14] कृतं च अस्माभि जिनस्य शासनम् ॥ ४५ ॥
यं हि[15] प्रकाशेम[16] जिनात्मजानां ये प्रस्थिता भोन्ति इहाग्रबोधौ[17] ।
तेषां च यत्किंचि वदाम[18] धर्मं स्पृह तत्र अस्माक[19] न जातु भोति ॥ ४६ ॥ 10

---

1) त्मकी नि Cb. P. त्मिकीर्नि Ca. त्मकीं नि K. त्मकं नि O.
2) All but O. हर्षेपि or हर्षम्पि
3) विपूह श्रुत्वा O. probably more original.
4) र्मे K. P. O.
5) Sic P.; the others चिन्तित्वा.
6) Verses 43 and 44 are left out in B
7) अ Cb.
8) Sic P.; च वय O. वयमिह A. B. Ca. Cb.
9) अनाश्रवस्य Cb K P बुद्धान ज्ञानस्मि अनुत्तरस्मि O
10) धातु अ A Ca. धानमस्मात्र Cb O. धात अस्मात्र W धानमस्मातु P
11) न्तं W.
12) क्ति A. W.
13) कि A.
14) पीडया O.
15) यस्मिं K. P. यं मि Cb. यंपि O.
16) मु Ca.
17) र्धिं K. P. अग्रबोधाय भवन्ति प्रस्थिता O.
18) मि A. B. Cb. K. W. मु Ca.
19) कं K. क P. O. कु the others.

तं चास्म लोकाचरियः[1] स्वयंभूरुपेक्षते कालमवेक्षमाणः।
न भाषते भूतपदार्थसंधिं अधिमुक्तिमस्माकं[2] गवेषमाणः॥ ४७॥
उपायकौशल्य यथैव तस्य महाधनस्य पुरुषस्य काले।
हीनाधिमुक्तं[3] सततं दमेति[4] दमियान चास्मै[5] प्रददाति वित्तम्॥ ४८॥
5 सुदुष्करं कुर्वति लोकनाथो उपायकौशल्य प्रकाशयन्तः[6]।
हीनाधिमुक्तान्दमयन्तु पुत्रान्दमेत्व[7] च ज्ञानमिदं ददाति[8]॥ ४९॥
आश्चर्यप्राप्ता सहसा स्म अद्य यथा दरिद्रो लभियान वित्तम्।
फलं च प्राप्तं इह[9] बुद्धशासने प्रथमं विशिष्टं च अनास्रवं च॥ ५०॥
यच्छीलमस्माभि च दीर्घरात्रं संरक्षितं लोकविदुष्य शासने।
10 अस्माभि लब्धं फलमद्य तस्य शीलस्य पूर्वं चरितस्य नाथ॥ ५१॥
यद्ब्रह्मचर्यं परमं विशुद्धं निषेवितं शासनि नायकस्य।
तस्यो[10] विशिष्टं फलमद्य लब्धं शान्तं उदारं च अनास्रवं च॥ ५२॥
अद्यो[11] वयं श्रावकभूत नाथ संश्रावयिष्यामथ[12] चाग्रबोधिम्।

---

1) कः Cb. यो महर्षि O.

2) क Cb. K. P. O. कु the rest.

3) मुक्तं O.; the others मुक्तं.

4) ति A. Ca. W. त Cb. थ K. P. मि O.

5) च तस्य द Cb. O. चो तस्य द K. तद्धनम् for वित्तम् O.

6) प्रयोजयन्तः O.

7) मि A. B. Ca. मियान ज्ञा O.

8) प्रदेति O.

9) समिद्ध K.

10) तस्यो Ca. तस्य Cb. A. K. W. P. O.

11) द्य Cb P. O.

12) म इमाग्र O. Cp. लभामथ Mahāvastu III, 9, 17; आसामथ 19; ज्ञोवामथ 11, 15; भवेमथ 17.

बोधीय[1] शब्दं च प्रकाशयामस्तेनो[2] [3] वयं श्रावक भीष्मकल्पाः ॥ ५३ ॥

अर्कसंभूता[4] वयमद्य नाथ अर्हामहे पूज सदेवकातः[5] ।

लोकात्समारात्[6] सब्रह्मकातः सर्वेष सत्त्वान च अग्निकातः[6] ॥ ५४ ॥

को नाम शक्तः प्रतिकर्तु तुभ्यमुद्युक्तरूपो बहुकल्पकोट्यः ।

सुदुष्कराणीदृशका[7] करोषि सुदुष्कराण्यानिह[8] मर्त्यलोके ॥ ५५ ॥

हस्तेहि पादेहि शिरेण[9] चापि प्रतिप्रियं दुष्करकं हि कर्तुम् ।

शिरेण अंसेन पयोधरेण परिपूर्णकल्पान्यथ गङ्गवालिकाः ॥ ५६ ॥

खाद्यं ददेद्भोजनवस्त्रपानं[10] शयनासनं[11] च[12] विमलोत्तरच्छदम् ।

विहार कारापयि चन्दनामयान्संस्तीर्य चो[13] दूष्ययुगेहि दद्यात् ॥ ५७ ॥

गिलानभैषज्य बहुप्रकारं[14] पूजार्थ दद्यात्सुगतस्य नित्यम् ।

ददेय[15] कल्पान्यथ गङ्गवालिका नैवं कदाचित्प्रतिकर्तु शक्यम् ॥ ५८ ॥

---

1) बोधी च Cb. बोधाय A. B. Ca. बोधिय K. P.

2) मो A.

3) न Cb. O.

4) अर्कन्भ्य A. अर्कत्य Ca. W. अर्कत्त Cb. K. O.

5) लोकातो K कातु O. preferable; कातो in other MSS.

6) मातस A. मारानुस Ca. मारात्स Cb. K. लोकासमागतस W. माराच्च, सब्रह्मकाच्च and साग्निकातु O.

7) य दुष्करमोदृशकं O.; सुदुष्करानीदृशकान् the others.

8) रं O. रान् the rest.

9) णा Cb. K. O. P. ण्हि the others.

10) नं A. Ca. K. W. णं Cb.

11) शय्या O. शया P.

12) चो A. B. Ca. W.

13) वा Cb. च O. चो the rest. The lengthening not necessary.

14) रं A. Ca. K. W. O. P. रां Cb. रान् B.

15) य K. O. P. ददेत the others.

महात्मधर्मा अतुलानुभावो महर्द्धिकः तायिबले प्रतिष्ठितः ।
बुद्धो महाराज अनास्रवो जिनो[1] सहन्ति बाला[2] न इमीदृशानि[3] ॥ ५९ ॥
अनुवर्तमानस्तथ नित्यकालं निमित्तचारीण ब्रवीति धर्मम् ।
धर्मेश्वरो ईश्वरु[4] सर्वलोके महेश्वरो लोकविनायकेन्द्रः ॥ ६० ॥
प्रतिपत्ति दर्शेति बहुप्रकारं[5] सत्त्वान स्थानानि प्रजानमानः ।
नानाधिमुक्तिं च विदित्व तेषां हेतूसहस्रेहि ब्रवीति धर्मम् ॥ ६१ ॥
तथागतश्चर्य[6] प्रजानमानः सर्वेष सत्त्वान च पुद्गलानाम्[7] ।
बहुप्रकारं हि ब्रवीति धर्मं निदर्शयन्तो इममग्रबोधिम् ॥ ६२ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय अधिमुक्तिपरिवर्तो नाम चतुर्थः ॥

1) ना A. Ca. Cb. O. नाः B. न K. नो W. The plural throughout in O. So too in the following.

2) Kumārajīva seems to read सहति बालान etc. as he translates 能爲下劣忍于斯事 'he bears this matter for the sake of the low people'.

3) बलानि दृशेत्ति तथेन्द्रियाणि O.

4) रु A. Ca. Cb. W. रू K.

5) रं A. B. W. रा Cb. रां K P.

6) चरिये Cb. चरिय K. P. ताध्याशय ज्ञानमानाः O.

7) पुंग A. K.

# V.

अथ खलु भगवानायुष्मन्तं महाकाश्यपं तांश्चान्यान्स्थविरान्महाश्रावकानामन्त्रया-मास[1]। साधु साधु महाकाश्यप साधु खलु पुनर्युष्माकं काश्यप यद्यूयं तथागतस्य भूतान्गु-णवर्णान्भाषध्वे[2]। एते च काश्यप तथागतस्य भूता गुणा अतश्चान्ये ऽप्रमेया असंख्येया येषां न सुकरः पर्यन्तो ऽधिगन्तुमपरिमितानपि कल्पान्भाषमाणैः[3]। धर्मस्वामी काश्यप तथागतः सर्वधर्माणां राजा प्रभुर्वशी। यं च काश्यप तथागतो[4] धर्मं यत्रोपनिक्षिपति[4] स 5
तथैव भवति। सर्वधर्मांश्च काश्यप तथागतो युक्त्योपदिशत्युपनिक्षिपति[5]। तथागतज्ञाने-नोपनिक्षिपति[6] यथा ते धर्माः सर्वज्ञभूमिमेव गच्छन्ति। सर्वधर्मार्थगतिं च तथागतो व्य-वलोकयति। सर्वधर्मार्थवशिताप्राप्तः सर्वधर्माध्याशयप्राप्तः[7] सर्वधर्मविनिश्चयकौशल्यज्ञा-नपरमपारमिताप्राप्तः सर्वज्ञज्ञानसंदर्शकः सर्वज्ञज्ञानावतारकः[8] सर्वज्ञज्ञानोपनिक्षेपकः का-श्यप तथागतो ऽर्हन्सम्यक्संबुद्धः[8] ॥ 10

तद्यथापि नाम काश्यपास्यां[9] त्रिसाहस्रमहासाहस्रायां[10] लोकधातौ यावन्तस्तृणगु-ल्मौषधिवनस्पतयो नानावर्णा नानाप्रकारा ओषधिग्रामा नानानामधेयाः पृथिव्यां जाताः

1) यते स्म B. यति स्म O.
2) यतध्वे A. यत Cb. K. यथ O.
3) यणैः A. W. षमाणोभिस्तत्कस्य हेतोः। O.
4) All but O. गतेन. यत्रोप wanting in O. Probably to r. यथा for यत्र.
5) उपदिशति left out in Cb.
6) A. Cb. add तथा (तथो चो Cb.) पनिक्षिपति.
7) Left out in Cb.
8) Left out in K. O.
9) अस्मिं त्रे B. येमस्मिंस्तु O.
10) त्रे B. Cb. स्यां K. सहस्रमहासहस्रे O. So too in the sequel.

पर्वतगिरिकन्दरेषु वा मेघश्च महावारिपरिपूर्ण[1] उन्नमेदुन्नमित्वा[2] सर्वावर्तो[3] त्रिसाहस्रमहासाहस्रां[4] लोकधातुं संछादयेत्संछाद्य च[5] सर्वत्र समकालं वारि प्रमुञ्चेत्। तत्र काश्यप ये[6] तृणगुल्मौषधिवनस्पतयो ऽस्यां[7] त्रिसाहस्रमहासाहस्रलोकधातौ[8] तत्र ये तरुणाः कोमलनाडशाखापत्रपलाशास्तृणगुल्मौषधिवनस्पतयो द्रुमा महाद्रुमाः सर्वे ते ततो महा-
5 मेघप्रमुक्ताद्वारिणो[9] यथाबलं[10] यथाविषयमब्धातुं प्रत्यापिबन्ति ते चैकरसेण वारिणा प्रभूतेनैकमेघप्रमुक्तेन[11] यथाबीजमन्वयं विवृद्धिं विरूढिं विपुलतामापद्यन्ते तथा च पुष्पफलानि प्रसवन्ति ते च पृथक्पृथग्नानानामधेयानि प्रतिलभन्ते। एकधरणीप्रतिष्ठिताश्च ते सर्व ओषधिग्रामा बीजग्रामा एकरसतोयाभिष्यन्दिताः। एवमेव काश्यप तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उत्पद्यते। यथा महामेघ उन्नमते[12] तथा[13] तथागतो ऽप्युत्पद्य
10 सर्वावन्तं सदेवमानुषासुरं लोकं स्वरेणाभिविज्ञापयति। तद्यथापि नाम काश्यप[14] महामेघः सर्वावर्तो[15] त्रिसाहस्रमहासाहस्रां[16] लोकधातुमवच्छादयति। एवमेव काश्यप तथागतो

---

1) प्रति MSS. except K. O.

2) न्नम्य च B.

3) र्वंतं A. W. O. र्वंतमिमं B. वर्तीयं Cb. K.

4) स्रां A. स्रं O. स्रे B. स्रो Cb. स्रौं K. स्रायां W.

5) In B. only,

6) यास्तास्तृ A. B. W. ये तृ Cb. O. ये ते तृ K.

7) स्मिं A. K. स्मिंस्त्रि B. स्यां Cb.

8) स्रां Cb. स्यां K.

9) पु A. B.

10) W. adds यथाविभक्तवानं. A. B. Ca. K. यथाभक्तविमानं. वि left out in B. The whole compound is left out in Cb. O. Perhaps meant यथाविभक्तनं.

11) पु in all MSS. except K. O.

12) ति Cb. K.

13) Left out in B. K.

14) B. K. O. add स.

15) वर्तो A. Cb. K. W. र्वंतं B. O.

16) स्रां A. W. स्रं O. B. स्रौं K. स्रे Cb.

ऽर्हन्सम्यक्संबुद्धः सदेवमानुषासुरस्य लोकस्य पुरत एवं शब्दमुदीरयति घोषमनुश्राव-
यति । तथागतो ऽस्मि भवन्तो देवमनुष्या अर्हन्सम्यक्संबुद्धस्तीर्णस्तारयामि मुक्तो मो-
चयाम्याश्वस्त[1] आश्वासयामि परिनिर्वृतः परिनिर्वापयामि । अहमिमं च लोकं परं च
लोकं सम्यक्प्रज्ञया यथाभूतं प्रजानामि सर्वज्ञः सर्वदर्शी । उपसंक्रामन्तु मां भवन्तो देवम-
नुष्या[2] धर्मश्रवणाय । अहं मार्गस्याख्याता मार्गदेशिको मार्गविन्मार्गश्रावको मार्गको- 5
विदः । तत्र काश्यप बहूनि प्राणिकोटीनयुतशतसहस्राणि[3] तथागतस्य धर्मश्रवणायो-
पसंक्रामन्ति । अथ तथागतो ऽपि तेषां सत्त्वानामिन्द्रियवीर्यपरापर[4]विमात्रतां ज्ञात्वा[5] तां-
स्तान्धर्मपर्यायानुपसंहरति । तां तां धर्मकथां कथयति बह्वीं विचित्रां हर्षणीयां परि-
तोषणीयां प्रामोद्यकरणीं[5] हितसुखसंवर्तनकरीं[6] यया कथया ते सत्त्वा दृष्ट एव धर्मे सुखिता
भवन्ति कालं च कृत्वा सुगतीषूपपद्यन्ते यत्र प्रभूतांश्च कामान्परिभुञ्जते धर्मं च शृण्वन्ति । 10
श्रुत्वा च तं धर्मं विगतनीवरणा भवन्त्यनुपूर्वेण च सर्वज्ञधर्मेष्वभियुज्यन्ते यथाबलं[7] यथा-
विषयं यथास्थामम्[8] ॥

तद्यथापि नाम काश्यप[9] महामेघः सर्वावतीं[10] त्रिसाहस्रमहासाहस्रीं[11] लोकधातुं
संछाद्य समं[12] वारि प्रमुञ्चति सर्वांश्च तृणगुल्मौषधिवनस्पतीन्वारिणा संतर्पयति यथाबलं

1) मुक्तो मोचयामि left out in K.
2) न्तः सदेवमानुषासुर Cb. न्तो देवमनुष्यासुरा O.
3) नि A. Ca. W.
4) परापर K. Omitted in O.
5) विदि A. O.
6) करणीं K. O. करणीयां the rest. Further संवर्तनीं O.
7) MSS. except Cb. O. add यथाभक्तमात्रं.
8) मञ्च K.
9) B. O. add स.
10) वंतं A. Ca. K. O. वंत W. वर्तीयं Cb.
11) स्रां A. W. स्रं B. K. O. स्रीं Cb.
12) Sic O., the others सम, but above समकालं, where in O. सम.

यथाविषयं यथास्थामं च ते तृणगुल्मौषधिवनस्पतयो वार्यापिबन्ति स्वकस्वकां च जातिप्रमाणतां गच्छन्ति। एवमेव काश्यप तथागतो ऽर्हन्सम्यक्संबुद्धो यं धर्मं भाषते सर्वः स[1] धर्म एकरसो यदुत[2] विमुक्तिरसो विरागरसो निरोधरसः सर्वज्ञज्ञानपर्यवसानः। तत्र काश्यप ये ते सत्त्वास्तथागतस्य धर्मं भाषमाणस्य[3] शृण्वन्ति धारयन्त्यभिसंयुज्यन्ते[3] न ते[4]
5 आत्मनात्मानं[5] जानन्ति वा[6] वेदयन्ति[7] वा[6] बुध्यन्ति वा। तत्कस्य हेतोः। तथागत एव काश्यप तान्सत्त्वांस्तथा जानाति[8] ये च ते यथा च ते यादृशाश्च ते। यं च ते[9] चिन्तयन्ति यथा च ते चिन्तयन्ति[10] येन च ते चिन्तयन्ति। यं च ते भावयन्ति यथा च ते भावयन्ति येन च ते भावयन्ति। यं च ते प्राप्नुवन्ति यथा च ते प्राप्नुवन्ति येन च ते प्राप्नुवन्ति। तथागत एव काश्यप तत्र प्रत्यक्षः[11] प्रत्यक्षदर्शी यथा च दर्शी तेषां सत्त्वानां तासु तासु भूमिषु स्थि-
10 तानां तृणगुल्मौषधिवनस्पतीनां हीनोत्कृष्टमध्यमानाम्[12]। सो ऽहं काश्यपैकरस[13]धर्मं विदित्वा यदुत[14] विमुक्तिरसं निर्वृतिरसं निर्वाणपर्यवसानं नित्यपरिनिर्वृतमेकभूमिकमाका-

---

1) सर्वधर्मं A. सर्वं तं धर्मं. The others सर्वः सद्धर्मं.

2) यदिदं Cb. K.

3) य A. Cb. K. O. ष्य Ca.

3) न्ति Cb. K. O.

4) ते in all MSS.

5) आत्मानात्मानं A. आत्मानामात्मानं B. आत्मनात्मानं Cb. आत्मना आत्मानं K. आत्मनातनं W.

6) Left out in K.

7) विदन्ति A. W.

8) जानीते A. W.

9) यं च ते left out in K. यं Prākṛticism for यत्.

10) यथा °न्ति left out in Cb.

11) Left out in K.

12) A. W. add वा.

13) सं K. O.

14) यदिदं Cb. K. W. O. यदियं A. यद्भुत B.

शगतिकमधिमुक्तिं सत्त्वानामनुरतमाणो[1] न सहसैव[2] सर्वज्ञज्ञानं संप्रकाशयामि । आश्चर्यप्राप्ता अद्भुतप्राप्ता[3] यूयं काश्यप यद्यूयं संधाभाषितं तथागतस्य न शक्नुथावतरितुम्[4] । तत्कस्य हेतोः । दुर्विज्ञेयं काश्यप तथागतानामर्हतां सम्यक्संबुद्धानां संधाभाषितमिति ॥

अथ खलु भगवांस्तस्यां वेलायामिममेवार्थं[5] भूयस्या मात्रया संदर्शयमान इमा गाथा 5
अभाषत ॥

धर्मराजा[6] अहं लोके[7] उत्पन्नो भवमर्दनः ।
धर्मं भाषामि सत्त्वानामधिमुक्तिं विजानिय[8] ॥ १ ॥
धीरबुद्धो महावीरा चिरं[9] रक्षन्ति भाषितम् ।
रहस्यं चापि धारेन्ति[10] न च भाषन्ति प्राणिनाम् ॥ २ ॥ 10
दुर्बोध्यं चापि तज्ज्ञानं सहसा श्रुत्व बालिशाः ।
काङ्क्षां कुर्युः सुदुर्मेधास्ततो भ्रष्टा भ्रमेयु ते ॥ ३ ॥
यथाविषयु[11] भाषामि यस्य यादृशकं बलम् ।
अन्यमन्येहि अर्थेहि[12] दृष्टि कुर्वामि उज्जुकाम्[13] ॥ ४ ॥

---

1) रक्ष्यन्न A. रतन्न B. रतमाणो न Cb. K. O. रक्ष्यमाणोन्न W.
2) वं K.
3) Left out in Cb. O.
4) तर्तु A. O
5) म A. मा B. इ Cb. K. O. व W.
6) ज A. B. जा Cb. K. O. जो W. Ca.
7) लोके O.; preferable on account of the pause.
8) या A. O. यः B. य Cb. K. नोय W.
9) राश्चिरं O.; रा गिरं the rest; then भाषितम् points to a Prāk. *bhāsitaṃ*.
10) धारयंति Cb
11) यं A. W. यु B: K. य Cb.
12) न्येषु चार्थेषु B. Cb. K.
13) For ऋजुक.

यथापि काश्यपा[1] मेघो लोकधातूय उन्नतः[2] ।
सर्वमोनक्रती[3] चापि छादयन्तो वसुंधराम् ॥ ५ ॥
सो च वारिस्य[4] संपूर्णो विद्युन्मालो महाम्बुदः ।
निर्नादयन्त[5] शब्देन हर्षयेत्सर्व[6]देहिनः ॥ ६ ॥
5 सूर्यरश्मो निवारित्वा शीतलं कृत्व[7] मण्डलम् ।
हस्तप्राप्तो ऽवतिष्ठन्तो वारि मुञ्चेत्समन्ततः ॥ ७ ॥
स चैव सम मुञ्चेत आपस्कन्धमनल्पकम् ।
प्राखरन्तः[8] समन्तेन तर्पयेन्मेदिनोमिमाम् ॥ ८ ॥
इह या काचि[9] मेदिन्यां जाता ओषधयो भवेत् ।
10 तृणगुल्मवनस्पत्यो[10] द्रुमा वाथ महाद्रुमाः ॥ ९ ॥
सस्यानि विविधान्येव यद्वापि हरितं भवेत् ।
पर्वते कन्दरे चैव निकुञ्जेषु च यद्भवेत् ॥ १० ॥
सर्वान्संतर्पयेन्मेघस्तृणगुल्मवनस्पतीन् ।
तृषितां धरणीं[11] तर्पेत्[12]परिषिञ्चति चौषधोः[13] ॥ ११ ॥

---

1) पो A. प K.
2) तुयट्ठ A. Cb. W. तूय उ O.
3) हून A. K. W. नहूते B. Cb.
4) स्य A. B. W.
5) न्त A. B. Ca. Cb. W. न्त K. निनादयन्त O.
6) यन्स A. B. Ca. Cb. यं स W. यत्स K. गोरत O.
7) त्व A. B. Ca. Cb. K. O. त्न W.
8) प्रात्खरंतः A. प्रखरन्तः B. K. प्रत्यारन्तः Cb. प्राखिरन्तः W. प्रागरन्तः O. Skr प्रक्षरन् Pāli *paggharanto*.
9) कश्चि A. W. काश्चित् Cb.
10) तयो Cb.
11) णो in all MSS.
12) तर्पेत A. तर्पेति Cb.
13) धोम् O., धीन् the rest.

तच्च[1] एकरसं वारि मेघमुक्तमिह स्थितम्।
यथाबलं यथाविषयं तृणगुल्मापिबन्ति तत्[2]॥ १२॥
द्रुमाश्च ये केचि महाद्रुमाश्च क्षुद्रान्[3] मध्याश्च यथावशाश्च।
यथाबलं सर्व[4] पिबन्ति वारि[5] पिबन्ति वर्धन्ति[6] यथेच्छकामाः॥ १३॥
काण्डेन नाडेन त्वचा यथैव शाखाप्रशाखाय तथैव पत्रैः।
वर्धन्ति पुष्पेहि फलेहि चैव मेघाभिवृष्टेन महौषधीयः॥ १४॥
यथाबलं ता[6] विषयश्च यादृशो यासां[7] च यस्मादृशकं च बीजम्[8]।
स्वकस्वकं ताः[9] प्रसवं ददन्ति वारिं च तं एकरसं प्रमुक्तम्॥ १५॥
एमेव[10] बुद्धो ऽपि ह[11] लोकि काश्यप उत्पद्यते वारिधरो व लोके।
उत्पद्य च[12] भाषति लोकनाथो भूतां चरिं दर्शयते च प्राणिनाम्॥ १६॥ 10
एवं च संश्रावयते महर्षिः पुरस्कृतो लोकि सदेवकस्मिन्[13]।
तथागतो ऽहं द्विपदोत्तमो जिनो उत्पन्नु[14] लोकस्मि[15] यथैव मेघः॥ १७॥

---

1) तच्च B. Cb. K.
2) तं Cb. K. O.
3) क्षुद्रान्त O.
4) सर्वे A. सर्वि K. सर्व the others.
5) रिं K. आपं O.
6) वर्द्धन्ते Cb. वर्धन्ति O. वर्धन्ति the rest.
6) ते A. K. W. ता B. तेन Cb.
7) येषां A. Cb. K. W. यासां B.
8) Sic O; the others यत्सादृशकश्च बीजाः.
9) तेः A W. ताः B. ते Cb. K. O.
10) एवमेव A. W.
11) All but O. हि.
12) ते A. च B. Cb. तो K. left out in W.
13) केस्मिं in all MSS. except O., which has सदेवकस्य.
14) न O.
15) केस्मि and केस्मिं, except in O.

संतर्पयिष्याम्यहु सर्वसत्त्वान्संशुष्कगात्रांस्त्रिभवे विलग्नान्।
दुःखेन शुष्यन्त सुखे[1] स्थपेयं कामांश्च दास्याम्यहु निर्वृतिं च॥ १८॥

शृणोथ मे देवमनुष्यसंघा उपसंक्रमध्वं मम दर्शनाय।
तथागतो ऽहं भगवाननाभिभूः संतारणार्थं[2] इह लोकि जातः॥ १९॥

5 भाषामि च प्राणिसहस्रकोटिनां धर्मं विशुद्धं ग्रभिदर्शनीयम्।
एका च तस्य[3] समता तथत्वं[4] यदिदं विमुक्तिश्च निर्वृतो च॥ २०॥

स्वरेण चैकेन वदामि धर्मं बोधिं निदानं करियान नित्यम्।
समं[5] हि एतद्विषमत्व[6] नास्ति न कश्चि[7] विद्वेषु न रागु विद्यते॥ २१॥

ग्रनुनीयता मह्य न काचिदस्ति प्रेमा च दोषश्च न मे कहिंचित्।
10 समं च धर्मं प्रवदामि देहिनां यथैकसत्त्वस्य तथा परस्य॥ २२॥

ग्रनन्यकर्मा[8] प्रवदामि धर्मं गच्छन्तु तिष्ठन्तु निषीदमानः।
निषण्णशय्यासन[9]मारुहित्वा क्लिलासिता मह्य न जातु[10] विद्यते॥ २३॥

संतर्पयामी इमु सर्वलोकं मेघो व वारिं सम मुञ्चमानः।
ग्रार्येषु नीचेषु च तुल्यबुद्धिर्दुःशीलभूतेष्वथ शीलवत्सु॥ २४॥

---

1) स्थपिष्ये K. O.
2) र्थमिह K.
3) तस्यो B.
4) रमता तथत्वं O. समता तथत्वं A. W. तथता समत्वं B. Cb. K.
5) समा Cb.
6) एतेद्विषमस्ति A. एनं विषयंवु B. एतं विषमंति Cb. एतं विषमत्व K. W.
7) किंचि B. K. कदा Cb. कश्चिद्वि W. काचिद्व O., r. कोचिद्.
8) र्मः Cb.
9) शयन Cb. K.
10) कदाचि A. W. काचि B. K. जातु Cb. मे न कदाच O.

विनष्टचारित्र तथैव ये नराश्चारित्र–ग्राचारसमन्विताश्च[1]।
दृष्टिस्थिता ये च विनष्टदृष्टी सम्यग्दृशो[2] ये च विशुद्धदृष्टयः[3] ॥ २५ ॥
हीनेषु चो श्रेष्ठमतीषु[4] चापि श्चद्धेन्द्रियेषु प्रवदामि धर्मम्।
क्लिलासितां सर्व विवर्जयित्वा सम्यकप्रमुञ्चाम्यह[5] धर्मवर्षम् ॥ २६ ॥
यथाबलं च श्रुणियान[6] मह्यं विविधासु भूमीषु प्रतिष्ठहन्ति[7]।
देवेषु मर्त्येषु मनोरमेषु शक्रेषु ब्रह्मेष्वथ चक्रवर्तिषु ॥ २७ ॥
तुद्रानुतुद्रा इम[8] ग्रोषधीयो[9] तुद्रीक[10] एता इह याव लोके[11]।
ग्रन्या च मध्या महती च ग्रोषधी शृणोथ ताः सर्व प्रकाशयिष्ये ॥ २८ ॥
ग्रनास्रवं धर्म प्रजानमाना निर्वाणप्राप्ता विहरन्ति ये नराः।
षडभिज्ञत्रैविद्य भवन्ति ये च सा तुद्रिका[10] ग्रोषधि संप्रवुत्ता[12] ॥ २९ ॥ 10
गिरिकन्दरेषु विहरन्ति ये च प्रत्येकबोधिं स्पृहयन्ति ये नराः।
ये ईदृशा मध्यविशुद्धबुद्धयः सा मध्यमा ग्रोषधि संप्रवुत्ता[13] ॥ ३० ॥
ये प्रार्थयन्ते पुरुषर्षभत्वं बुद्धो भविष्ये नरदेवनाथः।
वीर्यं च ध्यानं च निषेवमाणाः सा ग्रोषधी ग्रग्र इयं प्रवुच्चति[14] ॥ ३१ ॥

---

1) श्च K.
2) शा A. K. W. O.
3) This quarter of the verse is left out in Cb.
4) उत्कृष्ट for चो श्रेष्ठ O. चो for च here not necessary.
5) प्रवर्षा A. प्रवर्ष्या W.
6) णु Cb.
7) Sic A. W. O. ष्ठि the rest.
8) इमि A. इम B. K. O. इयम् Cb. इति W.
9) या A. यु O.
10) क्षुडुीक O.
11) यावल्लोके Cb. ये च लोके O.
12) प्रमुच्यते (r प्रवुच्यते) O. संप्रवृत्ता the rest.
13) गा प्रवुच्यते O. संप्रवृत्ता the rest
14) च्या A. W. O. च्च B. Ca. Cb. च्यते O.

ये चापि पुत्राः सुगतस्य पुत्रा मैत्रीं निषेवन्तिह शान्तचर्याम्।
निष्काङ्क्षप्राप्ता पुरुषर्षभत्वे अयं द्रुमो वुच्यति एवरूपः ॥ ३२ ॥
[2]अविवर्तिचक्रं हि[3] प्रवर्तयन्ता[4] ऋद्धीबलस्मिन्स्थित ये च धीराः।
प्रमोचयन्तो बहुप्राणिकोटी महाद्रुमो सो च[5] प्रवुच्चते[6] हि ॥ ३३ ॥
समश्च सो धर्म जिनेन भाषितो मेघेन वा वारि समं प्रमुक्तम्।
चित्रा अभिज्ञा इम एवरूपा यथौषधीयो[7] धरणीतलस्थाः ॥ ३४ ॥
अनेन दृष्टान्तनिदर्शनेन उपायु[8] ज्ञानाहि[9] तथागतस्य।
यथा च सो भाषति एकधर्मं नानानिरुक्ती[10] जलबिन्दवो वा ॥ ३५ ॥
ममापि चो वर्षतु धर्मवर्षं लोको अयं तर्पितु भोति सर्वः।
यथाबलं चानुविचिन्तयन्ति सुभाषितं एकरसं पि धर्मम् ॥ ३६ ॥
तृणगुल्मका वा यथ वर्षमाणे मध्या पि वा[11] ओषधियो यथैव।
द्रुमा पि वा ते[12] च महाद्रुमा वा यथ शोभयन्ते दशदिशु सर्वे[13] ॥ ३७ ॥
इयं सदा लोकहिताय धर्मता तर्पेति धर्मेणिमु सर्वलोकम्।
संतर्पितश्चाप्यथ सर्वलोकः प्रमुञ्चते ओषधि पुष्पकाणि ॥ ३८ ॥

---

1) बुद्ध A. वुच्य W. उच्य O. वुच्चति B. Ca. Cb.
2) अवैवर्त्य Cb. अविवर्तिकं चक्रं O.
3) च A. B K. W. हि Cb. wanting in O.
4) Sic O.; यन्तो the others.
5) ह्यष A. हेष Cb. ह्येष W. सोति B. सो न K. एष इह O
6) वुच्यते O. प्रवुच्चते हि the others.
7) या A. B. Cb. यो K. W. O.
8) य A. Cb. K. W. O. यु B.
9) ति Cb. हि B. O. सि A. Ca. K. W.
10) नानाधिमुक्ती B. K.
11) Sic O. चो the others.
12) ये A. W. ये वापि O.
13) शोभन्ति यथ लोकदर्शाद्दिशासु O

मध्यापि च[1] ओषधियो विवर्धयी ग्रर्हन्त ये ते स्थित ग्रास्रवक्षये ।
प्रत्येकबुद्धा वनषण्डचारिणो निष्पादयी धर्ममिमं सुभाषितम् ॥ ३९ ॥
बहुबोधिसत्त्वाः स्मृतिमन्त धीराः सर्वत्र त्रैधातुकि ये गतिंगताः ।
पर्येषमाणा इममग्रबोधिं द्रुमा व वर्धन्ति[2] ते नित्यकालम् ॥ ४० ॥
य ऋद्धिमन्तश्चतुध्यानध्यायिनो ये शून्यतां श्रुत्व जनेन्ति प्रीतिम् । 5
रश्मीसहस्राणि प्रमुञ्चमानास्ते चैव वुच्चन्ति महाद्रुमा इह ॥ ४१ ॥
एतादृशी काश्यप धर्मदेशना मेघेन वा वारि समं[3] प्रमुक्तम् ।
येह्यो विवर्धन्ति महौषधीयो मनुष्य पुष्पाणि ग्रनन्तकानि ॥ ४२ ॥
स्वप्रत्ययं धर्म प्रकाशयामि कालेन दर्शेमि च बुद्धबोधिम् ।
उपायकौशल्यु ममैतदग्रं सर्वेष चो लोकविनायकानाम् ॥ ४३ ॥ 10
परमार्थ एषा मम[4] भूतभाषिता ये श्रावकाः सर्वि त एन्ति निर्वृतिम्[5] ।
चरन्ति एते वरबोधिचारिकां बुद्धा भविष्यन्तिमि सर्वश्रावकाः ॥ ४४ ॥

पुनरपरं[6] काश्यप तथागतः सत्त्वविनये[7] समो न चासमः । तद्यथा काश्यप चन्द्रसूर्यप्रभा[8] सर्वलोकमवभासयति कुशलकारिणमकुशलकारिणं चोर्ध्वावस्थितमधरावस्थितं च सुगन्धि दुर्गन्धि च सर्वत्र समं प्रभा निपतति न विषमम् । एवमेव काश्यप तथागता- 15 नामर्हतां सम्यक्संबुद्धानां सर्वज्ञज्ञानचित्तप्रभा सर्वेषु पञ्चगत्युपपन्नेषु सत्त्वेषु यथाधिमु-

---

1) Sic O. मध्यानि चो the rest.

2) वर्द्धन्ति ते Cb. O. ते वर्द्धन्ति हि K. ते वर्द्धेषु A. B. Ca.

3) यथा B. K. O.

4) मम added by us conjecturally. O. has धर्मेष मय धर्म देशितं.

5) Reading conjectural. MSS. न एति निर्वृताः; but O. has कश्चि for एति.

6) The following latter part of this chapter is altogether left out in Kumârajiva's version, while it is preserved or added in the other two Chinese versions.

7) सर्वविनय A. सर्वविषयेषु B. K. W. सत्वविनय Cb. सत्वविनयने O.

8) भा A. B. O. प्रभाः in other MSS., which also in the sequel have the plural ending in the verbs.

न्ति[1] महायानिक[2]प्रत्येकबुद्धयानिक[3]श्रावकयानिकेषु[4] सद्धर्मदेशना समं प्रवर्तते । न च तथागतस्य ज्ञानप्रभाया[5] ऊनता वातिरिक्तता वा यथा पुण्यज्ञानसमुदागमाय संभवति । न सन्ति काश्यप त्रीणि यानानि केवलमन्योन्यचरिताः सत्त्वाः । तेन त्रीणि यानानि प्रज्ञप्यन्ते ॥

5 एवमुक्त[6] आयुष्मान्महाकाश्यपो भगवन्तमेतदवोचत् । यदि भगवन्न सन्ति त्रीणि यानानि किंकारणं प्रत्युत्पन्ने ऽध्वनि श्रावकप्रत्येकबुद्धबोधिसत्त्वानां प्रज्ञप्तिः प्रज्ञप्यते ॥

एवमुक्ते भगवानायुष्मन्तं महाकाश्यपमेतदवोचत् । तद्यथा काश्यप कुम्भकारः[7] समासु मृत्तिकासु भाजनानि करोति । तत्र कानिचिद्गुडभाजनानि भवन्ति कानिचिद्घृतभाजनानि[8] कानिचिद्दधिक्षीर[9]भाजनानि कानिचिद्धीनान्यशुचिभाजनानि भवन्ति । न च[10] मृत्तिकाया नानात्वमथ च द्रव्यप्रक्षेपमात्रेण भाजनानां नानात्वं प्रज्ञायते । एवमेव काश्यपैक-मेवेदं यानं यदुत बुद्धयानं[11] न द्वितीयं न तृतीयं वा यानं संविद्यते ॥

एवमुक्त आयुष्मान्महाकाश्यपो भगवन्तमेतदवोचत् । यद्यपि भगवन्सत्त्वा[12] नानाधिमुक्तयो ये त्रैधातुकान्निःसृताः किं तेषामेकं निर्वाणमुत द्वे त्रीणि वा ॥ भगवानाह

1) न्त्या A. K. न्ता B. O.

2) के B.

3) केषु B. K.

4) B. K. add च.

5) गतप्रज्ञयान (read प्रज्ञाया) O.

6) The whole paragraph is left out in A.

7) B. K. add क.

8) Left out in K.

9) क्षीर left out in Cb. W

10) च left out in B. K.

11) महा B. Cb. K.

12) नां added in Cb.

सर्वधर्मसमतावबोधाद्धि[1] काश्यप निर्वाणम् । तच्चैकं न द्वे न त्रीणि । तेन हि काश्यपो-पमां ते करिष्याम्युपमेयैकत्या[2] विज्ञपुरुषा भाषितस्यार्थमाजानन्ति ॥

तद्यथा काश्यप जात्यन्धः पुरुषः स[3] एवं ब्रूयान्न सन्ति सुवर्णदुर्वर्णानि रूपाणि न सन्ति सुवर्णदुर्वर्णानां रूपाणां द्रष्टारो न स्तः[4] सूर्याचन्द्रमसौ न सन्ति नक्षत्राणि न सन्ति ग्रहा न सन्ति ग्रहाणां द्रष्टारः । अथान्ये पुरुषास्तस्य जात्यन्धस्य पुरुषस्य पुरत एवं वदेयुः । सन्ति सुवर्णदुर्वर्णानि रूपाणि सन्ति सुवर्णदुर्वर्णानां रूपाणां द्रष्टारः स्तः[5] सूर्याच-न्द्रमसौ[6] सन्ति नक्षत्राणि सन्ति ग्रहाः सन्ति ग्रहाणां द्रष्टारः । स च जात्यन्धः पुरुषस्तेषां पुरुषाणां न श्रद्दध्यान्नोक्तं गृह्णीयात् । अथ कश्चिद्वैद्यः सर्वव्याधिज्ञः स्यात् । स तं जा-त्यन्धं पुरुषं पश्येत्तस्यैवं स्यात् । अस्य पुरुषस्य पूर्व[7]पापेन कर्मणा व्याधिरुत्पन्नः । ये च केचन व्याधय उत्पद्यन्ते ते सर्वे चतुर्विधा वातिकाः पैत्तिकाः श्लैष्मिकाः सांनिपातिकाश्च । अथ स वैद्यस्तस्य व्याधेर्व्युपशमनार्थं पुनः पुनरुपायं चिन्तयेत्तस्यैवं स्यात् । यानि खल्वि-मानि[8] द्रव्याणि प्रचरन्ति न तैः शक्यो ऽयं व्याधिश्चिकित्सितुं सन्ति तु हिमवति पर्व-तराजे चतस्र ओषधयः[9] । कतमाश्चतस्रः । तद्यथा । प्रथमा सर्ववर्णरसस्थानानुगता[10] नाम द्वितीया सर्वव्याधिप्र[11]मोचनी नाम तृतीया सर्वविषविनाशनी[12] नाम चतुर्थी यथास्थान[13]स्थि-

---

1) ताचबोधर्घा A. ताचबोधाद्धि B. Cb. ताचबोधा एतद्धि K. ताचबोधाद्ध W.

2) Sic O. कस्य for कत्या in other MSS. Left out in B. K.

3) Left out in O.

4) संविद्यते B. K. स्तः O सन्ति the rest.

5) संविद्यन्ते A. B. K. W. एवं सन्ति Cb. स्त O.

6) Sic O. चन्द्रसूर्यौ the rest.

7) पूर्व left out in B. K.

8) खल्विदं B. Cb. K. O.

9) A. W. add संविद्यंते. Cb. adds विद्यंते. O. अस्ति.

10) स्थापनी B. Cb. K. Perhaps to r. स्थाम for स्थान.

11) वि B. K. O. विमोच A. Ca. W.

12) विनाश B. K. O. प्रसम Cb.

13) म B. K.

तमुखप्रदा नाम । इमाश्चतस्र ओषधयः । अथ स वैद्यस्तस्मिञ्जात्यन्धे कारुण्यमुत्पाद्य
तादृशमुपायं चिन्तयेद्येनोपायेन हिमवन्तं पर्वतराजं शक्नुयाद्गन्तुम् । गत्वा चोर्ध्वमप्यारोहे[1]-
दधो ऽप्यवतरेत्तिर्यगपि प्रविचिनुयात् । स एवं प्रविचिन्वंस्ताश्चतस्र ओषधीरारागयेदा-
राग्य[2] च कांचिद्दन्तैः क्षोदितां कृत्वा दद्यात्कांचित्पेषयित्वा दद्यात्कांचिदन्यद्रव्यसंयोजितां
5 पाचयित्वा दद्यात्कांचिदामद्रव्यसंयोजितां कृत्वा दद्यात्कांचिच्छलाकया शरीरस्थानं[3] वि-
द्ध्वा दद्यात्कांचिदग्निना परिदाह्य दद्यात्कांचिदन्योन्यद्रव्यसंयुक्तां यावत्पानभोजनादिष्व-
पि योजयित्वा दद्यात् । अथ स जात्यन्धपुरुषस्[4]तेनोपाय[5]योगेन चक्षुः प्रतिलभेत । स प्रति[6]-
लब्धचक्षुर्बहिरध्यात्मं दूरे आसन्ने च चन्द्रसूर्यप्रभां नक्षत्राणि ग्रहान्सर्वरूपाणि च
पश्येत् । एवं च वदेत् । अहो बताहं मूढो ये ऽहं पूर्वमाचक्षमाणानां न श्रद्दधामि[7] नोद्-
10 गृह्णामि । सो ऽहमिदानीं सर्वं पश्यामि मुक्तो ऽस्म्यन्धभावात्प्रतिलब्धचक्षुश्चास्मि न च
मे[8] कश्चिद्विशिष्टतरो ऽस्तीति । तेन च समयेन पञ्चाभिज्ञा ऋषयो भवेयुर्दिव्यचक्षुर्दिव्य-
श्रोत्रपरचित्तज्ञानपूर्वनिवासानुस्मृतिज्ञानर्द्धिविमोक्षक्रियाकुशलास्ते तं पुरुषमेवं वदेयुः ।
केवलं भोः पुरुष त्वया चक्षुः प्रतिलब्धं न तु भवान्किंचिज्जानाति । कुतो ऽभिमानस्ते
समुत्पन्नः । न च ते ऽस्ति प्रज्ञा न चासि पण्डितः । तमेनमेवं वदेयुः । यदा त्वं भोः पुरुषा-
15 न्तर्गृहे[9] निषण्णो बहिरन्यानि[10] रूपाणि न पश्यसि न च जानासि नापि ते ये सत्त्वाः स्नि-

---

1) रुहेत् B. रोहेत् K. O रुघेत् A.
2) आरागयित्वा A. Cb. W. आराग्य B. A. आराधयेदाराध्य O.
3) Read शिरास्थानं.
4) पुरुष left out in B. Cb. O.
5) येन W.
6) प्रति left out in B. Cb. K.
7) घे B. K.
8) Hardly right. O. has मत्तो. Perhaps to r. मत्कश्चि.
9) क्र K. W. The true r. probably के; cp. Pāli *antogahe*.
10) बहिर्गतानि O.

गधचित्ता वा दुग्धचित्ता वा। न विजानीषे पञ्चयोजनान्तरस्थितस्य जनस्य भाषमाणस्य[1]। भेरीशङ्खादीनां शब्दं न प्रजानासि[2] न शृणोषि। क्रोशान्तरमप्यनुत्क्षिप्य पादौ[3] न शक्नोषि गन्तुं। जातसंवृद्धश्चासि मातुः कुक्षौ तां च क्रियां न स्मरसि। तत्कथमसि पण्डितः कथं च[4] सर्वं पश्यामीति वदसि। तत्साधु भोः पुरुष यदन्धकारं तत्प्रकाशमिति संजानीषे[5] यच्च प्रकाशं तदन्धकारमिति संजानीषे॥ 5

अथ स पुरुषस्तानृषीनेवं वदेत्। क उपायः किं वा शुभं कर्म कृत्वेदृशीं[6] प्रज्ञां प्रतिलभेय युष्माकं प्रसादाच्चैतान्गुणान्प्रतिलभेय॥ अथ खलु[7] त ऋषयस्तस्य पुरुषस्यैवं कथयेयुः। यदीच्छस्यरण्ये वस पर्वतगुहासु वा निषण्णो धर्मं चिन्तय[8] क्लेशाश्च ते[9] प्रहातव्याः। तथा धूतगुणसमन्वागतो ऽभिज्ञाः प्रतिलप्स्यसे॥ अथ स पुरुषस्तमर्थं गृहीत्वा प्रव्रजितः। अरण्ये वसन्नेकाग्रचित्तो लोकतृष्णां प्रहाय पञ्चाभिज्ञाः प्राप्नुयात्। प्रतिलब्धाभिज्ञश्च[10] चिन्तयेत्। यदहं पूर्वमन्यत्कर्म कृतवान् तेन मे न कश्चिद्गुणो ऽधिगतः। इदानीं यथाचिन्तितं गच्छामि पूर्वं चाहमल्पप्रज्ञो ऽल्पप्रतिसंवेद्यन्धभूतो ऽस्म्यासीत्[11]॥ 10

इति हि काश्यपोपमैषा कृतास्यार्थस्य विज्ञप्तये। अयं च पुनरत्रार्थो[12] द्रष्टव्यः। जात्यन्ध इति काश्यप षड्गतिसंसारस्थितानां[13] सत्त्वानामेतदधिवचनं[14] ये सद्धर्मं न जानन्ति

---

1) भाषतो Cb. W. O.

2) प्र in Cb. only.

3) दान्न A. K. W. दौ न B. Cb. दा न O. MSS. अनुत्क्षिप्य.

4) A. K. W. add सर्वं जानामि कथं च. O. has सर्वं जनामि पश्यामीति.

5) संजानासि O.

6) शां B.

7) In B. K. only.

8) यन् A. Cb. य B. K. O. यः W.

9) Left out in Cb.

10) तश्च B. K.

11) अस्मा संवृत्तः A. अस्म्या संवृत्तः W. आसत् O.

12) पुनर् in A. W. only.

13) पञ्चगतिक B. Cb. K. पञ्चसंसारगति O.

14) Sic O.; the others पि for धि.

क्लेशतमोऽन्धकारं च संवर्धयन्ति । ते चाविद्यान्धा अविद्यान्धाश्च संस्कारानुपविचिन्वन्ति संस्कारप्रत्ययं च नामरूपं यावदेवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति ॥

एवमविद्यान्धास्तिष्ठन्ति सत्त्वाः संसारे तथागतस्तु करुणां जनयित्वा[1] त्रैधातुकान्निःसृतः पितेव प्रिय एकपुत्रके[2] करुणां जनयित्वा[1] त्रैधातुके ऽवतीर्य सत्त्वान्[3]संसारचक्रे
5 परिभ्रमतः[4] संपश्यति[5] न च[6] संसारान्निःसरणं[7] प्रजानन्ति[7] । अथ भगवांस्तान्प्रज्ञाचक्षुषा पश्यति दृष्ट्वा च जानाति । अमी सत्त्वाः पूर्वं[8] कुशलं कृत्वा मन्दद्वेषास्तीव्ररागा मन्दरागास्तीव्रद्वेषाः[9] केचिदल्पप्रज्ञाः केचित्पण्डिताः केचित्परिपाकशुद्धाः केचिन्मिथ्यादृष्टयस्तेषां सत्त्वानां तथागत[10] उपायकौशल्येन त्रीणि यानानि देशयति ॥

तत्र यथा त ऋषयः पञ्चाभिज्ञा विशुद्धचक्षुष एवं बोधिसत्त्वा बोधिचित्तान्युत्पा-
10 द्यानुत्पत्तिकीं[11] धर्म[12]क्षान्तिं प्रतिलभ्यानुत्तरां सम्यक्संबोधिमभिसंबुध्यन्ते ॥

तत्र यथासौ महावैद्य एवं तथागतो द्रष्टव्यः । यथासौ जात्यन्धस्तथा मोहान्धाः सत्त्वा द्रष्टव्याः । यथा वातपित्तश्लेष्माण एवं रागद्वेषमोहाः । द्वाषष्टि च दृष्टिकृतानि द्रष्टव्यानि । यथा चतस्र ओषधयस्तथा शून्यतानिमित्ताप्रणिहितनिर्वाणद्वारं च द्रष्ट-

---

1) संजनय्य B. संजनया K.

2) A. W. add च.

3) सत्त्वाः A. W. सत्त्वा K.

4) परिभ्रमंति A. W. भ्रमतः B. Cb. K. भ्रममाणानि O.

5) संदृश्यते Cb. संदृश्यन्ते O.

6) च न Cb. O. तेन च K.

7) प्रजानातीति A. W. संजानन्ति B. संजान्ति K. जानाति Cb. जानन्तीति O. A. W. add यथाभूतं after निःसरणं.

8) B. K. O. add मूल.

9) तीव्रमोहाः added in A. B. Ca. K.

10) भगवान् B. Cb. K.

11) किं Cb. v. l. क.

12) धर्म left out in O.

व्यम्। यथा यथा द्रव्याण्युपयुज्यन्ते तथा तथा व्याधयः प्रशाम्यन्तीति। एवं शून्यतानिमित्ताप्रणिहितानि[1] विमोक्षमुखानि[2] भावयित्वा सत्त्वा अविद्यां निरोधयन्ति। अविद्यानिरोधात्संस्कारनिरोधः। यावदेवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति। एवं चास्य चित्तं न कुशले तिष्ठति न पापे॥

यथान्धश्चक्षुः प्रतिलभते तथा श्रावकप्रत्येकबुद्धयानीयो[3] द्रष्टव्यः। संसार[4]क्लेशबन्धनानि छिनत्ति[5] क्लेशबन्धनाद्विर्मुक्तः प्रमुच्यते[6][7] षड्गतिकात्त्रैधातुकात्। तेन श्रावकयानीय एवं जानात्येवं च वाचं भाषते। न सन्त्यपरे धर्मा अभिसंबोद्धव्या निर्वाणप्राप्तो ऽस्मीति। अथ खलु तथागतस्तस्मै[8] धर्मं देशयति। येन सर्वधर्मा न प्राप्ताः कुतस्तस्य निर्वाणमिति। तं भगवान्बोधौ समादापयति। स उत्पन्नबोधिचित्तो न संसारस्थितो न निर्वाणप्राप्तो भवति। सो ऽवबुध्य त्रैधातुकं दशसु दिक्षु शून्यं निर्मितोपमं मायोपमं स्वप्नमरीचिप्रतिश्रुत्कोपमं लोकं पश्यति। स सर्वधर्माननुत्पन्नाननिरुद्धानबद्धा[9]नमुक्तान्न तमोऽन्धकारान्न प्रकाशान्पश्यति। य एवं गम्भीरान्धर्मान्पश्यति स पश्यत्यपश्यनया सर्व[10]त्रैधातुकं परिपूर्णमन्योन्य[11]सत्त्वाशयाधिमुक्तम्॥

अथ खलु भगवानिममेवार्थं भूयस्या मात्रया संदर्शयमान[12]स्तस्यां वेलायामिमा गाथा अभाषत॥

---

1) ते Cb. ता K. त O.
2) मुखा Cb विमोक्ष wanting in O.
3) यानिका O.; the plural also in the sequel.
4) रे K.
5) छिन्दन्ति O.
6) नाद्विमुक्त विमुच्यते B. K. नाविमुक्त प्रमुंचते Cb. ना प्रमुक्ता प्रमुच्यन्ते O.
7) पञ्चगति Cb. K. O.
8) भगवां Cb. K. O.
9) अबद्धान् left out in K.
10) सर्वं A. K.
11) Thus O.; other MSS. °न्यात्र.
12) अभिद्योतयमान O.

चन्द्रसूर्यप्रभा यद्वन्निपतन्ति समं नृषु ।
गुणवत्स्वथ पापेषु प्रभाया नोनपूर्णता ॥ ४५ ॥
तथागतस्य प्रज्ञा च भासदादित्यचन्द्रवत् ।
सर्वसत्त्वान्विनयते न चोना नैव चाधिका ॥ ४६ ॥
5 यथा कुलालो मृद्भाण्डं कुर्वन्मृत्सु समास्वपि ।
भवन्ति भाजना[1] तस्य गुडक्षीरघृताम्भसाम् ॥ ४७ ॥
[2]अशुचेः कानिचित्तत्र[3] दध्नो[4]ऽन्यानि भवन्ति तु[5] ।
मृदमेकां स गृह्णाति कुर्वन्भाण्डानि भार्गवः ॥ ४८ ॥
यादृक्प्रक्षिप्यते द्रव्यं भाजनं तेन लक्ष्यते[6] ।
10 सत्त्वा[7]विशेषे ऽपि[8] तथा रुचिभेदात्तथागताः ॥ ४९ ॥
यानभेदं वर्णयन्ति बुद्धयानं तु निश्चितम् ।
संसारचक्रस्याज्ञानान्निर्वृतिं न विजानते[9] ॥ ५० ॥
यस्तु शून्यान्विजानाति धर्मानात्मविवर्जितान् ।
संबुद्धानां भगवतां बोधिं जानाति तत्त्वतः ॥ ५१ ॥
15 प्रज्ञामध्यव्यवस्थानात्प्रत्येकजिन उच्यते ।
शून्यज्ञानविहीनत्वाच्छ्रावकः संप्रभाष्यते[10] ॥ ५२ ॥

---

1) MSS. भाजनास्तस्य, but O. has भाजनानां पृथक्कु स्याद्.
2) दध्नश्च (r. दध्नश्च) O ; अशुचि the rest.
3) Thus O.; the others have दध्नो.
4) अशुचेरपराणि O.; दध्यन्यानि the others.
5) च A. O.
6) द्रव्य A. K. W. भ्य Ca. त्त Cb. तस्य तद्भवेत् O.
7) सत्ता A. B. Ca. K. W. संघा Cb.
8) Sic all MSS.
9) विज्ञापते W.
10) ज्ञानावबोधात् O.

सर्वधर्मावबोधात्तु सम्यक्संबुद्ध उच्यते ।
तेनोपायशतैर्नित्यं धर्मं देशेति[1] प्राणिनाम् ॥ ५३ ॥
यथा हि कश्चिज्जात्यन्धः सूर्येन्दुग्रहतारकाः[2] ।
अपश्यन्नेवमाहासौ[3][4] नास्ति रूपाणि सर्वशः ॥ ५४ ॥
जात्यन्धे तु महावैद्यः कारुण्यं संनिवेश्य हि[5] ।
हिमवन्तं स गत्वा च[6] तिर्यगूर्ध्वमधस्तथा ॥ ५५ ॥
सर्ववर्णरसस्थाना[7] नगाल्लभत ओषधीः[8] ।
एवमादींश्चतस्रो ऽथ प्रयोगमकरोत्ततः[9] ॥ ५६ ॥
दन्तैः संचूर्ण्य कांचित्तु[10] पिष्ट्वा चान्यां तथापराम् ।
सूच्यग्रेण प्रवेश्याङ्गे जात्यन्धाय प्रयोजयेत् ॥ ५७ ॥
स लब्धचक्षुः संपश्येत्सूर्येन्दुग्रहतारकाः[11] ।
एवं चास्य भवेत्पूर्वमज्ञानात्तदुदाहृतम् ॥ ५८ ॥
एवं सत्त्वा महाज्ञानाज्जात्यन्धाः संसरन्ति हि ।
प्रतीत्योत्पादचक्रस्य अज्ञानाद्दुःखधर्मणः[12] ॥ ५९ ॥

---

1) देशति A. देशंति W. देसेति B. देशेत Cb देशेति K. O.
2) का O.; कान् the rest.
3) न्ने A. W. न्ते B. Cb. K.
4) वमोहासौ A. W. वमोहात्सौ B. वमहासौ Cb वमोक्रौसौ K वमाहासौ O.
5) Thus O. वेश हि A. वेश्य हि Cb. W. वेशयेत् B. K.
6) Thus Cb. O.; तु the rest. Perhaps to r. गत्वाथ or गत्वान.
7) All स्थाना.
8) All but O. ओषधीम्.
9) रोत्तु तम् A. रोत्तः B. रोत्त तम् Ca. W. रोत्तः K. रोत्ततः O.
10) All but O. कांश्चि° and चान्यांस्त°.
11) All but O. कान्.
12) त्र्मणः O.; one MS. has वर्त्मनः. We conjecture धर्मिणः.

एवमज्ञानसंमूढे लोके सर्वविदुत्तमः ।
तथागतो महावैद्य उत्पन्नः करुणात्मकः ॥ ६० ॥
उपायकुशलः शास्ता सद्धर्मं देशयत्यसौ ।
अनुत्तरां बुद्धबोधिं देशयत्यग्रयानिके[1] ॥ ६१ ॥
5 प्रकाशयति मध्यां तु मध्यप्रज्ञाय नायकः ।
संसार[2]भीरवे बोधिमन्यां संवर्णयत्यपि ॥ ६२ ॥
त्रैधातुकान्निःसृतस्य श्रावकस्य विजानतः ।
भवत्येवं मया प्राप्तं निर्वाणममलं शिवम् ॥ ६३ ॥
[3]तामे[4]व तत्र[5] प्रकाशेमि नैतन्निर्वाणमुच्यते ।
10 सर्वधर्मावबोधात्तु निर्वाणं प्राप्यते ऽमृतम् ॥ ६४ ॥
महर्षयो यथा तस्मै करुणां संनिवेश्य वै[6] ।
कथयन्ति च मूढो ऽसि मा ते ऽभूज्ज्ञानवानहम् ॥ ६५ ॥
अभ्यन्तरावस्थितो ऽपि यदा भवसि कोष्ठके ।
बहिर्यद्वर्तते तद्वै[7] न जानीषे त्वमल्पधीः ॥ ६६ ॥

---

1) यायिन A. W. यायिने Ca. यानिके B. K. O.

2) र B. Ca. K. O. रे A. W.

3) This halfverse in A. W. only.

4) षु A. व W.

5) तत्र left out in W. तामेव is here meaningless; the original Prākṛt may have had तं व. (Skr. तदेव).

6) In O. वे; हि the others; originally probably ह, cp. vs. 55.

7) किंचि O.

यो ऽभ्यन्तरे ऽवस्थितस्तु बहिर्ज्ञातं[1] कृताकृतम् ।
सो ऽद्यापि[2] न जानाति कुतस्त्वं वेत्स्यसे[3] ऽल्पधीः[4] ॥ ६७ ॥

पञ्चयोजनमात्रे तु यः शब्दो नियोरदिह ।
तं श्रोतुं न समर्थो ऽसि प्रागेवान्यं विदूरतः[5] ॥ ६८ ॥

त्वयि ये पापचित्ता वा अनुनीतास्तथापरे । 5
ते न शक्या त्वया ज्ञातुमभिमानः[6] कुतो ऽस्ति ते ॥ ६९ ॥

क्रोशमात्रे ऽपि गन्तव्ये[7] पदवीं[8] न विना गतिः ।
मातुः कुक्षौ च यद्वृत्तं विस्मृतं तत्तदेव ते ॥ ७० ॥

अभिज्ञा यस्य पञ्चैताः स सर्वज्ञ इहोच्यते ।
त्वं मोहादप्यकिंचिज्ज्ञः सर्वज्ञो ऽस्मीति भाषसे ॥ ७१ ॥ 10

सर्वज्ञत्वं प्रार्थयसे यद्यभिज्ञाभिनिर्हरेः[9][10] ।
तं चाभिज्ञाभिनिर्हारमरण्यस्थो विचिन्तय[11] ।
धर्मं विशुद्धं तेन त्वमभिज्ञाः प्रतिलप्स्यसे ॥ ७२ ॥

---

1) ज्ञाने A. Ca K. W. ज्ञाने B. ज्ञासि O. कृताकृत O. Our reading conjectural.

2) धातु A. ह्यापि B. Ca. त्याद्यापि K.

3) वेत्स्यत्य A. W. वेत्स B. ज्ञास्यसे Ca वेत्स्यसे K. तद्वद्यते O.

4) नघः B. K. नद्य O. read तद्य.

5) सु for वि O.

6) नं A. W.

7) व्यं A. B. W. व्ये Ca. K. O.

8) न्तु Ca. W. तु A. न्न B K. वीं न O.

9) ज्ञासु नि° O.

10) रेत् A. र O.

11) येत A. यः B. ये Ca. W. य K. O.

सो ऽर्थं गृह्य गतो ऽरण्यं चिन्तयेत्सुसमाहितः ।
अभिज्ञाः प्राप्तवान्पञ्च नचिरेण गुणान्वितः ॥ ७३ ॥
तथैव श्रावकाः सर्वे प्राप्तनिर्वाणसंज्ञिनः ।
जिनो ऽथ देशयेत्तस्मै विश्रामो ऽयं न निर्वृतिः ॥ ७४ ॥
उपाय एष बुद्धानां वदन्ति यदिमं(1) नयम् ।
सर्वज्ञत्वमृते नास्ति निर्वाणं तत्समारभ(2) ॥ ७५ ॥
त्र्यध्वज्ञानमनन्तं च षट्(3) च पारमिताः शुभाः ।
शून्यतामनिमित्तं च प्रणिधानविवर्जितम् ॥ ७६ ॥
बोधिचित्तं च ये चान्ये धर्मा निर्वाणगामिनः ।
सास्रवा नास्रवाः शान्ताः सर्वे(4) गगनसंनिभाः ॥ ७७ ॥
ब्रह्मविहाराश्चत्वारः संग्रहा ये च कीर्तिताः ।
सत्त्वानां विनयार्थाय कीर्तिताः परमर्षिभिः(5) ॥ ७८ ॥
यश्च धर्मान्विजानाति मायास्वप्नस्वभावकान् ।
कदलीस्कन्धनिःसारान्प्रतिश्रुत्कासमानकान् ॥ ७९ ॥
तत्स्वभावं च जानाति(6) त्रैधातुकमशेषतः(7) ।
अबद्धम(8)विमुक्तं(9) च स विजानाति निर्वृतिम् ॥ ८० ॥

---

1) All but O. यदिदं.

2) समाचर O.

3) पंच A. K. W. षट् B. Ca. Cb O.

4) सर्वे Ca. K. सर्व the rest. The whole stanza wanting in O., and in the Chinese versions by Dharmarakṣa and Kumārajīva, whereas in the translation by Jñānagupta and Dharmagupta only the first half strophe is rendered.

5) ता ये मह्न K.

6) मि A. सि B. तिः W. ति Ca. Cb. K.

7) क्तः W.

8) द्धान A.

9) क्तांश्च A. W. क्तश्च Cb. क्तं च B. Ca. क्तस्व K. O.

सर्वधर्मान्समाञ्शून्यान्निर्नानाकरणात्मकान् ।
न चैतान्प्रेक्षते[1] नापि किंचिद्धर्मं विपश्यति ॥ ८१ ॥
स पश्यति महाप्रज्ञो धर्मकायमशेषतः ।
नास्ति यानत्रयं किंचिदेकयानमिहास्ति तु ॥ ८२ ॥
सर्वधर्माः समाः सर्वे समाः समसमाः सदा ।
एवं ज्ञात्वा विजानाति निर्वाणममृतं शिवम् ॥ ८३ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय ओषधीपरिवर्तो नाम पञ्चमः ॥

---

1) चैनां A. W. चैतां B. चेमां Ca. चते Cb. चैताम्प्रे K. चैव O.

# VI

अथ खलु भगवानिमा गाथा भाषित्वा सर्वावन्तं भिक्षुसंघमामन्त्रयते स्म । आरोच-
यामि वो भिक्षवः प्रतिवेदयामि । अयं मम श्रावकः काश्यपो भिक्षुस्त्रिंशतो[(1)] बुद्धकोटी-
सहस्राणामन्तिके[(2)] सत्कारं करिष्यति गुरुकारं मानना पूजनामर्चनामपचायनां[(3)] करिष्यति
तेषां च बुद्धानां भगवतां सद्धर्मं धारयिष्यति । स पश्चिमे समुच्छ्रय[(4)] अवभासप्राप्तायां लो-
5 कधातौ महाव्यूहे कल्पे रश्मिप्रभासो नाम तथागतोऽर्हन्सम्यकसंबुद्धो लोके[(5)] भविष्य-
ति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनु-
ष्याणां च बुद्धो भगवान् । द्वादश चास्यान्तर[(6)]कल्पानायुष्प्रमाणं[(7)] भविष्यति । विंशतिं[(8)] चा-
स्यान्तर[(9)]कल्पान्सद्धर्मः स्थास्यति । विंशतिमेवान्तरकल्पान्सद्धर्मप्रतिरूपकः स्थास्यति ।
तच्चास्य बुद्धक्षेत्रं शुद्धं भविष्यति शुच्यपगतपाषाणशर्करकठल्यमपगतश्वभ्रप्रपातमपग-
10 तस्यन्दनिका[(10)]गूथोडिगल्लं[(11)] समं रमणीयं प्रासादिकं दर्शनीयं वैडूर्यमयं रत्नवृक्षप्रतिमण्डितं

---

1) तां A. W.

2) अन्तिके left out in B. K.

3) अपचायनां left out in Cb.

4) Wrong for येऽव.

5) लोके left out in Cb.

6) चास्य left out in Cb. K.

7) युष्प्र B. Cb. K. W. यु: प्र A.

8) ति in all MSS.

9) अस्य left out in Cb. K.

10) स्यन्दनिका left out in B. Cb. K.

11) गूठोदिगल्लं A. भूथोडिल्लं B. भूषोतिल्लं Cb. गूथोडिल्लं K. गूथोडिगल्लं W. गूथोडं O. Cp Pāli *oḷigalla*

सुवर्णसूत्राष्टापदनिबद्धं पुष्पाभिकीर्णाम् । बहूनि च तत्र[1] बोधिसत्त्वशतसहस्राण्युत्प-त्स्यन्ते । अप्रमेयाणि च तत्र श्रावककोटीनयुत[2]शतसहस्राणि भविष्यन्ति । न च तत्र मारः पापीयान[3]वतारं लप्स्यते न च[4] मारपर्षत्[5]प्रज्ञास्यते । भविष्यति तत्र खलु पुनर्मारश्च मा-रपर्षदश्च[6] । अपि तु खलु पुनस्तत्र लोकधातौ[7] तस्यैव भगवतो रश्मिप्रभासस्य तथागतस्य शासने सद्धर्मपरिग्रहायाभियुक्ता भविष्यन्ति ॥ 5

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

पश्याम्यहं भिक्षव[8] बुद्धचक्षुषा स्थविरो ह्ययं काश्यप बुद्ध[9] भेष्यति[10] ।
अनागतेऽध्वानि असंख्य[11]कल्पे कृत्वान पूजां द्विपदोत्तमानाम् ॥ १ ॥
त्रिंशत्सहस्राः परिपूर्णकोट्यो जिनानयं द्रक्ष्यति काश्यपो ह्यय[12]म् ।
चरिष्यती तत्र च ब्रह्मचर्यं बौद्धस्य ज्ञानस्य कृतेन भिक्षवः[13] ॥ २ ॥ 10
कृत्वान पूजां द्विपदोत्तमानां समुदानिय[14] ज्ञानमिदं अनुत्तरम् ।
स पश्चिमे चोच्छ्रयि लोकनाथो भविष्यते अप्रतिमो महर्षिः ॥ ३ ॥

---

1) चात्र Cb. O.

2) नि in all MSS. but O.

3) मारा पापीमन्तो O.

4) From अवतारं till न च left out in Cb.

5) दा A. त् B. र्षा वा Cb. षन् K. र्षदा W. परिषदो pl. n. O.; so, too, in the sequel.

6) भविष्यन्ति K. All the other MSS. read भविष्यति °माराश्च after which Cb. adds पापीयां.

7) From खलु till तौ left out in Cb.

8) वो A. व K. O.

9) बुद्धो A.

10) भवि W.

11) ख्येय A. ख्येये W. One folio wanting in O.

12) ह्य left out in Cb. ह्रि only to avoid hiatus

13) भिक्षुः Cb. K.

14) नी A. निय Cb.

क्षेत्रं च तस्य प्रवरं भविष्यति विचित्र[1] शुद्धं शुभ[2] दर्शनीयम्[3]।
मनोज्ञरूपं सद प्रेमणीयं सुवर्णसूत्रैः समलंकृतं च ॥ ४ ॥
रत्नामया वृक्ष तहिं विचित्रा[4] अष्टापदस्मिं तहि एकमेके।
मनोज्ञगन्धं च विमुञ्चमाना भेष्यन्ति क्षेत्रस्मि इमस्मि भिक्षो[5] ॥ ५ ॥
5 पुष्पप्रकारैः[6] समलंकृतं च विचित्रपुष्पैरुपशोभितं च[7]।
श्वभ्रप्रपाता न च तत्र सन्ति समं शिवं भेष्यति दर्शनीयम् ॥ ६ ॥
तहि बोधिसत्त्वान सहस्रकोट्यः सुदान्तचित्तान महर्द्धिकानाम्।
वैपुल्यसूत्रान्तधराण तायिनां बहू भविष्यन्ति सहस्रनेके ॥ ७ ॥
अनास्रवा अन्तिमदेहधारिणो भेष्यन्ति[8] ये श्रावक धर्मराज्ञः[9]।
10 प्रमाणु तेषां न कदाचि विद्यते दिव्येन ज्ञानेन गणित्व[10] कल्पान् ॥ ८ ॥
सो द्वादश अन्तरकल्प स्थास्यति सद्धर्म विंशान्तरकल्प स्थास्यति[11]।
प्रतिरूपकश्चान्तरकल्पविंशति[12] रश्मिप्रभासस्य वियूहु[13] भेष्यति ॥ ९ ॥

अथ खल्वायुष्मान्महामौद्गल्यायनः स्थविर आयुष्मांश्च सुभूतिरायुष्मांश्च महाका-

---

1) विशिष्ट instead of भविष्यति विचित्र in A. W.
2) शुभ left out in K.
3) A. W. add मनोरमं.
4) This verse and the first quarter of the following verse are left out in A.
5) Read भिक्षूः? or भिक्षवो?
6) MSS. पुष्पैः.
7) This second quarter is left out in Cb.
8) भवि B.
9) ज्ञः A. B. K. W. ज्ञाः Cb. (perhaps meant ज्ञः).
10) गणेत्व B. preferable; गणेन Cb.
11) This second quarter is left out in Cb.
12) कल्पु स्थास्यति K.
13) विपूर्ह B. विह्वय Cb. वियूह K. स व्यूह in others.

त्यायनः प्रवेपमानैः कायैर्भगवन्तमनिमिषैर्नेत्रैर्व्यवलोकयन्ति स्म । तस्यां च वेलायां पृथक्पृथङ्[1]नःसंगीत्येमा गाथा अभाषन्त[2] ॥

अर्हन्त हे महावीर शाक्यसिंह नरोत्तम[3] ।
अस्माकमनुकम्पाय बुद्धशब्दमुदीरय ॥ १० ॥
अवश्यमवसरं ज्ञात्वा अस्माकं पि नरोत्तम[4] । 5
अमृतेनेव सिञ्चित्वा व्याकुरुष्व[5] विभो जिन[6] ॥ ११ ॥
दुर्भिक्ष[7] आगतः कश्चिन्नरो लब्ध्वा सुभोजनम् ।
प्रतीक्ष भूय उच्येत हस्तप्राप्तस्मि भोजने ॥ १२ ॥
एवमेवोत्सुका अस्मो[8] हीनयानं विचिन्तय[9] ।
दुष्कालभयसत्त्वा[10] वा बुद्धज्ञानं लभामहे ॥ १३ ॥ 10
न तावदस्मान्संबुद्धो व्याकरोति महामुनिः ।
यथा हस्तस्मि प्रक्षिप्तं न तद्भुञ्जीत भोजनम् ॥ १४ ॥
एवं च उत्सुका वीर श्रुत्वा घोषमनुत्तरम् ।
व्याकृता[11] यद भेष्यामस्तदा[12] भेष्याम निर्वृताः ॥ १५ ॥

---

1) Read with O. नसः समन्त.

2) भाषन्ते स्म B. K.

3) मा: A. म B म: Cb. K. मा W.

4) म: B K. W Quite different in O. आशयं सारमस्माकं कदास्म व्याकरिष्यसि.

5) व्याकुरुष्व वि A. K. W. व्याकरिष्यति B. Cb.

6) The dialect requires व्याकरोहि; cp. vs. 16. नं A न: B. Cb. K.

7) MSS. दुर्भिक्षादा. A var. r. has क्ष घा.

8) अस्म A. B. अस्मे Cb. O. अस्मो K. अस्य W.

9) ये A. W. न्त B. न्तय Cb. नयः K. न्तया O.

10) सत्वभया A. भयसत्वो B. Cb. W भयसत्वा K. दुर्भिक्षे यथ भुक्तार्थी बुद्धयानं कथं लभेत् O.

11) याद K. W यद भेष्याम O.

12) तथा K.

व्याकरोहि[1] महावीर हितैषी[2] ह्यनुकम्पकः[3]।
अपि दारिद्र्यचित्तानां भवेद्वत्तो महामुने ॥ १६ ॥

अथ खलु भगवांस्तेषां महाश्रावकाणां स्थविराणामिममेवंरूपं चेतसैव चेतःपरिवितर्कमाज्ञाय पुनरपि सर्वावन्तं भिक्षुसंघमामन्त्रयते स्म । अयं मे भिक्षवो महाश्रावकः
5 स्थविरः सुभूतिस्त्रिंशत एवं[4] बुद्धकोटीनयुत[5]शतसहस्राणां सत्कारं करिष्यति गुरुकारं माननां पूजनामर्चनामपचायनां करिष्यति । तत्र च[6] ब्रह्मचर्यं चरिष्यति बोधिं च समुदानयिष्यति । एवंरूपांश्चाधिकारान्कृत्वा पश्चिमे समुच्छ्रये शशिकेतुर्[7]नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् ॥

10 रत्नसंभवं च[8] नामास्य तद्बुद्धक्षेत्रं भविष्यति । रत्नावभासश्च नाम स कल्पो भविष्यति । समं च तद्बुद्धक्षेत्रं भविष्यति रमणीयं स्फटिकमयं रत्नवृक्षविचित्रितमपगतश्वभ्रप्रपातमपगतगूथोडिगल्लं[9] मनोज्ञं पुष्पाभिकीर्णम् । कूटागारपरिभोगेषु चात्र पुरुषा वासं कल्पयिष्यन्ति । बहवश्चास्य श्रावका भविष्यन्त्यपरिमाणा येषां न शक्यं गणनया पर्यन्तो ऽधिगन्तुम् । बहूनि चात्र बोधिसत्त्वकोटीनयुत[10]शतसहस्राणि भविष्यन्ति । तस्य च भगवतो
15 द्वादशान्तरकल्पानायुष्प्रमाणं भविष्यति । विंशतिं चान्तरकल्पान्सद्धर्मः स्थास्यति ।

---

1) All but O. व्याकुरुष्व.
2) षी ग्न A. Cb. K. W. O. षिन B.
3) कः B. K. O. The rest क.
4) तामेव A. Cb. W. त एव B. K. त्रिंशानामेव O.
5) नयुत Cb. K. W. O. नियुत A. B. Ca.
6) च left out in A. B. सर्वत्र O.
7) यशस्केतु O.
8) वं च A. वां चास्य Cb. वश्च B. K. वश्च W. O.
9) MSS. गूथोडिल्लं and गूथोडं. Cp. p. 144.
10) All but O. नि.

विंशतिमेवान्तरकल्पान्सद्धर्मप्रतिरूपकः स्थास्यति[1]। स च भगवान्वैहायसमन्तरीक्षे स्थित्वा तीक्ष्णां धर्मं देशयिष्यति बहूनि च बोधिसत्त्वशतसहस्राणि बहूनि च श्रावकशतसहस्राणि विनेष्यति[2] ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

आरोचयामि अहमद्य भिक्षवः प्रतिवेदयाम्यद्य मम शृणोथ । 5
स्थविरः सुभूतिर्मम श्रावको ऽयं भविष्यते बुद्ध अनागते ऽध्वनि ॥ १७ ॥
बुद्धांश्च पश्यित्व महानुभावान् त्रिंशच्च पूर्णा नयुतान कोटीः[3] ।
चरिष्यते चर्य तदानुलोमि[4]कोमिमस्य ज्ञानस्य कृतेन चैषाम्[5] ॥ १८ ॥
स पश्चिमे वीर समुच्छ्रयस्मिन्द्वात्रिंशतीलक्षणरूपधारी ।
सुवर्णयूपप्रतिमो महर्षिर्भविष्यते[6] लोकहितानुकम्पी ॥ १९ ॥ 10
सुदर्शनीयं च सुक्षेत्र[7] भेष्यति इष्टं मनोज्ञं च महाजनस्य ।
विहरिष्यते यत्र स लोकबन्धुस्तारित्व प्राणीन[8]युतान कोटीः ॥ २० ॥
बहुबोधिसत्त्वात्र[9] महानुभावा अविवर्त्यचक्रस्य प्रवर्तितारः ।
तीक्ष्णेन्द्रियास्तस्य जिनस्य शासने य शोभयिष्यन्ति त[10] बुद्धक्षेत्रम् ॥ २१ ॥

---

1) This sentence is left out in A.

2) विनयि Cb. O विनेयि K.

3) ट्या: A. Ca. Cb. W. टी: B. K. टय: O.

4) लोमां Cb. लोमिका A. B W. O. लोमिका K.

5) भिक्षु: B. K. Perhaps to r. चैष:

6) भविष्यति would do as well, a pause following

7) सुभिक्ष भवि A. सुक्षेत्र भे B. Cb K. W.

8) णा O. The lengthening not required.

9) त्र in Cb. K O. only.

10) तत A. तद्‌ B. त Cb. O. च K. ष्यंतम W. शोभ O. for शोध of the others.

बहुश्रावकास्तस्य न संख्य तेषां प्रमाणु[1] नैवास्ति कदाचि तेषां ।[2]
षडभिज्ञत्रैविद्यमहर्द्धिकाश्च अष्टाविमोक्षेषु[3][4] प्रतिष्ठिताश्च ॥ २२ ॥
अचिन्तियं ऋद्धिबलं च भेष्यति[5] प्रकाशयन्तस्यिममग्रबोधिम्[6] ।
देवा मनुष्या यथ गङ्गवालिका भेष्यन्ति तस्यो[7] सततं कृताञ्जली ॥[8] २३ ॥
5 सो द्वादशी अन्तरकल्प स्थास्यति[9] सद्धर्मु[10] विंशान्तरकल्प[11] स्थास्यति ।[12]
प्रतिरूपको विंशतिमेव स्थास्यति कल्पान्तराणि द्विपदोत्तमस्य ॥ २४ ॥

अथ खलु भगवान्पुनरेव[13] सर्वावन्तं भिक्षुसंघमामन्त्रयते स्म । आरोचयामि वो भिक्षवः प्रतिवेदयामि । अयं मम श्रावकः स्थविरो महाकात्यायनो[14] ऽष्टानां बुद्धकोटीशतसहस्राणामन्तिके[15][16] सत्कारं करिष्यति गुरुकारं माननां पूजनामर्चनामपचायनां करिष्यति । परि-
10 निर्वृतानां च तेषां तथागतानां[17] स्तूपान्करिष्यति योजनसहस्रं[18][19] समुच्छ्रयेण पञ्चाशद्योजन-

---

1) णु A. K. णा B Cb. W. O.
2) तत्र A. W. विघ्नेन O.
3) अष्टौ A. Cb. K. W.
4) तेश्च A. Cb. W.
5) च भवि A B. भवि K. च भ W. भे Cb. तो स्य (Skr अस्य) भे O.
6) शयिष्यंति ममग्र A. ममाग्र K. W. शयन्तस्मिमिमग्र Cb. We follow O.
7) तस्य O., preferable.
8) लिं B. लीः K. O.
9) भोत्स्यति B. भेष्यति K. थास्यति O., certainly more original.
10) र्मु A. र्म B. Cb. K. W. र्म O.
11) ल्पु A. K. ल्प B. Cb. W.
12) भेष्यति B. K. थास्यति O.
13) रपि K.
14) रका B. K.
15) नियुतशत, except in Cb. O. नयुत W. O.
16) अन्तिके left out in B. K.
17) बुद्धानां B. बुद्धानाम्भगवतां K.
18) B. adds शत.
19) सहस्र left out in K.

नानि परिणाहेन[1] समानां रत्नानाम्। तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तेरश्मगर्भस्य मुसारगल्वस्य सप्तमस्य रत्नस्य। तेषां च स्तूपानां पूजां करिष्यति पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वज[2]पताकावैजय[3]न्तीभिश्च। ततश्च भूयः[4] परेण परतरेण पुनर्विंशतीनां बुद्धकोटीनामन्तिके[5] एवंरूपमेव[6] सत्कारं करिष्यति गुरुकारं माननां पूजनामर्चनामपचायनां करिष्यति। स[7] पश्चिमे[8] समुच्छ्रये[9] पश्चिम आत्मभावप्रति- 5 लम्भे जाम्बूनदप्रभासो नाम तथागतोऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। परिशुद्धं चास्य बुद्धक्षेत्रं भविष्यति समं रमणीयं प्रासादिकं दर्शनीयं स्फटिकमयं रत्नवृक्षाभिविचित्रितं सुवर्णसूत्राच्छो[10]डितं पुष्पसंस्तरसंस्तृतमपगतनिरयतिर्यग्योनियमलोकासुरकायं बहुनर[11]देवप्रतिपूर्णं बहुश्रावकशतसहस्रोपशोभितं बहुबोधिसत्त्व- 10 शतसहस्रालंकृतम्। द्वादश चास्या[12]न्तरकल्पानायुष्प्रमाणं भविष्यति। विंशति[13] चास्या[14]न्तरकल्पान्सद्धर्मः स्थास्यति। विंशतिमेवान्तरकल्पान्सद्धर्मप्रतिरूपकः स्थास्यति[15]॥

---

1) न्यायामेन B. न्यायाम K. Meant व्यामेन.

2) B. adds घण्ट.

3) काभिर् in A. K. W.

4) Our r. follows O; cp. p. 153. Other MSS. leave out च भूयः.

5) ग्रन्तिके in Cb. only.

6) व A. W. वं B. Cb. K.

7) A. W. add ततः.

8) Cb. adds च.

9) K. adds स.

10) त्रोच्छो Cb. Other MSS. badly त्राच्छादि.

11) A. W. add क.

12) ग्रस्य left out in B. K.

13) ति in all MSS. except O. having विंश.

14) ग्रस्य in Cb. only.

15) This sentence is left out in K.

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

शृणोथ मे भिक्षव अद्य सर्वे उदाहरन्तस्य गिरामनन्यथाम्[1]।
कात्यायनः स्थविरु[2] अयं[3] मि श्रावकः करिष्यते पूज विनायकानाम् ॥ २५ ॥
सत्कारु[4] तेषां च बहुप्रकारं बहुविधं लोकविनायकानाम्।
5 स्तूपांश्च कारापयि निर्वृतानां पुष्पेहि गन्धेहि च पूजयिष्यति ॥ २६ ॥
[5]लभित्व सो पश्चिमकं समुच्छ्रयं परिशुद्धक्षेत्रस्मि जिनो भविष्यति।
परिपूरयित्वा इममेव ज्ञानं देशेष्यते प्राणिसहस्रकोटिनाम् ॥ २७ ॥
[6]स सत्कृतो लोकि सदेवकस्मिन् प्रभाकरो[7] बुद्ध[8] विभुर्भविष्यति।
जाम्बूनदाभासु[9] स चापि[10] नाम्ना संतारको देवमनुष्यकोटिनाम् ॥ २८ ॥
10 बहुबोधिसत्त्वास्तथ श्रावकाश्च अमिता असंख्या पि च तत्र क्षेत्रे।
उपशोभयिष्यन्ति ते[11] बुद्धशासनं भवप्रहीणा[12] विभवाश्च सर्वे ॥ २९ ॥

अथ खलु भगवान्पुनरेव सर्वावन्तं भिक्षुसंघमामन्त्रयते स्म। आरोचयामि वो भिक्षवः प्रतिवेदयामि। अयं मम श्रावकः स्थविरो महामौद्गल्यायनो ऽष्टाविंशतिबुद्ध[13]सहस्राणि[14]ण्या[15]-

---

1) अनन्यथा O.
2) रु A. B. W. O रु Cb. K
3) अ left out in K.
4) रु B. W.
5) सु A. B. Cb. W. स K क W left out in A.
6) प्रभंकरो O.
7) सो भगवां A. W. नाम विभुरु Cb B. बुद्ध विभरु K भगव विभुरु O
8) स Cb. O.
9) चैव B. K.
10) मि B. K.
11) नक्षत्र K.
12) ममाद्य B. K. मे भिक्षवः अद्य O
13) बु K.
14) कोटिसहु O.
15) णया K. रागाणा the others.

रागयिष्यति[1] तेषां[2] च बुद्धानां भगवतां विविधं सत्कारं करिष्यति गुरुकारं माननां पूजनामर्चनामपचायनां करिष्यति । परिनिर्वृतानां च तेषां बुद्धानां भगवतां स्तूपान्कारयिष्यति[3] सप्तरत्नमयान् । तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य स्फटिकस्य लोहितमुक्तेरश्मगर्भस्य मुसारगल्वस्य । योजन[4]सहस्रं[5] समुच्छ्रयेण पञ्चयोजनशतानि परिणाहेन । तेषां च स्तूपानां विविधां पूजां करिष्यति पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वज[6]पताका[7]वैजयन्तीभिः । ततश्च[8] भूयः परेण परतरेण विंशतेर्बुद्ध[9]कोटी[10]शतसहस्राणामेवंरूपमेव सत्कारं करिष्यति गुरुकारं माननां पूजनामर्चनामपचायनां करिष्यति । पश्चिमे चात्मभावप्रतिलम्भे तमालपत्रचन्दनगन्धो नाम तथागतोऽर्हन्सम्यक्संबुद्धो लोके भविष्यति[11] विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । मनोऽभिरामं च नामास्य[12] तद्बुद्धक्षेत्रं भविष्यति । रतिप्रपूर्णश्च[13] नाम स कल्पो भविष्यति । परिशुद्धं चास्य तद्बुद्धक्षेत्रं भविष्यति समं रमणीयं प्रासादिकं सुदर्शनीयं स्फटिकमयं रत्नवृक्षाभिविचित्रितं मुक्तकुसुमाभिकीर्णं बहुनरदेव[14]प्रतिपूर्णमृषिशतसहस्रनि-

---

1) राध O.

2) राग्य नेषा K

3) कारिष्यति A.

4) B. adds शत.

5) स्र in all MSS.

6) A. W. add घण्ट्य.

7) A. W. add भिरु.

8) All but O. तयो (r. ततो).

9) शतोनां A. Cb. W. शते B. शतिरु K.

10) B. K. add नियुत.

11) लोक उत्पत्स्यते A. B. W.

12) च नाम left out in Cb. K. O. The name of the *kṣetra* in O. is मनापाभिराम्यं.

13) Some MSS. have रतिप्रतिपूर्णा; O. only परिपूर्णा.

14) प्रतिपूर्णा in B. only. O has परिपूर्णा.

10*

षेवितं यदुत[1] श्रावकैश्च बोधिसत्त्वैश्च। चतुर्विंशतिं[2] चास्या[3]न्तरकल्पानायुष्प्रमाणं भविष्यति। चत्वारिंशच्चान्तरकल्पान्सद्धर्मः स्थास्यति। चत्वारिंशद्[4]एवान्तरकल्पान्सद्धर्मप्रतिरूपकः स्थास्यति॥

अथ खलु[5] भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

5 मौद्गल्यगोत्रो मम श्रावको ऽयं ह्यहित्व मानुष्यकमात्मभावम्।
विंशत्सहस्राणि[6] जिनान तायिनामन्या च[7] अष्टौ विरजान द्रक्ष्यति॥ ३० ॥
चरिष्यते तत्र च ब्रह्मचर्यं बौद्धं इमं ज्ञान गवेषमाणः।
सत्कार तेषां द्विपदोत्तमानां विविधं तदा कार्हि विनायकानाम्॥ ३१ ॥
सद्धर्मु[8] तेषां विपुलं प्रणीतं धारेत्व कल्पान सहस्रकोट्यः।
10 पूजां च स्तूपेषु करिष्यते तदा परिनिर्वृतानां सुगतान तेषाम्॥ ३२ ॥
रत्नामयांस्तूप सवैजयन्तान् करिष्यते तेष जिनोत्तमानाम्।
पुष्पेहि गन्धेहि च पूजयन्तो वाद्येहि वा लोकहितानुकम्पिनाम्॥ ३३ ॥
तत्पश्चिमे चैष समुच्छ्रयस्मिन् प्रियदर्शने तत्र मनोज्ञलेत्रे।
भविष्यते लोकहितानुकम्पी तमालपत्रचन्दनगन्धनामा॥ ३४ ॥
15 चतुर्विंशपूर्णान्तरकल्प[9] तस्य ह्यायुष्प्रमाणं सुगतस्य भेष्यति।
प्रकाशयन्तास्यिमं[10] बुद्धनेत्रीं मनुजेषु देवेषु च नित्यकालम्॥ ३५ ॥

---

1) यादृदं Cb. O.
2) ति in all MSS.
3) अस्य left out in A. B. K. W.
4) शद्देवांतर A. B. K. W. शच्चांतर Cb.
5) Left out in K.
6) Thus O.; the others विंशतिस.
7) MSS. अन्यांश्च.
8) र्म B. Cb. W. O.
9) All तुर्विंश, and शति for श A. W.
10) यंतास्मिं सु A. यंतस्मिम B. Cb. यन्तास्मि सु K. यं तस्मिं स W. यन्तस्यिमं O.

बकुश्रावकास्तस्य जिनस्य तत्र कोटीसहस्रा यथ गङ्गवालिकाः ।
षडभिज्ञत्रैविद्यमहर्द्धिकाश्च अभिज्ञप्राप्ताः सुगतस्य शासने ॥ ३६ ॥
(1)अवैवर्तिकाश्च बकुबोधिसत्त्वा आरब्धवीर्याः सत(2) संप्रजानाः ।
अभियुक्तरूपाः सुगतस्य शासने तेषां सहस्राणि बहूनि तत्र ॥ ३७ ॥
परिनिर्वृतस्यापि जिनस्य तस्य सद्धर्मु(3) संस्थास्यति तस्मिं(4) काले ।
विंशाञ्च विंशान्तरकल्प पूर्णा(5) एतत्प्रमाणं प्रतिरूपकस्य(6) ॥ ३८ ॥
महर्द्धिकाः पञ्च मि(7) श्रावका ये निर्दिष्ट ये ते मय(8) अग्रबोधये ।
अनागतेऽध्वानि जिना स्वयंभुवस्तेषां च चर्या(9) शृणुथा ममान्तिकात् ॥ ३९ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये व्याकरणपरिवर्तो नाम षष्ठः ॥

---

1) Better अवि O.

2) स्मृति O. sanskritized from a reading सति, but the word required is सत, Skr. स्मृत. The other MSS. have सद्.

3) र्म B. Cb

4) स्मिं A. K. W. स्मिन् Cb. स्मि B. O.

5) र्णामे A. र्णा B. Cb. र्णाः K. र्णं W. र्णान् O.

6) All but O. कश्च.

7) MSS. but O. मे. The reading in O. is पञ्च मम श्रावका ये.

8) MSS. निर्दृष्टा ये ते मम, but O. has ये चेह निर्दिष्ट मयाग्र°.

9) चर्या A. Cb. K. W. चर्य B. Rather चर्यां.

# VII.

भूतपूर्वं भिक्षवो ऽतीते ऽसंख्येयैः कल्पैरसंख्येयतरैर्विपुलैरप्रमेयैरचिन्त्यैरप-रिमितैरप्रमाणैस्ततः[1] परेण परतरेण[2] यदासीत्तेन कालेन तेन समयेन महाभिज्ञाज्ञानाभि-भूर्नाम[3] तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविद-नुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्संभवायां लोकधातौ 5 महारूपे कल्पे। कियच्चिरोत्पन्नः[4] स भिक्षवस्तथागतो ऽभूत्। तद्यथापि नाम भिक्षवो या-वानिह त्रिसाहस्रमहासाहस्रे[5] लोकधातौ पृथिवीधातुस्तं[6] कश्चिदेव पुरुषः सर्वं[7] चूर्णीकु[8]-र्यान्मषिंकुर्यात्[9]। अथ खलु[10] स पुरुषस्तस्माल्लोकधातोरेकं परमाणुरजो गृहीत्वा[11] पूर्वस्यां दिशि लोकधातुसहस्रमतिक्रम्य तदेकं परमाणुरज उपनिक्षिपेत्। अथ स पुरुषो द्वितीयं च परमाणुरजो गृहीत्वा[11] ततः[12] परेण परतरं लोकधातुसहस्रमतिक्रम्य द्वितीयं परमाणुरज 10 उपनिक्षिपेत्। अनेन पर्यायेण स पुरुषः सर्वावन्तं पृथिवीधातुमुपनिक्षिपेत्पूर्वस्यां दिशि।

1) परि K.
2) तरं Cb.
3) भूतो नाम A भूतोः नाम W
4) केवचिरो O., wholly Prākṛt.
5) स्रायां A. K. W. more usual.
6) स्तां Cb.
7) सर्वाश्च Cb.
8) र्णा B. K. र्णी W.
9) मार्षं A. W मर्सिं K. Our reading is that of O.
10) In A. only.
11) गृह्य Cb. °ज्ञोद्गृहीत O.
12) ग K.

तत्किं मन्यध्वे भिक्षवः शक्यं तेषां[1] लोकधातूनामन्तो वा पर्यन्तो वा गणनयाधिगन्तुम् । त आहुः । नो हीदं भगवन्नो हीदं सुगत । भगवानाह । शक्यं पुनर्भिक्षवस्तेषां[1] लोकधातूनां केनचिद्गणकेन वा गणकमहामात्रेण वा गणनया पर्यन्तो ऽधिगन्तुं येषु[2] वोपनिक्षिप्तानि तानि[3] परमाणुरजांसि येषु[2] वा नोपनिक्षिप्तानि । न त्वेव तेषां कल्पकोटी[4]नयुतशतसहस्राणां शक्यं गणनायोगेन[5] पर्यन्तो ऽधिगन्तुम् । यावन्तः कल्पास्तस्य भगवतो महाभिज्ञा- 5
ज्ञानाभिभुवस्तथागतस्य परिनिर्वृतस्यैतावान्स कालो[6] ऽभूदेवमचिन्त्य[7] एवमप्रमाणः[8] । तं चाहं भिक्षवस्तथागतं तावच्चिरं परिनिर्वृतमनेन तथागतज्ञानदर्शन[9]बलाधानेन यथाद्य श्वो वा परिनिर्वृतमनुस्मरामि ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

अभू अतीता बहु कल्पकोट्यो अनुस्मरामि[10] द्विपदानमुत्तमम्[11] । 10
अभिज्ञज्ञानाभिभुवं महामुनिमभूषि तत्कालमनुत्तमो जिनः ॥ १ ॥
यथा त्रिसाहस्रिम[12] लोकधातुं कश्चिद्रजं कुर्य अणुप्रमाणम् ।
परमाणुमेकं च ततो गृहीत्वा क्षेत्रं सहस्रं[13] गमियान निक्षिपेत् ॥ २ ॥

---

1) तासां Cb.
2) यासु Cb.
3) In B. only.
4) नि A. B. न Cb. K. ट W.
5) गणनया A.
6) ग्रो W.
7) MSS. न्त्यमे.
8) प्रमेयः K. प्रमाणाम् the rest.
9) दर्शन left out in K.
10) मि K. O. The rest मी.
11) मं Cb.
12) मि Cb.
13) स्रां K. W.

[1]द्वितियं तृतीयं पि च एव निक्षिपेत् सर्वं पि सो निक्षिपि तं रजो गतम् ।
रिक्ता भवेत इयं[2] लोकधातुः सर्वश्च सो पांसु भवेत क्षीणः[3] ॥ ३ ॥
यो लोकधातूषु भवेत तासु पांसु रजो[4] यस्य प्रमाणु नास्ति ।
रजं करित्वान अशेषतस्तं लक्षं[5] ददे कल्पशते गते च ॥ ४ ॥
5 एवाप्रमेया बहुकल्पकोट्यः परिनिर्वृतस्य सुगतस्य तस्य ।
परमाणु सर्वे[6] न भवन्ति लक्ष्यास्तावद्बहु[7] क्षीण भवन्ति कल्पाः[8] ॥ ५ ॥
तावच्चिरं निर्वृतु तं विनायकं ताश्श्रावकांस्तांश्च पि बोधिसत्त्वान् ।
एतादृशं ज्ञानु तथागतानां स्मरामि सर्वाण्यथ यश्च यो वा ॥ ६ ॥
एतादृशं भिक्षव ज्ञानमेतदनन्तज्ञानस्य[9] तथागतस्य ।
10 बुद्धं मया कल्पशतैरनेकैः स्मृतीय सूक्ष्माय अनास्रवाय ॥ ७ ॥

तस्य खलु पुनर्भिक्षवो महाभिज्ञाज्ञानाभिभुवस्तथागतस्यार्हतः सम्यक्संबुद्धस्य चतुष्पञ्चाशत्[10]कल्पकोटीनयुत[11]शतसहस्राण्यायुष्प्रमाणमभूत् ॥

पूर्वं[12] च स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो ऽनभिसंबुद्धो ऽनुत्तरां सम्यक्संबो-

---

1) This quarter is left out in A. MSS. द्वितीयं.

2) इदं B.

3) णां A. W. णाः B. Cb. णः K.

4) रजं O. conform to the dialect of the verse.

5) क्षं A. B. Cb. क्षयन् K. क्षये W. क्षयं O. and स्मिन् for च. Perhaps the original reading was गतेहि.

6) णा in all MSS.

7) MSS. लक्षा.

8) This quarter is left out in Cb.

9) तद्द तमनन्त K.

10) चतुष्पंचा A. W. चतुः B. Cb.

11) नि A. B. न Cb. K. O.

12) पूर्वं च in Cb. O. only.

र्धिं[1] बोधिमण्डवराग्रगत एवं[2] सर्वां[3] मारसेनां प्राभञ्जीत्पराजैषीत्प्रभञ्जयित्वा पराजयित्वानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यामीति । न च तावत्तस्य ते धर्मा आमुखीभवन्ति[4] स्म । स बोधिवृक्षमूले बोधिमण्ड एकमन्तरकल्पमस्थात् । द्वितीयमप्यन्तरकल्पमस्थान्न च तावदनुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तृतीयमपि[5] चतुर्थमपि[6] पञ्चममपि षष्ठमपि सप्तममप्यष्टममपि नवममपि दशममप्यन्तरकल्पं बोधिवृक्षमूले बोधिमण्डे ऽस्थात्सकृदु- 5
र्तेनेन पर्यङ्केनान्तरादव्युत्थितः । अनिञ्जमानेन चित्तेनाचलमानेनावेपमानेन[7] कायेनास्थान्न च तावदस्य ते धर्मा आमुखीभवन्ति[8] स्म ॥

तस्य खलु पुनर्भिक्षवो भगवतो[9] बोधिमण्डवराग्रगतस्य[9] देवैस्त्रायस्त्रिंशैर्महासिंहासनं प्रज्ञप्तमभूद्योजनशतसहस्रसमुच्छ्रयेण यत्र स भगवान्निषण्णानुत्तरां सम्यक्संबोधिमभिसंबुद्धः । समनन्तरनिषण्णस्य च खलु पुनस्तस्य भगवतो बोधिमण्डे[10] अथ ब्रह्मकायिका 10
देवपुत्रा दिव्यं पुष्पवर्षमभिप्रवर्षयामासुर्बोधिमण्डस्य[11] परिसामन्तकेन योजनशतमन्तरिक्षे[12] च वातान्प्रमुञ्चन्ति ये तं[13] जीर्णपुष्पमवकर्षयन्ति । यथाप्रवर्षितं च तत्पुष्पवर्षं तस्य भगवतो बोधिमण्डे निषण्णस्याव्युच्छिन्नं प्रवर्षयन्ति परिपूर्णान्दशान्तरकल्पांस्तं[14] भगवन्तम

1) A. W. add अभिसंबोद्धुं.
2) गतमेवं A. W. गत एवं B. गतमेव Cb. गत एव K. त एव O.
3) All but O. add च.
4) आमुखी K. अभिमुखी the rest.
5) A. K. W. add का.
6) B. K. add क.
7) वेध O., certainly more original.
8) आभि A.
9) In Cb. O. only.
10) बोधिवृक्षमूले O.
11) एडे W. All but Cb. O. add निषण्ण.
12) शतयोजनसमंतरिक्षे न A.
13) A. grammatical error for the neuter form.
14) From तं till दशान्तकल्पान् left out in A.

ऽभ्यवाकिरन्ति स्म[1]। तथा प्रवर्षितं च तत्पुष्पवर्षं प्रवर्षयन्ति[2] यावत्परिनिर्वाणकालसमये
तस्य[3] भगवतस्तं भगवन्तमभ्यवकिरन्ति[4]। चातुर्महाराजकायिकाश्च देवपुत्रा दिव्यां देव-
दुन्दुभिमभिप्रवादयामासुस्तस्य भगवतो बोधिमण्डवराग्रगतस्य[5] सत्कारार्थमव्युच्छिन्नं
प्रवादयामासुः। परिपूर्णान्दशान्तरकल्पांस्तस्य भगवतो निषण्णस्य तत उत्तरि तानि
5 दिव्यानि तूर्याणि सततसमितं प्रवादयामासुर्यावत्तस्य भगवतो महापरिनिर्वाणकाल-
समयात्[6]॥

अथ खलु भिक्षवो दशानामन्तरकल्पानामत्ययेन स[7] भगवान्महाभिज्ञाज्ञानाभिभूस्त-
थागतोऽर्हन्सम्यक्संबुद्धोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। समनन्तराभिसंबुद्धं च[8] तं
विदित्वा ये तस्य भगवतः कुमारभूतस्य षोडश पुत्रा अभूवन्वीरमा ज्ञानाकरो नाम तेषां
10 ज्येष्ठोऽभूत्। तेषां च खलु पुनर्भिक्षवः षोडशानां राजकुमाराणामेकैकस्य च विविधानि
क्रीडनकानि रामणीयकान्यभूवन्विविधचित्राणि दर्शनीयानि। अथ खलु भिक्षवस्ते षोडश
राजकुमारास्तानि विविधानि क्रीडनकानि रामणीयकानि विसर्जयित्वा तं भगवन्तं महा-
भिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धमनुत्तरां सम्यक्संबोधिमभिसंबुद्धं[9] विदित्वा
मातृभिर्धातृभिश्च रुदन्तीभिः[10] परिवृताः पुरस्कृतास्तेन च महाराज्ञा चक्रवर्तिनार्यकेण
15 महाकोशेन राजामात्यैश्च बन्धुभिश्च प्राणिकोटीनयुतशतसहस्रैः[11] परिवृताः पुरस्कृता येन

---

1) Left out in B. K. W.

2) Left out in O. The others प्रवर्षन्ति.

3) यस्त B. येस्तस्य Cb. यस्तस्य K. W.

4) B. W. add स्म.

5) प्राप्त W. मण्डनिषण्णस्य O.

6) समयात् B. Cb. K. समयेभूत् O. समये A. Ca. W.

7) In B. K.

8) द्ध तं च A. द्धश्च तं B. द्धश्च तं Cb. W. द्धं च तं K.

9) इति added except in B. K. The whole passage after विसर्जयित्वा and before मातृ° left out in O.

10) Ungrammatical for रुदतीभिः. The reading in O. is रोदमानेभिश्च!

11) नि A. B. K. न Cb. W. O.

भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो ऽर्हन्सम्यक्संबुद्धो बोधिमण्डवरा[1]ग्रगतस्तेनोपसं-
क्रामन्ति स्म । तस्य भगवतः सत्कारार्थाय गुरुकारार्थाय माननार्थाय पूजनार्थायार्चनार्था-
यापचायनार्थायोपसंक्रान्ता उपसंक्रम्य तस्य भगवतः पादौ शिरोभिर्वन्दित्वा[2] तं भगवन्तं
त्रिष्प्रदक्षिणीकृत्याञ्जलिं[3] प्रगृह्य तं भगवन्तं संमुखाभिर्गाथाभिः सारूप्याभिरभिष्टुव-
न्ति स्म ॥

महाभिषक्को ऽसि अनुत्तरो ऽसि अनन्तकल्पैः समुदागतो ऽसि ।
उत्तारणार्थायिह सर्वदेहिनां परिपूर्ण संकल्पु[4] अयं ति भद्रकः ॥ ८ ॥
सुदुष्करा अन्तरकल्पिमे[5] दश कृता ते[6] एकासनि संनिषद्य ।
न च ते ऽन्तरा[7] कायु कदाचि चालितो न हस्तपादं न पि चान्यदङ्गम्[8] ॥ ९ ॥
चित्तं पि ते शान्तगतं[9] सुसंस्थितमनिञ्ज्यभूतं सद अप्रकम्प्यम् । 10
विक्षेपु नैवास्ति कदाचित्तत्र[10] अत्यन्तशान्तस्थितु त्वं अनास्रवः ॥ १० ॥
दिष्ट्यासि[11] क्षेमेण च स्वस्तिना च अविहेठितः प्राप्त इमाग्र[12]बोधिम् ।
अस्माकमृद्धी इयमेवरूपा दिष्ट्या च वर्धाम[13] नरेन्द्रसिंह ॥ ११ ॥

1) ह्गत O.
2) शिरसा वं B. K.
3) MSS. ल्लीं.
4) ल्पु A. ल्प B. Cb. K. W.
5) All but O. मा.
6) स्ति A. W. स्त Ca. Cb. B. K. नि O.
7) न चास्ते O. न च ते ऽन्तरान्का° the others.
8) देशतः K. the others देशम्; but O. has ग्रीवा! Our reading conjectural.
9) शान्ति O.
10) तत्र is here impossible; O. has तुभ्यम्. The original text must have had तुह्य or a similar Prākṛt form.
11) दृष्ट्वा च A. B. K. W. दिष्टास्व Cb.
12) Thus O.; मिममग्र the rest.
13) दृष्ट्वा च वर्द्धाय A. B. W. दृष्ट्वा मदीम Cb. दृष्ट्वा च वर्द्धामि K. दृष्ट्वा च वन्दाम O. All wrong.

अनापिकेयं प्रज सर्वदुःखिता उत्पादितानी व निहीनसौख्या ।
मार्गं न जानन्ति दुखान्तगामिनं न मोतहेतोर्जनयन्ति वीर्यम् ॥ १२ ॥
अपाय वर्धन्ति च दीर्घरात्रं दिव्याश्च कायाः[1] परिहाणधर्माः[2] ।
न श्रूयते जातु जिनान शब्दस्तमोऽन्धकारो अयु सर्वलोकः[3] ॥ १३ ॥
5 प्राप्तं च ते लोकविदू इहाद्य शिवं पदं उत्तमनास्रवं[4] च ।
वयं च लोकश्च[5] अनुगृहीताः[6] शरणं च त्वा एति[7] व्रजाम नाथ ॥ १४ ॥

अथ खलु भिक्षवस्ते षोडश राजकुमाराः कुमारभूता एव बालकास्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धमाभिः सारूप्याभिर्गाथाभिः संमुखमभिष्टुत्य तं भगवन्तमध्येषन्ते स्म । धर्मचक्रप्रवर्तनतायै[8] देशयतु भगवान्धर्मं देशयतु सुगतो धर्मं 10 बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । तस्यां च वेलायामिमा गाथा अभाषन्त[9] ॥

[10]देशेहि धर्मं शतपुण्यलक्षणा[11] विनायका अप्रतिमा महर्षे[12] ।
लब्धं ति[13] ज्ञानं प्रवरं विशिष्टं प्रकाशया[14] लोकि सदेवकस्मिन् ॥ १५ ॥

---

1) दिव्यां च कायां A. दिव्याश्च कायाः B. K. O. दिव्यां च कायाः Cb. W.
2) हाणि K. which seems preferable. परिहायिषु सदा O.
3) के A. B. W.
4) मा B.
5) का K.
6) ताः K.
7) एभि व्र Cb. एति व्र O. एत व्र the rest.
8) र्तनाय O.
9) षते स्म A. W. षन्ते स्म B. K. षत Cb. षुः O.
10) A. B. K. W. add देशेहि धर्मं द्विपदानमुत्तमा.
11) णा W.
12) र्षे O. र्षी the rest.
13) लब्धं ति B. Cb. K. O. लब्धान्त other MSS.
14) य O. The lengthening unnecessary. The same applies to प्रवर्तया vs

अस्मांश्च तारेहि इमांश्च सत्त्वान्निदर्शय ज्ञानु तथागतानाम्।
यथा वयं पि[1] इममग्रबोधिं अनुप्राप्नुयामो ऽथ[2] इमे च सत्त्वाः॥ १६॥
चर्या च ज्ञानं पि च सर्व जानसि अध्याशयं पूर्वकृतं च पुण्यम्।
अधिमुक्ति जानासि च सर्वप्राणिनां प्रवर्तया चक्रवरं अनुत्तरम्[3] इति॥ १७॥

तेन खलु पुनर्भिक्षवः समयेन तेन[4] भगवता महाभिज्ञाज्ञानाभिभुवा तथागतेनार्हता 5
सम्यक्संबुद्धेनानुत्तरां सम्यक्संबोधिमभिसंबुध्यमानेन[5] दशसु दिक्ष्वेकैकस्यां दिशि पञ्चा-
शल्लोकधातुकोटीनियुत[6]शतसहस्राणि षड्विकारं प्रकम्पितान्यभूवन्महता चावभासेन स्फु-
टान्यभूवन्। सर्वेषु च तेषु लोकधातुषु या लोकान्तरिका[7]स्तासु य[8] अक्षणाः संवृता[9] अन्ध-
कारतमिस्रा यत्रेमावपि चन्द्रसूर्यावेवं महर्द्धिकावेवं महानुभावावेवं महौजस्कावाभया-
ऽऽभां नानुभवतो वर्णेनापि वर्णं तेजसापि तेजो नानुभवतः[10]। तास्वपि तस्मिन्समये महतो 10
ऽवभासस्य[11] प्रादुर्भावो ऽभूत्। ये ऽपि तासु लोकान्तरिकासु सत्त्वा उपपन्नास्ते ऽप्यन्योन्यमेवं
पश्यन्त्यन्योन्यमेवं संजानन्ति। अन्ये ऽपि बत भोः सत्त्वाः सन्तीहोपपन्नाः। अन्ये ऽपि बत
भोः सत्त्वाः सन्तीहोपपन्ना[12] इति। सर्वेषु च तेषु लोकधातुषु यानि देवभवनानि देवविमानानि

---

1) Thus O.; पी the rest.

2) पुनेयाम इमे O. The original text must have had अनुपापुनेयाम इमे.

3) रं न्त्य O. रम the rest. Both wrong.

4) In B. Cb. O. only.

5) बुद्धेन B. बुध्यता Cb.

6) नि A. B. K. न Cb. W. O.

7) Var l. कोन्तरि.

8) This ought to be ये ऽत्र.

9) A. W. add अंधकारा; O. has संवृत्ता. The whole passage has been adulterated by the scribes. Cp. Mahâvastu I, 41 and Burnouf, Lotus, Append. XVI.

10) त O. तौ the rest.

11) B. K. add लोके.

12) W. does not repeat this passage.

च यावद्ब्रह्मलोकात्षड्विकारं प्रकम्पितान्यभूवन्महता[1] चावभासेन स्फुटान्यभूवन्नतिक्रम्य देवानां देवानुभावम्। इति हि भिक्षवस्तस्मिन्समये तेषु लोकधातुषु महतः[2] पृथिवीचालस्य महतश्चोदारिकस्यावभासस्य लोके[3] प्रादुर्भावो ऽभूत्॥

अथ पूर्वस्यां दिशि तेषु पञ्चाशत्सु लोकधातुकोटीनि[4]युतशतसहस्रेषु यानि ब्राह्माणि
5 विमानानि तान्यतीव भ्राजन्ति[5] तपन्ति विराजन्ति[5] श्रीमन्त्योजस्वीनि च। अथ खलु भिक्षवस्तेषां महाब्रह्मणामेतदभवत्[6]। इमानि खलु पुनर्ब्राह्माणि विमानान्यतीव भ्राजन्ति तपन्ति विराजन्ति श्रीमन्त्योजस्वीनि च। कस्य खल्विदं पूर्वनिमित्तं भविष्यतीति। अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणस्ते[7] सर्वे ऽन्यो-
[8]न्यभवनानि गत्वारोचयामासुः। अथ खलु भिक्षवः[9] सर्वसत्त्वत्राता नाम महाब्रह्मा तं महान्तं
10 ब्रह्मगणं गाथाभिरध्यभाषत॥

अतीव नो हर्षित अद्य सर्वे विमानश्रेष्ठा इमि प्रज्वलन्ति।
श्रिया द्युतीया च मनोरमा ये किंकारणं ईदृशु भेष्यते ऽद्य॥ १८॥
साधु गवेषामथ एतमर्थं को देवपुत्रो उपपन्नु अद्य।
यस्यानुभावो अयमेवरूपो अभूतपूर्वो अद्यमद्य दृश्यते॥ १९॥

---

1) चा left out in K. O.

2) तश्च Cb. K.

3) Left out in Cb.

4) न W. O. नि the rest.

5) न्ते K. विरोचन्ति O. for विराजन्ति throughout the whole chapter.

6) All but O. ब्राह्मणानाम्.

7) Here too and in the sequel all but O. ब्राह्मणा for ब्रह्माणा.

8) न्यं A. B. Cb. K. न्य W.

9) A. B. K. W. add तेषु पञ्चाशत्सु लोकधातुकोटीनियुतशतसहस्रेषु; Cb. leaves out the whole.

यदि वा भवेद्बुद्ध नरेन्द्रराजा उत्पन्नु लोकस्मिं[1] कर्हिचिद्य।
यस्यो[2] निमित्तं इममेवरूपं श्रिया दृशो[3] दिशु ज्वलन्ति सर्वे[4] ॥ २० ॥

अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणस्ते सर्वे सहिताः समग्रास्तानि दिव्यानि स्वानि स्वानि ब्राह्माणि विमानान्यभिरुह्य दिव्यांश्च सुमेरुमात्रान्पुष्पपुटान्गृहीत्वा चतसृषु दिक्ष्वनुचङ्क्रमन्तो[5] ऽनुविचरन्तः पश्चिमं दिग्भागं प्रक्रान्ताः। अद्राक्षुः खलु पुनस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु भिक्षवस्ते महाब्रह्माणः पश्चिमे दिग्भागे तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं बोधिमण्डवराग्रगतं बोधिवृक्षमूले सिंहासनोपविष्टं परिवृतं पुरस्कृतं देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यैस्तैश्च पुत्रैः षोडशभी राजकुमारैरध्येष्यमाणं धर्मचक्रप्रवर्तनतायै[6]। दृष्ट्वा च पुनर्येन[7] स भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य तस्य[8] भगवतः पादौ शिरोभिर्वन्दित्वा[9] तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तैश्च सुमेरुमात्रैः पुष्पपुटैस्तं भगवन्तमभ्यवकिरन्ति स्माभिप्रकिरन्ति स्म तं च बोधिवृक्षं दशयोजनप्रमाणम्। अभ्यवकीर्य[10] तानि ब्राह्माणि विमानानि तस्य[11] भगवतो निर्यातयामासुः।

---

1) स्मिं K.

2) स्यो B. K. W. स्या A. स्मिन् Cb.

3) शो B. Cb. K. शा A. W.

4) Thus O. Other MSS. seem to have मेघ. The Locat. दिशु is unexplainable. The *pāda* apparently corrupt; perhaps to r. दृशो (or दृशा or दृशाद्) दिशा अस्य श्रिया ज्वलन्ति.

5) क्रम्यमाणा B. K. The words between °न्ता and प° wanting in O.

6) नतायै A. W. नाय B. K. O. नायै Cb.

7) Left out in Cb. K.

8) तस्य in K. only.

9) शिरसाभिवन्दित्वा B. K.

10) किरित्वा O.

11) All but O. तस्यैव.

परिगृह्णातु भगवानिमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय । परिभुञ्जतु सुगत इमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय ॥

अथ खलु भिक्षवस्ते महाब्रह्माणास्तानि स्वानि स्वानि विमानानि तस्य भगवतो निर्यात्य तस्यां वेलायां तं[5] भगवन्तं संमुखमाभिर्गाथाभिः सारूप्याभिरभिष्टुवन्ति स्म ॥

5 आश्चर्यभूतो[1] जिन अप्रमेयो उत्पन्न लोकस्मि[2] हितानुकम्पो ।
नाथो ऽसि शास्तासि गुरू सि[2] जातो अनुग्रहीता[3] दशिमा[4] दिशो ऽद्य ॥ २१ ॥
पञ्चाशती कोटिसहस्रपूर्णा या लोकधातून इतो भवन्ति ।
यतो वयं वन्दन आगता जिनं विमानश्रेष्ठान्प्रजहित्व सर्वशः ॥ २२ ॥
पूर्वेण कर्मेण कृतेन अस्मिन्विचित्रचित्रा हि इमे विमानाः ।
10 प्रतिगृह्य अस्माकमनुग्रहार्थं परिभुञ्जतां लोकविदू यथेष्टम् ॥ २३ ।

अथ खलु भिक्षवस्ते महाब्रह्माणास्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य[5] तं भगवन्तमेतदूचुः । प्रवर्तयतु भगवान्धर्मचक्रं[6] प्रवर्तयतु सुगतो धर्मचक्रं लोके देशयतु भगवान्निर्वृतिं तारयतु भगवान्सत्त्वाननुगृह्णातु[7] भगवानिमं लोकं देशयतु भगवान्धर्मस्वामी[8] धर्ममस्य सदेवकस्य लोकस्य
15 समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः सदेवमानुषासुरायाः । तद्भविष्य-

---

5) In K. O. only. In O. added समसंगीत्या एकस्वरेण.

1) यादृत A.

2) स्मिं A. All but O. के for क.

2) गुरुरसि A. गुरू सि B. गुरु सि Cb. K. W.

3) ता A. Cb. W. All but O. अनुगृ; original Prākṛt अनुगग.

4) श K.

5) भिस्तविता Cb. O.

6) This passage is left out in Cb. O.

7) All but O. ह्रीष.

8) Left out in Cb. O.

ति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥

अथ खलु भिक्षवस्तानि पञ्चाशद्ब्रह्मकोटीनयुत[1]शतसहस्राण्येकस्वरेण समसंगीत्या[2] तं[3] भगवन्तमाभिः सारूप्याभिर्गाथाभिरध्यभाषन्त[4] ॥

देशेहि भगवन्धर्मं देशेहि द्विपदोत्तम ।
मैत्रीबलं च देशेहि[5] सत्त्वांस्तारेहि दुःखितान् ॥ २४ ॥ 5
दुर्लभो लोकप्रद्योतः पुष्पमौदुम्बरं यथा ।
उत्पन्नो ऽसि महावीर अध्येषामस्तथागतम्[6] ॥ २५ ॥

अथ खलु भिक्षवः स भगवांस्तेषां महाब्रह्मणां तूष्णीभावेनाधिवासयति स्म ॥

तेन खलु पुनर्भिक्षवः समयेन पूर्वदक्षिणे दिग्भागे तेषु पञ्चाशत्सु लोकधातुकोटी- 10
[7]नयुतशतसहस्रेषु यानि ब्राह्माणि विमानानि तान्यतीव भासन्ति तपन्ति विराजन्ति श्रीमन्त्योजस्वीनि च । अथ खलु भिक्षवस्तेषां ब्रह्मणामेतदभवत् । इमानि खलु पुनर्ब्राह्माणि विमानान्यतीव भासन्ति तपन्ति विराजन्ति श्रीमन्त्योजस्वीनि च । कस्य खल्विदं पूर्वनिमित्तं भविष्यतीति । अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणस्ते ऽपि सर्वे ऽन्योन्यभवनानि गत्वारोचयामासुः । अथ खलु भिक्षवो ऽधिमा- 15
त्रकारुणिको नाम महाब्रह्मा तं महान्तं ब्रह्मगणं गाथाभिरध्यभाषत ॥

---

1) नियुत in A. B. Ca. W.

2) All but O. समसंगीत्य.

3) In K. only.

4) Instead of आभिः etc. O. has गीतेन धर्मचक्रप्रवर्तनाये अध्येषिसुः ॥

5) दर्शेहि O.

6) This verse is wanting in the Chinese versions.

7) नि in all but Cb. O.

कस्य पूर्वनिमित्तेन मारिषा[1] अद्य दृश्यते।
विमानाः सर्वि[2] भासन्ति अधिमात्रं यशस्विनः॥ २६॥
यदि वा देवपुत्रो ऽद्य पुण्यवन्त[3] इहागतः[4]।
यस्येमे[5] अनुभावेन विमानाः सर्वि शोभिताः॥ २७॥
5 अथ वा बुद्ध[6] लोके ऽस्मिन्नुत्पन्नो द्विपदोत्तमः।
अनुभावेन यस्याद्य विमाना इमि[7] ईदृशाः॥ २८॥
सहिताः सर्वि मार्गामो नैतत्कारणमल्पकम्।
न खल्वेतादृशं पूर्वं निमित्तं जातु दृश्यते[8]॥ २९॥
चतुर्दिशं प्रपद्यामो अन्वामः[9] नेत्रकोटियो[10]।
10 व्यक्तं लोके ऽद्य बुद्धस्य प्रादुर्भावो भविष्यति॥ ३०॥

अथ खलु भिक्षवस्तान्यपि पञ्चाशद्ब्रह्मकोटीनयुतशतसहस्राणि तानि स्वानि स्वानि दिव्यानि ब्राह्माणि विमानान्यभिरुह्य दिव्यांश्च सुमेरुमात्रान्पुष्पपुटान्गृहीत्वा चतसृषु दिक्ष्वनुचङ्क्रमन्तो[11] ऽनुविचरन्त उत्तरपश्चिमं दिग्भागं प्रक्रान्ताः। अद्राक्षुः[12] खलु पुनर्भिक्षवस्ते महाब्रह्माण उत्तरपश्चिमे दिग्भागे तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथा-

---

1) All but O. मार्षा.
2) र्वे K. र्वि O. र्व the rest.
3) न्तो Cb. K.
4) महागणाः Cb.
5) Thus O. यस्यमे the others.
6) द्धो A. W.
7) ति A. O. म K. मि Cb. W.
8) All but O. दृष्टमभूत्.
9) अन्वाम A. W. अन्वमः B. अन्वामो Cb. अन्वामः K. अपवामः O.
10) या A. Cb. याः B. यो: K. यो W. टया O.
11) चंक्रम्यमामाणा K.
12) Cb. adds अथ O. ददृशुश्च, omitting खलु पुनर्.

गतमर्हन्तं सम्यक्संबुद्धं बोधिमण्डवराग्रगतं बोधिवृक्षमूले सिंहासनोपविष्टं परिवृतं पुरस्कृतं देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यैस्तैश्च पुत्रैः षोडशभी रा-जकुमारैरध्येष्यमाणं धर्मचक्रप्रवर्तनतायै[1]। दृष्ट्वा च पुनर्येन स[2] भगवान्महाभिज्ञाज्ञानाभि-भूस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेनोपसंक्रान्ता[3] उपसंक्रम्य च तस्य[4] भगवतः पादौ शिरो-भिर्वन्दित्वा तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तैः सुमेरुमात्रैः पुष्पपुटैस्तं भग- 5 वन्तमभ्यवकिरन्ति स्माभिप्रकिरन्ति स्म तं च बोधिवृक्षं दशयोजनप्रमाणम्। अभ्यवकीर्य तानि ब्राह्माणि विमानानि तस्य भगवतो[5] निर्यातयामासुः। परिगृह्णातु भगवानिमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय। परिभुङ्क्तु सुगत इमानि ब्राह्माणि विमा-नान्यस्माकमनुकम्पामुपादाय ॥

अथ खलु भिक्षवस्ते महाब्रह्माणस्तानि स्वानि स्वानि विमानानि तस्य भगवतो 10 निर्यात्य तस्यां वेलायां तं[6] भगवन्तं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुवन्ति स्म ॥

नमो ऽस्तु ते[7] अप्रतिमा[8] महर्षे देवातिदेवा कलविङ्कसुस्वरा[9]।

विनायका लोकि सदेवकस्मिन्वन्दामि ते लोकहितानुकम्पो[10] ॥ ३१ ॥

आश्चर्यभूतो ऽसि कथंचिल्लोके उत्पन्नु अद्यो[11] सुचिरेण नाथ।

कल्पान पूर्णा शत शून्य[12] आसीदशीति बुद्धेरण जीवलोकः ॥ ३२ ॥ 15

---

1) वर्तनाय B. K. O.

2) स in A. W. only.

3) From महा till बुद्ध left out in Cb.

4) च तस्य left out in B. Cb.

5) तस्मै भगवते K. The other MSS. but O. तस्यैव.

6) तस्मै भगवते निर्यात्यन्तम् K.

7) Left out in K.

8) मो Cb. K. मं O.

9) रुत (for सु) A. W.

10) कंपक A. B. K. W. कंपो Cb. कम्पकः O. Rather कम्पिन्.

11) अद्य O. The lengthening unnecessary.

12) All but O. अद्य.

शून्यश्च ग्रामोद्भिपदोत्तमेहि[1] ग्रपायभूमी तद उत्सदासि[2] ।
दिव्याश्च कायाः परिहायिषू[3] तदा ग्रशीति कल्पान शता सुपूर्णा[4] ॥ ३३ ॥
सो दानि चतुश्च गतिश्च लेनं त्राणं पिता च तथ बन्धुभूतः ।
उत्पन्नु लोकस्मि[5] हितानुकम्पी ग्रस्माक पुण्यैरिह धर्मराजा ॥ ३४ ॥

5 ग्रथ खलु भिक्षवस्ते महाब्रह्माणस्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य तं भगवन्तमेतदूचुः । प्रवर्तयतु भगवान्धर्मचक्रं प्रवर्तयतु सुगतो धर्मचक्रं लोके देशयतु भगवान्निर्वृतिं तारयतु भगवान्सत्त्वाननुगृह्णातु[6] भगवानिमं लोकं देशयतु भगवान्धर्ममस्य सदेवकस्य लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः सदेवमानुषासुरायाः । तद्भविष्यति बहुजन-
10 हिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥

ग्रथ खलु भिक्षवस्तानि पञ्चाशद्ब्रह्मकोटीनयुतशतसहस्राण्येकस्वरेण समसंगीत्या[7] तं भगवन्तमाभ्यां सारूप्याभ्यां गाथाभ्यामध्यभाषन्त[8] ॥

प्रवर्तय चक्रवरं महामुने प्रकाशय धर्मु दशादिशासु ।
15 तारेहि सत्त्वान्दुखधर्मपीडितान् प्रामोद्यहर्षं जनयस्व देहिनाम् ॥ ३५ ॥

---

1) शून्यं च लोको O.; r. शून्ये च लोके.

2) सि सद O. सीस्तद the rest.

3) हायष्ट A. W. हायिषू B. हायिषु O हायसू Cb. K.

4) पु A. B. K. W. स Cb.

5) भूते A. W. The others but O. लोके.

6) MSS. ह्णोष; the passage wanting in O.

7) All but O. संम संगीत्य.

8) माभिः गाथाभिरध्यभषंते स्म A. W. सारूप्याभिर् is added in Cb. माभ्यां गाथाभ्यामध्यभाषन्ते स्म B. K. Differently in O. भगवन्तं गाथाभिर्गीतेन धर्मचक्रप्रवर्तनायाध्येषिष ॥

यं श्रुत्व बोधीय[1] भवेयु[2] लाभिनो दिव्यानि स्थानानि नरेषु चापि ।
क्षायेषु[3] च आतुरकाय सर्वे शान्ताश्च दान्ताश्च सुखीभवेयुः[4] ॥ ३६ ॥

अथ खलु भिक्षवः स भगवांस्तेषामपि महाब्रह्मणां तूष्णीभावेनाधिवासयति स्म ॥

तेन खलु पुनर्भिक्षवः समयेन दक्षिणस्यां दिशि तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु यानि ब्राह्माणि विमानानि तान्यतीव भासन्ति तपन्ति विराजन्ति ओमन्त्योजस्वीनि च । अथ खलु भिक्षवस्तेषां महाब्रह्मणामेतदभवत्[5] । इमानि खलु पुनर्ब्राह्माणि विमानान्यतीव भासन्ति तपन्ति विराजन्ति ओमन्त्योजस्वीनि च । कस्य खल्विदमेवंरूपं पूर्वनिमित्तं भविष्यति । अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणस्ते सर्वे ऽन्योन्यभवनानि[6] गत्वारोचयामासुः । अथ खलु भिक्षवः सुधर्मा नाम महाब्रह्मा[7] तं महान्तं ब्रह्मगणं गाथाभ्यामध्यभाषत[8] ॥

नाहेतु नाकारणमद्य मार्षाः सर्वे विमाना इह प्रज्वलन्ति ।
निमित्तं दर्शेन्ति ह किम्पि[9] लोके साधु गवेषाम तमेतमर्थम्[10] ॥ ३७ ॥
अनून[11] कल्पान शत व्यतीता[12] नैतादृशं जातु निमित्तमासीत् ।
यदि वोपपन्नो इह देवपुत्रो उत्पन्नु लोके यदि वेह बुद्धः ॥ ३८ ॥

---

1) All बोधाय.

2) म A. B. Cb. W. यु K. O.

3) त्यन्नेय A. B. W. त्यन्नेषु K. आयेषु Cb. O. क्षायेषु O.

4) मः A. W. म B. युः Cb. O. यु K.

5) भूत् A. वोचत् B. W. Quite different and more prolix in O.

6) न्यन्यं A. B. W. न्यन्य Cb. न्यन्यस्तम्भव K.

7) ब्राह्मणास्तं Cb.

8) गाथाभिरध्य Cb

9) Thus O. किमस्मि A. कमस्मि B किं कंपि Cb. किं कास्मि K. किमस्मिं W.

10) मथ एतद् O. preferable reading मथ एतम.

11) अनून Cb. K. बहूनि O. The others अनन्त.

12) शतान्यतीतान्ये O. शतं व्यतीतं the others. Our reading conjectural शतान्यतीता would do as well.

अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणस्ते[1] सर्वे सहिताः समग्रास्तानि दिव्यानि स्वानि स्वानि ब्राह्माणि विमानान्यभिरुह्य दिव्यांश्च सुमेरुमात्रान्पुष्पपुटान्गृहीत्वा चतसृषु दिक्ष्वनुचङ्क्रमन्तो ऽनुविचरन्त उत्तरं दिग्भागं प्रक्रान्ताः । अद्राक्षुः[2] खलु पुनर्भिक्षवस्ते महाब्रह्माण उत्तरे दिग्भागे तं भगवन्तं
5 महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं बोधिमण्डवराग्रगतं बोधिवृक्षमूले सिंहासनोपविष्टं परिवृतं पुरस्कृतं देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यैस्तैश्च पुत्रैः षोडशभी राजकुमारैरध्येष्यमाणं धर्मचक्र[3]प्रवर्तनतायै[4] । दृष्ट्वा च पुनर्येन स भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य तस्य भगवतः पादौ शिरोभिर्वन्दित्वा[5] तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तैः सुमेरुमात्रैः पुष्पपुटैस्तं भगवन्तमभ्यवकिरन्ति स्माभि-
10 प्रकिरन्ति स्म तं च बोधिवृक्षं दशयोजनप्रमाणम् । अभ्यवकीर्य तानि ब्राह्माणि दिव्यानि विमानानि तस्य भगवतो[6] निर्यातयामासुः । परिगृह्णातु भगवानिमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय । परिभुङ्क्तु सुगत इमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय ॥

अथ खलु भिक्षवस्ते ऽपि[7] महाब्रह्माणस्तानि स्वानि स्वानि विमानानि तस्य
15 भगवतो[8] निर्यात्य तस्यां वेलायां तं भगवन्तं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुवन्ति स्म ॥

---

1) ब्रह्माणस्ते K.

2) A. B. W. add अथ; ददृशुश्च O. omitting खलु पुनर्.

3) महा added in some MSS.

4) नाय K. O.

5) शिरसाभिवन्दित्वा K.

6) तस्मै भगवते B. K. The other MSS. but O. तस्यैव.

7) In Cb. only.

8) तस्मै भगवते B. K. The others as above.

सुदुर्लभं दर्शन[1] नायकानां स्वभ्यागतं ते भवरागमर्दन[2]।
सुचिरस्य ते दर्शनमद्य लोके परिपूर्णकल्पान शतेभि[3] दृश्यसे[4]॥ ३९॥
तृषितां प्रजां तर्पय लोकनाथ अदृष्टपूर्वो ऽसि कथंचि दृश्यसे।
औदुम्बरं पुष्प यथैव दुर्लभं तथैव दृष्टो ऽसि कथंचि नायक॥ ४०॥
विमान अस्माकमिमा[5] विनायक तवानुभावेन विशोभिताद्य। 5
परिगृह्य एतानि समन्तचक्षुः परिभुङ्क्ष चास्माकमनुग्रहार्थम्॥ ४१॥

अथ खलु भिक्षवस्ते महाब्रह्माणस्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यकसंबुद्धं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य तं भगवन्तमेतदूचुः। प्रवर्तयतु भगवान्धर्मचक्रं लोके देशयतु भगवान्निर्वृतिं तारयतु भगवान्सत्त्वाननुगृह्णातु भगवा[6]निमं लोकं देशयतु भगवान्धर्ममस्य सदेवकस्य लोकस्य[7] समारकस्य सब्रह्मकस्य सश्रमणब्राह्म- 10
णिकायाः प्रजायाः सदेवमानुषासुरायाः। तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च॥

अथ खलु भिक्षवस्तानि पञ्चाशद्ब्रह्मकोटीनयुतशतसहस्राण्येकस्वरेण समसंगीत्या[8] तं भगवन्तमाभ्यां सारूप्याभ्यां गाथाभ्यामध्यभाषन्त[9]॥

---

1) नं A. नु B. न Cb. W. O. त K.

2) नं A. W. न B. Cb. K. O.

3) All but O. शतेति.

4) MSS. दृश्यते.

5) All इमे, but it appears from एतानि in the third *pāda* that विमान is here used in the neuter gender.

6) All but O. ह्लीष; भगवन्निमं K.

7) Cb. adds पुरतः.

8) All but O. समं संगीत्य.

9) माभिः सारूप्याभिर्गाथाभिरध्यभाषन्ते स्म A. W. स्म left out in Cb. माभ्यां गाथाभ्यामध्यभाषन्ते स्म B. K. O. has भगवन्तमभिगीतेन धर्मचक्रप्रवर्तनायाध्येषिषुः॥

देशेहि धर्मं भगवन्विनायक प्रवर्तया[1] धर्ममयं च चक्रम्।
निनादया[2] धर्ममयं च दुन्दुभिं तं धर्मशङ्खं च प्रपूरयस्व॥ ४२॥
सद्धर्मवर्षं वर्षयस्व[3] लोके वल्गुस्वरं भाष सुभाषितं[4] च।
अध्येषितो[5] धर्ममुदीरयस्व मोचेहि सत्त्वानयुतान कोट्यः॥ ४३॥

5 अथ खलु भिक्षवः स भगवांस्तेषां महाब्रह्मणां तूष्णीभावेनाधिवासयति स्म॥

पेयालं[6]। एवं दक्षिणपश्चिमायां दिश्येवं पश्चिमायां[7] दिश्येवं पश्चिमोत्तरस्यां[8] दिश्ये-वमुत्तरस्यां[9] दिश्येवमुत्तरपूर्वस्यां[10] दिश्येवमधोदिशि[11]॥

अथ खलु भिक्षव ऊर्ध्वायां दिशि[12] तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु यानि ब्राह्माणि विमानानि तान्यतीव भ्राजन्ति तपन्ति विराजन्ति श्रीमन्त्योजस्वीनि च।
10 अथ खलु भिक्षवस्तेषां महाब्रह्मणामेतदभवत्। इमानि खलु पुनर्ब्राह्माणि विमानान्यतीव भ्राजन्ति तपन्ति विराजन्ति श्रीमन्त्योजस्वीनि च। कस्य खल्विदमेवंरूपं पूर्वनिमित्तं भविष्यतीति। अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महा-

---

1) य O.

2) निना O, better.

3) च प्रवर्ष O. preferable.

4) स्व B.

5) All but O. तं.

6) In A. W. only.

7) Left out in A. B. Cb.

8) रायां A. W. उत्तरपश्चिमायां O.

9) Left out in Cb.

10) Left out in B.

11) मध्योदिशि A. मधर्दिशि B. मधस्तान्दिशि Cb. मधोदिशि K. W. केष्टिमायां दिशि कर्तव्यम्॥ O.

12) ऊर्ध्वान्दिशि Cb.

ब्रह्माणास्ते सर्वे ऽन्योन्यभवनानि[1] गत्वारोचयामासुः। अथ खलु भिक्षवः शिखी नाम महाब्रह्मा तं महान्तं ब्रह्मगणं गाथाभिरध्यभाषत॥

किंकारणं मार्ष इदं भविष्यति येना विमानानि परिस्फुटानि।
ओजेन वर्णेन श्रुतीय चापि अधिमात्रवृद्धानि किमत्र कारणम्॥ ४४॥
न ईदृशं नो अभिदृष्टपूर्वं श्रुतं च केनो तथ पूर्व आसीत्। 5
ओजस्फुटानि[2] यथ अद्य एता[3] अधिमात्र भ्रान्ति किमत्र कारणम्॥ ४५॥
यदि वा नु कश्चिद्भवि देवपुत्रः शुभेन कर्मेण समर्पितो इह।
उपपन्नु तस्यो अयमानुभावो यदि वा भवेद्बुद्ध कदाचि लोके॥ ४६॥

अथ खलु भिक्षवस्तेषु पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये महाब्रह्माणास्ते सर्वे सहिताः समग्रास्तानि दिव्यानि स्वानि स्वानि ब्राह्माणि विमानान्यभिरुह्य दि- 10 व्यांश्च सुमेरुमात्रान्पुष्पपुटान्गृहीत्वा चतसृषु दिक्ष्वनुचङ्क्रमन्तो ऽनुविचरन्तो येनाधोदिग्भागस्तेनोपसंक्रान्ताः। अद्राक्षुः खलु पुनर्भिक्षवस्ते[4] महाब्रह्माणो[5] ऽधोदिग्भागे तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं बोधिमण्डवराग्रगतं बोधिवृक्षमूले सिंहासनोपविष्टं परिवृतं पुरस्कृतं देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यैस्तैश्च पुत्रैः षोडशभी राजकुमारैरध्येष्यमाणं[6] धर्मचक्रप्रवर्तनतायै। दृष्ट्वा च पुनर्येन स 15 भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य भगवतः पादौ शिरोभिर्वन्दित्वा[7] तं भगवन्तमनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य तैः सुमेरुमात्रैः पुष्पपुटैस्तं भगवन्तमभ्यवकिरन्ति स्माभिप्रकि-

---

1) न्यं A.
2) All but O. स्फु.
3) All एते.
4) ददृशुश्च O, omitting खलु पुनर्.
5) महाब्राह्मणा अधदि O. महाब्राह्मणा अधोदि the rest.
6) All but O. महाध.
7) शिरसाभिवन्दित्वा W. वन्द्य Cb.

रन्ति स्म तं च बोधिवृत्तं दशयोजनप्रमाणम्। अभ्यवकीर्य तानि दिव्यानि स्वानि स्वानि ब्राह्माणि विमानानि तस्य भगवतो[1] निर्यातयामासुः। प्रतिगृह्णातु भगवानिमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादाय।[2] परिभुञ्जतु सुगत इमानि ब्राह्माणि विमानान्यस्माकमनुकम्पामुपादायेति॥

5 अथ खलु भिक्षवस्ते ऽपि महाब्रह्माणस्तानि स्वानि स्वानि[3] विमानानि तस्य भगवतो[1] निर्यात्य तस्यां वेलायां तं भगवन्तं संमुखमाभिः[4] सारूप्याभिर्गाथाभिरभिष्टुवन्ति स्म॥

साधु दर्शन बुद्धानां लोकनाथान तायिनाम्।
त्रैधातुकस्मि बुद्धा वै सत्त्वानां[5] ये प्रमोचकाः॥ ४७॥
10 समन्तचक्षु[6] लोकेन्द्रा[7] व्यवलोकेन्ति दिशो दश।
विवरित्वामृतद्वारमोतारेन्ति[8] बहुञ्जनान्॥ ४८॥
शून्या अचिन्तिया:[9] कल्पा अतीता:[10] पूर्वि ये अभूः।[11]
अदर्शना[12] जिनेन्द्राणां अन्धा आसीद्दिशो दश॥ ४९॥
वर्धन्ति नरकास्तीव्रास्तिर्यग्योनिस्तथासुराः।

---

1) तस्मै भगवते B. K. The others but O. तस्यैव भगवतो
2) This sentence is left out in A. Cb.
3) B. K add ब्राह्माणि.
4) संमुखम् only in O., but see p. 172
5) केस्मिं सत्त्वानां बुद्धानां A. W. कस्मिं सत्त्वानां बुद्धानां B. Cb. O. कस्मि बुद्धा वै सत्त्वानां K.
6) क्षुर्लो B.
7) न्द्रो A. W. न्द्रा B. K. न्द्र Cb
8) मव A. B. K. W. मो Cb.
9) या K.
10) ता: B.
11) भूत् A. भूः B. Cb. K. W. O.
12) नानां A. W. नो नरे O.

प्रेतेषु चोपपद्यन्ते प्राणिकोट्यः[1] सहस्रशः ॥ ५० ॥

दिव्याः कायाश्च हायन्ते[2] च्युता गच्छन्ति दुर्गतिम् ।

अश्रुत्वा धर्म बुद्धानां गत्येषां भोति[3] पापिका[4] ॥ ५१ ॥

चर्याशुद्धिगतिप्रज्ञा हायन्ते[2] सर्वप्राणिनाम् ।

सुखं विनश्यतो तेषां सुखसंज्ञा च नश्यति ॥ ५२ ॥ 5

अनाचाराश्च ते भोन्ति असद्धर्मे प्रतिष्ठिताः ।

अदान्ता लोकनाथेन दुर्गतिं प्रपतन्ति ते ॥ ५३ ॥

दृष्टो[5] ऽसि लोकप्रद्योत सुचिरेणासि आगतः ।

उत्पन्नु सर्वसत्त्वानां कृतेन अनुकम्पकः ॥ ५४ ॥

दिष्ट्या[6] त्वमेण प्राप्तो ऽसि बुद्धज्ञानमनुत्तरम् । 10

वयं ते अनुमोदामो लोकश्चैव सदेवकः ॥ ५५ ॥

विमानानि सुचित्राणि[7] अनुभावेन ते विभो ।

ददाम[8] ते महावीर प्रतिगृह्ण[9] महामुने ॥ ५६ ॥

अस्माकमनुकम्पार्थं परिभुञ्ज[10] विनायक ।

वयं च सर्वसत्त्वाश्च अग्रां बोधिं स्पृशेमहि[11] ॥ ५७ ॥ 15

---

1) ट्य A. B. W. ट्या Cb. ट्यः K.

2) All but Cb. O. हीयन्ते.

3) भों A. भो Cb. K. W. गतो च भवति O.

4) पापका: A. पापिका: B. पातिका Cb. पापिका K. पापिता W. पापका O.

5) दिष्टो O.

6) All दृष्ट्वा.

7) वि Cb.

8) मि Cb.

9) ह्न A. K. W. ह्ना B. ह्य Cb. ह्लाद्धि नायक O.

10) भुङ्का B. भुद्यं Cb. भुंदव K.

11) स्पृशेषत A. W. स्पृसेमहि B. K. स्पृहेमहि Cb. स्पृशेमथ O., probably more original; cp. similar forms Mahāvastu III, 9.

अथ खलु भिक्षवस्ते महाब्रह्माणस्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धं संमुखमाभिः सारूप्याभिर्गाथाभिरभिष्टुत्य तं भगवन्तमेतदूचुः । प्रवर्तयतु भगवान्धर्मचक्रं प्रवर्तयतु सुगतो धर्मचक्रं लोके देशयतु भगवान्निर्वृतिं तारयतु भगवान्स-र्वसत्त्वाननुगृह्णातु[1] भगवानिमं लोकं देशयतु भगवान्धर्ममस्य सदेवकस्य लोकस्य समार-
5 कस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः सदेवमानुषासुरायाः । तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च ॥

अथ खलु भिक्षवस्तानि पञ्चाशद्ब्रह्मकोटीनयुतशतसहस्राण्येकस्वरेण समसंगीत्या[2] तं भगवन्तमाभ्यां सारूप्याभ्यां गाथाभ्यामध्यभाषन्त[3] ॥

10 प्रवर्तय[4] चक्रवरमनुत्तरं पराहनस्व[3] अमृतस्य दुन्दुभिम् ।
प्रमोचय[5] दुःखशतैश्च सत्त्वान्निर्वाणमार्गं च प्रदर्शयस्व[6] ॥ ५८ ॥
अस्माभिरध्येषितु भाष धर्ममस्माननुगृह्ण इमं च लोकम् ।
वल्गुस्वरं च[7] मधुरं प्रमुञ्च[8] समुदानितं कल्पसहस्रकोटिभिः ॥ ५९ ॥

अथ खलु भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतोऽर्हन्सम्यक्संबुद्धस्तेषां
15 ब्रह्मकोटीनयुतशतसहस्राणामध्येषणां[9] विदित्वा तेषां च षोडशानां पुत्राणां राजकुमाराणां

---

1) ह्णोष MSS. The whole passage wanting in O

2) All but O. समं संगीत्य.

3) माभिः सारूप्याभिर्गाथाभिरभाषते स्म A. °ध्यभाषन्त Cb. °भाषन्ते स्म W. माभ्यां °षन्ते स्म B. माभ्यां °षत K. गाथाभिगीतेन धर्मचक्रप्रवर्तनायाध्येषिसु O.

4) या Cb. K.

5) हनाहि O., more original.

6) याहि O.

7) च B. K. W. O. चो Cb. मधुरं च A.

8) मनोरमं B.

9) B. adds मा

तस्यां वेलायां[1] धर्मचक्रं प्रवर्तयामास त्रिपरिवर्तं द्वादशाकारमप्रवर्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण वा ब्रह्मणा वान्येन वा केनचित्पुनर्लोके सह धर्मेण।[2] यदिदं दुःखमयं दुःखसमुदयो ऽयं दुःखनिरोध इयं दुःखनिरोधगामिनी प्रतिपदार्यसत्यमिति। प्रतीत्यसमुत्पादप्रवृत्तिं च विस्तरेण संप्रकाशयामास। इति हि भिक्षवो ऽविद्या-प्रत्यया[3]: संस्कारा[3]: संस्कारप्रत्ययं विज्ञानं विज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं षडायतनं षडायतनप्रत्ययः स्पर्शः स्पर्शप्रत्यया वेदना वेदनाप्रत्यया तृष्णा तृष्णाप्रत्ययमुपादानमुपादानप्रत्ययो भवो भवप्रत्यया जातिर्जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति। अविद्यानिरोधात्संस्कारनिरोधः संस्कारनिरोधाद्विज्ञाननिरोधो विज्ञाननिरोधान्नामरूपनिरोधो नामरूपनिरोधात्षडायतननिरोधः षडायतननिरोधात्स्पर्शनिरोधः स्पर्शनिरोधाद्वेदनानिरोधो वेदनानिरोधात्तृष्णानिरोधस्तृष्णानिरोधादुपादाननिरोध उपादाननिरोधाद्भवनिरोधो भवनिरोधाज्जातिनिरोधो जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते। एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवति॥

महाप्रवर्तितं चेदं भिक्षवस्तेन भगवता महाभिज्ञाज्ञानाभिभुवा तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रं[4] सदेवकस्य लोकस्य[5] समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः[6] प्रजायाः सदेवमानुषासुरायाः पर्षदः पुरस्तादथ[7] तस्मिन्नेव क्षणलवमुहूर्ते षष्टेः[8] प्राणिकोटीनयुतशतसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि सर्वे च ते त्रैविद्याः

1) महा added except in Cb. O.

2) इदम् in Cb. only यदुत इदं O.

3) या °रा K. W.

4) B. adds प्रवर्त.

5) Left out in K.

6) व Cb. K. W.

7) B. O. add खलु.

8) षष्टीनां A. Cb. W. षष्टेः B. षष्ठः K.

षडभिज्ञा अष्टविमोक्षध्यायिनः[1] संवृत्ताः। पुनरनुपूर्वेण भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो ऽर्हन्सम्यक्संबुद्धो[2] द्वितीयां धर्मदेशनामकार्षीत्तृतीयामपि धर्मदेशनामकार्षीच्चतुर्थीमपि धर्मदेशनामकार्षीत्। अथ खलु भिक्षवस्तस्य भगवतो[3] महाभिज्ञाज्ञानाभिभुवस्तथागतस्यार्हतः सम्यक्संबुद्धस्यैकैकस्यां धर्मदेशनायां गङ्गानदीवालुकासमानां[4]
5 प्राणिकोटीनयुतशतसहस्राणामनुपादायास्रवेभ्यश्चित्तानि विमुक्तानि। ततः पश्चाद्भिक्षवस्तस्य भगवतो गणनासमतिक्रान्तः श्रावकसंघो ऽभूत्॥

तेन खलु पुनर्भिक्षवः समयेन ते षोडश राजकुमाराः कुमारभूता एव समानाः श्रद्धयागारादनागारिकां प्रव्रजिताः सर्वे च ते श्रामणेरा अभूवन्पण्डिता व्यक्ता मेधाविनः कुशला बहुबुद्धशतसहस्रचरिताविनो ऽर्थिनश्चानुत्तरायाः[5] सम्यक्संबोधेः[5]। अथ खलु
10 भिक्षवस्ते षोडश श्रामणेरास्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतमर्हन्तं सम्यक्संबुद्धमेतदूचुः। इमानि खलु पुनर्भगवंस्तथागतस्य बहूनि श्रावककोटीनयुतशतसहस्राणि महर्द्धिकानि महानुभावानि महेशाख्यानि भगवतो धर्मदेशनया[6] परिनिष्पन्नानि। तत्साधु भगवांस्तथागतो ऽर्हन्सम्यक्संबुद्धो ऽस्माकमनुकम्पामुपादायानुत्तरां सम्यक्संबोधिमारभ्य धर्मं देशयतु यद्वयमपि तथागतस्यानुशिक्षेमहि। अर्थिनो वयं भगवंस्तथागतज्ञानदर्शनेन।
15 भगवानेवास्माकमस्मिन्नेवार्थे साक्षी त्वं च[7] भगवन्सर्वसत्त्वाशयज्ञो जानीषे ऽस्माकमध्याशयमिति॥

---

1) MSS. but O. have मोक्षा for मोक्ष; O. has अर्हत्तः. But अष्टविमोक्षा as a Bahuvrīhi is meaningless.

2) From महा till बुद्धो left out in Cb. O. राजकुमारा added here in A. K. W.

3) From महा till बुद्धस्य left out in Cb. O.

4) कोप Cb. वालि for वालु O.

5) याः °धेः B. Cb. K. O. यां °धौ A. Ca. W.

6) नायां O.

7) In Cb. only.

तेन खलु पुनर्भिक्षवः समयेन तान्बालान्दारकान्राजकुमारान्प्रव्रजिताञ्छ्रामणेरान्दृष्ट्वा यावांस्तस्य राज्ञश्चक्रवर्तिनः परिवारस्ततोऽर्धः प्रव्रजितोऽभूदशीतिप्राणिकोटीनयुतशतसहस्राणि ॥

अथ खलु भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतोऽर्हन्सम्यक्संबुद्धस्तेषां श्रामणेराणामध्याशयं विदित्वा विंशतेः कल्पसहस्राणामत्ययेन सद्धर्मपुण्डरीकं नाम धर्मपर्यायं सूत्रान्तं महावैपुल्यं बोधिसत्त्वाववादं सर्वबुद्धपरिग्रहं विस्तरेण संप्रकाशयामास तासां सर्वासां चतसृणां पर्षदाम् ॥ 5

तेन खलु पुनर्भिक्षवः समयेन तस्य भगवतो भाषितं ते षोडश राजकुमाराः श्रामणेरा[1] उद्गृहीतवन्तो[2] धारितवन्त[3] आराधितवन्तः[4] पर्याप्तवन्तः[5] ॥

अथ खलु भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतोऽर्हन्सम्यक्संबुद्धस्तान्षोडश श्रामणेरान्व्याकार्षीदनुत्तरायां सम्यक्संबोधौ । तस्य खलु पुनर्भिक्षवो महाभिज्ञाज्ञानाभिभुवस्तथागतस्यार्हतः सम्यक्संबुद्धस्येमं सद्धर्मपुण्डरीकं धर्मपर्यायं भाषमाणस्य[6] श्रावकाश्चाधिमुक्तवन्तस्ते[7] च षोडश श्रामणेरा बहूनि च प्राणिकोटीनयुतशतसहस्राणि [8]विचिकित्साप्राप्तान्यभूवन् ॥ 10

1) In Cb. K. only. श्रामणेरकाः O.

2) ह्णीषु O. ह्णीत the rest.

3) Left out in Cb. धारयिषु O.

4) आधरित B. left out in O.; which seems preferable.

5) पर्यापुनिषु O.

6) ष्य B.

7) मुच्यिषुः O.

8) This agrees with Kumārajīva's version, as he reads 其餘衆生千萬億種皆生疑惑 'all the rest of beings, a thousand myriads of Koṭis, all felt doubts, and incertainty!» One Msc. has निर्वि°, which would seem more appropriate.

अथ खलु भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो ऽर्हन्सम्यक्संबुद्ध इमं सद्धर्मपुण्डरीकं धर्मपर्यायमष्टौ कल्पसहस्राण्यविश्रान्तो भाषित्वा विहारं प्रविष्टः प्रतिसंलयनाय तथा प्रतिसंलीनश्च भिक्षवः स तथागतश्चतुरशीति[1]कल्पसहस्राणि विहारस्थित एवासीत् ॥

5 अथ खलु भिक्षवस्ते षोडश श्रामणेरास्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतं[2] प्रतिसंलीनं विदित्वा पृथक्पृथग्धर्मासनानि सिंहासनानि[3] प्रज्ञाप्य तेषु निषण्णास्तं भगवन्तं महाभिज्ञाज्ञानाभिभुवं तथागतं नमस्कृत्य तं[4] सद्धर्मपुण्डरीकं धर्मपर्यायं विस्तरेण चतसृणां पर्षदां चतुरशीतिकल्प[5]सहस्राणि संप्रकाशितवन्तः। तत्र भिक्षव एकैकः[6] श्रामणेरो[7] बोधिसत्त्वः[8] षष्टिषष्टि[9]गङ्गानदीवालुकासमानि प्राणिकोटीनयुतशतसहस्राण्यनुत्त-

10 रायां सम्यक्संबोधौ परिपाचितवान्समादापित[10]वान्संहर्षित[11]वान्समुत्तेजितवान्संप्रहर्षितवानवतारितवान् ॥

अथ खलु भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेषां चतुरशीतेः[12] कल्प[13]सहस्राणामत्ययेन[14] स्मृतिमान्संप्रजानंस्तस्मात्समाधेर्व्युत्तिष्ठेत् व्युत्थाय

---

1) All but O. add कोटी.
2) From महा till गतं left out in Cb.
3) Left out in A. Cb.
4) From भगवन्तं till तं left out in Cb.
5) Some MSS. add कोटी.
6) कः K.
7) रा B. W.
8) त्वा Cb.
9) षष्टि is repeated in A only.
10) समादापितवान् left out in Cb.
11) संहर्षितवान् left out in B. Cb. O.
12) ति A. W. तेः B. तीनां Cb. K. O.
13) कोटी added in A. B. Ca. W.
14) त्ययात् K.

च स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतो[1] येन तद्धर्मासनं तेनोपसंक्रामदुपसंक्रम्य[2] प्रज्ञप्त एवासने न्यषीदत् ॥

समनन्तरनिषण्णश्च खलु पुनर्भिक्षवः स भगवान्महाभिज्ञाज्ञानाभिभूस्तथागतस्त-[3]स्मिन्धर्मासने ऽथ[4] तावदेव सर्वावन्तं पर्षन्मण्डलमवलोक्य भिक्षुसंघमामन्त्रयामास । आश्चर्यप्राप्ता भिक्षवो ऽद्भुतप्राप्ता इमे षोडश श्रामणेराः[5] प्रज्ञावन्तो बहुबुद्धकोटीनयुतशतसह-[6]स्रपर्युपासिताश्चीर्णचरिता बुद्धज्ञानपर्युपासका[7] बुद्धज्ञानप्रतिग्राहका[8] बुद्धज्ञानावतारका बुद्धज्ञानसंदर्शकाः । पर्युपासध्वं भिक्षव एतान्षोडश श्रामणेरान्पुनः पुनर्ये केचिद्भिक्षवः श्रावकयानिका वा प्रत्येकबुद्धयानिका वा बोधिसत्त्वयानिका वैषां कुलपुत्राणां धर्मदेशनां न प्रतिक्षेप्स्यन्ति न प्रतिबाधिष्यन्ते सर्वे ते क्षिप्रमनुत्तरायाः सम्यक्संबोधेर्लाभिनो भविष्यन्ति सर्वे च ते तथागतज्ञानमनुप्राप्स्यन्ति ॥

[9]तैः खलु पुनर्भिक्षवः षोडशभिः कुलपुत्रैस्तस्य भगवतः शासने ऽयं सद्धर्मपुण्डरीको धर्मपर्यायः पुनः पुनः संप्रकाशितो ऽभूत् । तैः खलु पुनर्भिक्षवः षोडशभिः श्रामणेरैर्बोधिसत्त्वैर्महासत्त्वैर्यानि तान्येकैकेन बोधिसत्त्वेन महासत्त्वेन षष्टिषष्टिगङ्गानदीवालुकासमानि[10] सत्त्वकोटीनयुतशतसहस्राणि[6] बोधाय समादापितान्यभूवन्सर्वाणि च तानि तैरेव सार्धं

---

1) From महा till गतो left out in Cb.

2) क्रामदुपसं left out in A. B. W. क्रामुपसं K.

3) From महा till गतस् left out in Cb. O. तथागतस् left out in K.

4) A. B. K. W. add खलु.

5) From अद्भुत till णेराः left out in Cb.

6) All but O. नियुत.

7) Left out in Cb.

8) In Cb. only. In O. much more prolix.

9) तेन B. Cb. तैश्च O.

10) कोप B.

तासु तासु जातिष्वनुप्रव्रजितानि तान्येव समनुपश्यन्तस्तेषामेवात्तिकाद्धर्मम[1]श्रौषुः। तैश्च-
त्वारिंशद्बुद्धकोटीसहस्राण्याराागितानि केचिद्याप्याराागयन्ति ॥

आरोचयामि वो भित्तवः प्रतिवेदयामि वो ये ते षोडश राजकुमाराः कुमारभूता ये
तस्य भगवतः शासने श्रामणेरा धर्मभाणका[2] अभूवन्सर्वे ते ऽनुत्तरां सम्यक्संबोधिमभिसं-
5 बुद्धाः सर्वे च त एतर्हि तिष्ठन्ति ध्रियन्ते यापयन्ति दशसु दिन्नु नानाबुद्धत्तेत्रेषु बहूनां
श्रावकबोधिसत्त्व[3]कोटीनयुतशतसहस्राणां धर्मं देशयन्ति। यदुत[4] पूर्वस्यां दिशि भित्तवो
ऽभिरत्यां लोकधातावत्तोभ्यो १ नाम तथागतो ऽर्हन्सम्यक्संबुद्धो २ मेरुकूटश्च नाम तथा-
गतो ऽर्हन्सम्यक्संबुद्धः। पूर्वदत्तिणस्यां दिशि भित्तवः ३ सिंहघोषश्च नाम तथागतो
ऽर्हन्सम्यक्संबुद्धः ४ सिंहध्वज[5]श्च नाम तथागतो ऽर्हन्सम्यक्संबुद्धः। दत्तिणस्यां दिशि
10 भित्तव ५ आकाशप्रतिष्ठितश्च नाम तथागतो ऽर्हन्सम्यक्संबुद्धो ६ नित्यपरिनिर्वृत[6]श्च
नाम तथागतो ऽर्हन्सम्यक्संबुद्धः। दत्तिणपश्चिमायां दिशि भित्तव ७ इन्द्रध्वजश्च नाम
तथागतो ऽर्हन्सम्यक्संबुद्धो ८ ब्रह्मध्वजश्च नाम तथागतो ऽर्हन्सम्यक्संबुद्धः। पश्चिमायां
दिशि भित्तवो ९ ऽमितायुश्च नाम तथागतो ऽर्हन्सम्यक्संबुद्धः १० सर्वलोकधातूपद्रवोद्वे-
गप्रत्युत्तीर्णश्च नाम तथागतो ऽर्हन्सम्यक्संबुद्धः।[7] पश्चिमोत्तरस्यां दिशि भित्तवस्तमाल-
15 पत्रचन्दनगन्धाभिज्ञश्च ११ नाम तथागतो ऽर्हन्सम्यक्संबुद्धो १२ मेरुकल्पश्च नाम तथा-
गतो ऽर्हन्सम्यक्संबुद्धः। उत्तरस्यां दिशि भित्तवो १३ मेघस्वरदीपश्च[8] नाम तथागतो ऽर्ह-

1) कात्सद्धर्मं K.

2) Left out in Cb.

3) बोधिसत्त्व left out in A. W.

4) यदिदं Cb. O.

5) ब्रह्मध्वजश्च A. K. W.

6) निर् left out in A. K. W.

7) The whole sentence is left out in A. B.

8) मेघस्वरो B. मेघस्वरदीपश्च Cb. मेघस्वरश्च K. मेघस्वरदीपो नाम O.

न्सम्यक्संबुद्धो १४ मेघस्वरराजश्च[1] नाम तथागतो ऽर्हन्सम्यक्संबुद्धः। [2]उत्तरपूर्वस्यां दिशि भिक्षवः १५ सर्वलोकभयच्छम्भितत्वविध्वंसनकरश्च[3] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो ऽहं च भिक्षवः १६ शाक्यमुनिर्नाम तथागतो ऽर्हन्सम्यक्संबुद्धः षोडशमो मध्ये खल्वस्यां सहायां लोकधातावनुत्तरां[4] सम्यक्संबोधिम्[4]अभिसंबुद्धः॥

ये पुनस्ते भिक्षवस्तदास्माकं श्रामणेरभूतानां सत्त्वा[5] धर्मं श्रुतवन्तस्तस्य भगवतः शासन एकैकस्य बोधिसत्त्वस्य महासत्त्वस्य[6] बहूनि गङ्गानदीवालुकासमानि[7] सत्त्वकोटी-नयुतशतसहस्राणि यान्यस्माभिः समादापितान्यनुत्तरायां सम्यक्संबोधौ तान्येतानि[8] भिक्षवो ऽद्यापि श्रावकभूमावेवावस्थितानि परिपाच्यन्त[9] एवानुत्तरायां[10] सम्यक्संबोधौ। एषै-वैषामानुपूर्व्यनुत्तरायाः[11][12] सम्यक्संबोधेरभिसंबोधनाय[13]। तत्कस्य हेतोः। एवं दुरधिमोच्यं[14] हि भिक्षवस्तथागतज्ञानम्। कतमे च ते भिक्षवः सत्त्वा ये मया बोधिसत्त्वेन तस्य भगवतः 10

---

1) मेघस्वर B. W. O. मेघश्वर Cb. मेघेश्वर Ca.

2) This sentence till बुद्धः is left out in A.

3) भय B. W. भया Cb. K. लोकादीसभयमन्यितविध्वंस° O. Var. rr. mentioned in English translation p. 179: भयाजितच्छम्भि° and भयदेवागच्छम्भि°.

4) रायां °धौ A. W.

5) सत्त्वाना A. B. Cb. K. सत्त्वा W.

6) In B. only.

7) कोप A. B. Cb. W.

8) एतानि left out in W.

9) पच्यंत Cb.

10) एव left out in B.

11) पूर्वी अनु A. B. Cb. W.

12) रां Cb.

13) बोधिमभिसंबुध्य Cb.

14) धिगमो वा A. धिमोच्या B. धिमोद्यं Cb. धिमोच्यं K. धिमोचा W. धिमुच्यनीयं O.

शासने अप्रमेयाण्यसंख्येयानि गङ्गानदीवालु[1]कासमा[2]नि सत्त्वकोटीनयुतशतसहस्राणि सर्व-
ज्ञता[3]धर्मसुसंभावितानि। एवं ते भिक्षवस्तेन कालेन तेन समयेन सत्त्वा अभूवन्॥

ये[4] च मम परिनिर्वृतस्यानागते ऽध्वनि श्रावका भविष्यन्ति बोधिसत्त्वचर्यां च
श्रोष्यन्ति न चावभोत्स्यन्ते बोधिसत्त्वा वयमिति। किं चापि ते भिक्षवः सर्वे परिनिर्वा-
5 णसंज्ञिनः परिनिर्वास्यन्ति। अपि तु खलु पुनर्भिक्षवो यदहमन्यासु[6] लोकधातुष्वन्योन्यै-
र्नामधेयैर्विहरामि[7] तत्र ते पुनरुत्पत्स्यन्ते तथागतज्ञानं पर्येषमाणास्तत्र च ते पुनरेवैतां[8]
क्रियां श्रोष्यन्ति। एकमेव तथागतानां परिनिर्वाणं नास्त्यन्यद्द्वि[9]तीयमितो बहिर्निर्वाणं
तथागतानाम्। एतद्भिक्षव उपायकौशल्यं वेदितव्यं धर्मदेशनाभिनिर्हारश्च। यस्मिन्भि-
क्षवः समये तथागतः परिनिर्वाणकालसमयमात्मनः समनुपश्यति परि[10]शुद्धां च पर्षदं पश्य-
10 त्यधिमुक्तिसारां शून्यधर्मगतिंगतां ध्यानवतीं महाध्यानवतीम्। अथ खलु भिक्षवस्तथा-
गतो ऽयं काल इति विदित्वा सर्वान्बोधि[11]सत्त्वान्सर्वश्रावकांश्च संनिपात्य[12] पश्चादेतमर्थं[13]
संश्रावयति। न भिक्षवः किंचिदस्ति लोके द्वितीयं नाम[14] यानं परिनिर्वाणं वा कः पुन-

---

1) लि K. W.

2) कोप Cb.

3) ता left out in B. ज्ञता left out in Cb. ज्ञताय ध O.

4) ते A.

5) समर्पयि B. W. समयि K.

6) न्येषु B. Ca. K.

7) र्व्यवह्रियेय B. K. °र्यवह्रिये Cb.

8) पुनरेतां K.

9) द्विं K.

10) परि in K. O. only.

11) सर्वान्सर्वश्रा° B. सर्वबोधि° K.

12) संनिपातयित्वा Cb. समानयित्वा O.

13) व Cb. दिदमर्थं श्रा O.

14) Left out in Cb.

र्वादस्तृतीयस्य। उपायकौशल्यं खल्विदं भिक्षवस्तथागतानामकृतां(1) दूरप्रणाष्टं संबधातुं विदित्वा क्लीनाभिरतान्(2) कामपङ्कमग्रास्ततं(3) एषां भिक्षवस्तथागतस्तन्निर्वाणं भाषते यद्-धिमुच्यन्ते(4)॥

तद्यथापि नाम भिक्षव इह स्यात्पञ्चयोजनशतिकमहा(5)टवीकान्तारं महांश्चात्र जनकायः प्रतिपन्नो भवेत्। रत्नद्वीपं गमनाय देशिकश्चैषामेको भवेद्व्यक्तः पण्डितो निपुणो(6) मेधावी 5
कुशलः खल्वटवीदुर्गाणां स च तं सार्थमटवीमव(7)क्रामयेत्। अथ खलु स महाजनकायः श्रान्तः क्लान्तो भीतस्त्रस्त एवं वदेत्। यत्(8)खल्वार्य देशिक(9) परिणायक जानीया वयं हि श्रान्ताः क्लान्ता भीतास्त्रस्ता अनिर्वृताः। पुनरेव प्रतिनिवर्तयिष्यामो ऽतिदूरमितो(10) ऽटवीकान्तारमिति। अथ खलु भिक्षवः स देशिक उपायकुशलस्तान्पुरुषान्प्रतिनिवर्ति(11)-तुकामान्विदित्वा एवं चिन्तयेत्। मा खल्विमे तपस्विनस्तादृशं महारत्नद्वीपं न गच्छेयु- 10
रिति। स तेषामनुकम्पार्थमुपायकौशल्यं प्रयोजयेत्(12)। तस्या अटव्या(13) मध्ये योजनशतं वा

---

1) अकृतां left out in Cb.

2) तां A. B. Cb. ता W. तं K.

3) मग्नां तत्र A. मग्नाः तत्र K. मग्नांस्तत्र Cb. विलग्नांस्तत्र K. लग्नां तत्र W. लग्नाः ततो भि° O.

4) न्तः B. पे for यद्व O.

5) क left out in K.

6) Left out in Cb. O.

7) अति for अव O.

8) यत् left out in Cb.

9) A. B. K. W. O. add आर्य.

10) दूरेयम O.

11) वर्ति A. Cb. K. वर्त्तयि B. वर्त्ति W.

12) Cb. K. add स.

13) व्यां A. Cb. वी B. व्या K. W. All तस्याम°.

द्वियोजनशतं[1] वा त्रियोजनशतं[2] वातिक्रम्यर्द्धिमयं नगरमभिनिर्मिमीयात्। ततस्तान्पुरुषानेवं वदेत्। मा भवन्तो भैष्ट[3] मा निवर्तध्वमयमसौ महाजनपदो[4]ऽत्र विश्राम्यत। अत्र[5] वो यानि कानिचित्करणीयानि तानि सर्वाणि कुरुध्वमत्र निर्वाणप्राप्ता विहरध्वमत्र विश्रान्ताः। यस्य पुनः कार्यं भविष्यति स तं महारत्नद्वीपं[6] गमिष्यति॥

5 अथ खलु भिक्षवस्ते कान्तारप्राप्ताः सत्त्वा आश्चर्यप्राप्ता अद्भुतप्राप्ता[7] भवेयुर्मुक्ता वयमटवीकान्तारादिह निर्वाणप्राप्ता विहरिष्याम इति। अथ खलु भिक्षवस्ते पुरुषास्तदृद्धि[8]मयं नगरं प्रविशेयुरागतसंज्ञिनश्च भवेयुर्निस्तीर्णसंज्ञिनश्च भवेयुः[9]। निर्वृताः शीतीभूताः स्म इति मन्येरन्। ततस्तान्स देशिको विश्रान्तान्विदित्वा तदृद्धि[10]मयं नगरमन्तर्धापयेदन्तर्धापयित्वा च तान्पुरुषानेवं वदेत्। आगच्छन्तु भवन्तः सत्त्वा अभ्यासन्न[11] एष महारत्नद्वीपः।
10 इदं तु मया नगरं युष्माकं विश्रामणार्थमभिनिर्मितमिति॥

एवमेव भिक्षवस्तथागतोऽर्हन्सम्यक्संबुद्धो युष्माकं सर्वसत्त्वानां च देशिकः। अथ खलु भिक्षवस्तथागतोऽर्हन्सम्यक्संबुद्ध एवं पश्यति। महदिदं[12] क्लेशकान्तारं निर्गन्तव्यं[13]

---

1) वा द्वि° वा left out in A. W.

2) त्रि° वा left out in B. Cb. K.

3) A. adds मितो B. W. add मितिः Cb. reads मापध्व (meant भायध्वं) for भैष्ट. O. has भायध्व.

4) जनपदे K.

5) श्राम अत्र K. श्रमथ O.

6) द्वीपनगरं A. W. महानगरं रत्नद्वीपं B. K.

7) Left out in Cb.

8) मृ B. Cb. K.

9) K. adds निर्वाणसंज्ञिनश्च भवेयुः.

10) मृ B. Cb. K.

11) से B. K. शे O.

12) महांतमिदं Cb. O.

13) र्भे A. B. K. W.

निष्क्रान्तव्यं[1] प्रक्रान्तव्यम्[2]। मा खल्विम एकमेव[3] बुद्धज्ञानं श्रुत्वा इवैणैव[4] प्रतिनिवर्तयेयुर्नैवोपसंक्रमेयुः। बहुपरि[5]क्लेशमिदं बुद्धज्ञानं समुदानयितव्यमिति। तत्र तथागतः सत्त्वान्दुर्बलाशयान्विदित्वा यथा स देशिकस्तदृद्धिमयं नगरमभिनिर्मिमीते तेषां सत्त्वानां विश्रामणार्थं विश्रान्तानां चैषामेवं[6] कथयतीदं खल्वृद्धिमयं नगरमिति। एवमेव भिक्षवस्तथागतो ऽप्यर्हन्सम्यक्संबुद्धो महोपायकौशल्येनान्तरा द्वे निर्वाणभूमी सत्त्वानां विश्रा- 5
मणार्थं देशयति संप्रकाशयति[7]। यदिदं श्रावकभूमिं प्रत्येकबुद्धभूमिं च। यस्मिंश्च भिक्षवः समये ते सत्त्वास्तत्र स्थिता भवन्ति। अथ खलु[8] भिक्षवस्तथागतो ऽप्येवं संश्रावयति। न खलु पुनर्भिक्षवो[9] यूयं कृतकृत्याः कृतकरणीयाः।[10] अपि तु खलु पुनर्भिक्षवो युष्माकमभ्याश[11] इतस्तथागतज्ञानं व्यवलोकयध्वं भिक्षवो व्यवचारयध्वं यद्युष्माकं निर्वाणं नैव निर्वाणम्[12]।
अपि तु खलु पुनरुपायकौशल्यमेतद्भिक्षवस्तथागतानामर्हतां सम्यक्संबुद्धानां यत्त्रीणि 10
यानानि संप्रकाशयन्तीति॥

अथ खलु भगवानिममेवार्थं[13] भूयस्या मात्रयोपदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत॥

---

1) In Cb. only.

2) Left out in B. Cb.

3) खलु मे एमेव A. खल्विमे एकमेव B. खल्विमे एवमेव Cb. खल्विदमेव K. खल्वमे एकमेव W. खल्विमे सत्त्वा एक एव O.

4) द्राविनाथ Cb.

5) A. W. add सं.

6) K. adds सत्त्वानाम् before एवम्.

7) In A. W. only.

8) Left out in A. K. W.

9) पुनर् left out in A. B. Cb. K.

10) From अपि till निर्वाणम् left out in A.

11) अभ्यासे in B. K. W.

12) नैतन्नि K. नैव O. नैवं the rest.

13) र्थगतिं A. B. W. मामेवार्थगतिं K.

अभिज्ञज्ञानाभिभु लोकनायको यद्बोधिमण्डस्मि[1] निषण्ण आसीत् ।
दशोह[2] सो अन्तरकल्प पूर्णान्न लब्धि बोधिं परमार्थदर्शी ॥ ६० ॥
देवाश्च नागा असुराश्च गुह्यका उद्युक्त पूजार्थ जिनस्य तस्य ।
पुष्पाण वर्षं प्रमुमोचु तत्र बुद्धे च बोधिं नरनायके ऽस्मिन् ॥ ६१ ॥
5 उपरिं च हि[3] दुन्दुभयो विनेदुः[4] सत्कारपूजार्थ जिनस्य तस्य ।
सुदुःखिता चापि जिनेन तत्र चिरबुध्यमानेन अनुत्तरं पदम् ॥ ६२ ॥
दशान चो अन्तरकल्प[6] अत्ययात्स्पृशे स बोधिं भगवाननाभिभूः ।
हृष्टा उदग्रास्तद आसु[7] सर्वे देवा मनुष्या भुजगासुराश्च ॥ ६३ ॥
वीराः कुमारा अथ तस्य षोडश पुत्रा गुणाढ्या नरनायकस्य ।
10 उपसंक्रमी प्राणिसहस्रकोटिभिः पुरस्कृतास्तं द्विपदेन्द्रमग्र्यम् ॥ ६४ ॥
वन्दित्व पादौ च विनायकस्य अध्येषिषू धर्म प्रकाशयस्व ।
अस्मांश्च तर्पेहि इमं च लोकं सुभाषितेनेह नरेन्द्रसिंह ॥ ६५ ॥
चिरस्य लोकस्य दशद्दिशे ऽस्मिन्विदितो ऽसि उत्पद्यु महाविनायक ।
निमित्तसंचोदनहेतु प्राणिनां ब्राह्मी[8] विमानानि प्रकम्पयन्तः[9] ॥ ६६ ॥
15 दिशाय पूर्वाय सहस्रकोट्यः क्षेत्राण पञ्चाशद्भूमि कम्पिताः ।
तत्रापि ये ब्राह्म[10]विमान अग्रास्ते तेजवन्तो अधिमात्रमासि[11] ॥ ६७ ॥

---

1) यदि Cb. O
2) दशसहस्रो K.
3) उपरि हि A. उपरिष्ट हि B. K. उपरेन्न च Cb. उपरिं हि W. उपरे च ते O
4) विनर्दति Cb. निनादयो O.
5) चासि O.
6) म Cb O.
7) सो A. स B सि Cb. W. O सु K.
8) ब्राह्मं K. W.
9) प्रकाश Cb. °यन्तो O.
10) ब्र A. W.
11) अधिमानमासी A. W. अधिमात्र आसि B. Cb. K. O

विदित्व ते पूर्वनिमित्तमीदृशमुपसंक्रमो लोकविनायकेन्द्रम्।
पुष्पैरिहाभ्योकिरियाण[1] नायकमर्पेत्ति[2] ते सर्व विमान तस्य ॥ ६८ ॥
अध्येषिषू चक्रप्रवर्तनाय गाथाभिगीतेन[3] अभिस्तविंसु।
तूष्णीं च सो आसि नरेन्द्रराजा[4] न ताव कालो मम धर्म भाषितुम् ॥ ६९ ॥
एवं दिशा दक्षिणायापि तत्र अथ पश्चिमाहेष्टिम[5] उत्तरस्याम्। 5
उपरिष्टिमायां विदिशासु चैव आगत्य ब्रह्माण[6] सहस्रकोट्यः ॥ ७० ॥
पुष्पेभि[7] अभ्योकिरियाण नायकं[8] पादौ च वन्दित्व विनायकस्य।
निर्यातयित्वा च विमान सर्वानभिष्टवित्वा[9] पुनरभ्ययाचि[10] ॥ ७१ ॥
प्रवर्तया[11] चक्रमनन्तचक्षुः सुदुर्लभस्त्वं बहुकल्पकोटिभिः।
दर्शेहि मैत्रीबल[12] पूर्वसेवितमपावृणोहि[13] अमृतस्य द्वारम् ॥ ७२ ॥ 10
अध्येषणां ज्ञात्व अनन्तचक्षुः प्रकाशते[14] धर्म बहुप्रकारम्।
चत्वारि सत्यानि च विस्तरेण प्रतीत्य सर्वे इमि[15] भाव उत्थिता[16] ॥ ७३ ॥

---

1) अभ्यो B. K. O. अभ्या the rest.
2) स्पर्शेषु Cb. °किरि तं महामुनि निर्यादयिन्सुश्च वि O.
3) गीतेन A. K. W. O. गीतेभि the rest.
4) जिने Cb.
5) मह्ने A. W. मेह्ने B. माह्ने Cb. मह्य K. पश्चिमायोत्तरहेष्टिमायाम् O.
6) ब्रह्मण W. ब्राह्मण Cb.
7) Only in O.
8) च तथ तायिनं B. अभ्योकिरीयान च ते तायिनं K. अभ्योकिरिय विनायकं O. अभ्याकिरियाण च Cb.
9) सर्वे K. O.
10) पुनरभ्ययाचि A. B. K. W. पुनरप्यवाचि Cb. पुनरेव याचि O.
11) य K. O. The final vowel long before the pause.
12) मैत्राबल O.; cp. Pāli *mettā*.
13) वृणाहि O.; better.
14) प्रभाषते Cb. प्रकाशि स O.
15) इम K.
16) उत्थिता A. W. उच्छ्रिता B. संभुता Cb. उत्थिताः K.

अविद्य आदीकरियाण[1] चनुमान्प्रभाषते[2] स मरणान्तदुःखम्[3]।
ज्ञातिप्रसूता इमि सर्वदोषा मृत्युं च मानुष्यमिमेव ज्ञानथ ॥ ७४ ॥
समनन्तरं भाषितु[4] धर्म तेन बहुप्रकारा विविधा अनन्ताः।
अनुलानशीतोनयुतान[5] कोट्यः सत्वाः स्थिताः श्रावकभूतले लघुम्[6] ॥ ७५ ॥
5 तथा द्वितीयं अपरं अभूषि जिनस्य तस्यो[7] बहुधर्म भाषतः।
विशुद्धसत्वा यथ गङ्गवालुकाः[8] तथैन ते श्रावकभूत[9] आसीत् ॥ ७६ ॥
ततोत्तरी[10] अगणियु[11] तस्य आसीत्संघस्तदा लोकविनायकस्य।
कल्पान कोटीनयुता गणेत्त[12] एकैक[13] नो चान्तु[14] लभेय तेषाम् ॥ ७७ ॥
ये चापि ते षोडश राजपुत्रा ये औरसा चैलकभूत[15] सर्वे।
10 ते श्रामणेरा अवचिंसु[16] तं जिनं प्रकाशया[17] नायक अग्रधर्मम् ॥ ७८ ॥

---

1) आदि A. W. आशो B. Cb. आदी K. O.
2) णाय K.
3) All but O. मरणमनंत.
4) त K. O.
5) Left out in Cb.
6) भूमिये लघु O.; the others भूतलेघुम्.
7) तस्य O., preferable.
8) लि Cb. K. W. O.
9) भूमि B. K. सर्वि Cb. O.
10) रं A. read रिं.
11) य A. B. W.
12) गणेत्तो K. गणेया O.
13) कु Cb. K. कि O.
14) त A. Cb. K. W. तु B. नो च लभेत अन्तम् O. The others have लभेयु.
15) बल A. चेल्ल B. K. वेल्ल Cb. चेल W. चेड O.
16) °चित्सु K. चिन्सु O.
17) श्रय O.; correctly.

यथा[1] वयं लोकविदू भवेम यथैव त्वं सर्वजिना[2]नमु[3]त्तम ।
इमे च सत्त्वा भवि सर्वि एव[4] यथैव त्वं वोर विशुद्धचतु[5]ः ॥ ७९ ॥
सो चा जिनो[6] आशयु ज्ञात्व तेषां कुमारभूतान तथा[7]त्मजानाम् ।
प्रकाशयी उत्तममग्रबोधिं दृष्टान्तकोटीनयुतैरनेकैः ॥ ८० ॥
हेतूसहस्रैरुपदर्शयंतो[8] अभिज्ञज्ञानं च प्रवर्तयंतः[9] । 5
भूतां[10] चरिं दर्शयि[11] लोकनाथो यथा चरंतो[12] विदुबोधिसत्त्वाः ॥ ८१ ॥
इदमेव सद्धर्मसुपुण्डरीकं[13] वैपुल्यसूत्रं भगवानुवाच ।
गाथासहस्रेहि अनल्पकेहि[14] येषां प्रमाणं यथ गङ्गवालिका[15]ः ॥ ८२ ॥
सो चा जिनो[16] भाषिय सूत्रमेतद्विहारु[17] प्रविशित्व[18] विलक्षयोत[19] ।
पूर्णानशीतिश्चतुरश्च कल्पान्समाहितैकासनि लोकनाथः ॥ ८३ ॥ 10

1) य A. B. Cb. W. त K.

2) प्रजा A. B. K. W. जिना Cb. प्रज्ञान उ O.

3) मा K.

4) सर्व एवं A. W. सर्वमेव B. सव एव Cb. सर्वि एव K.

5) चतुषा Cb.; i. e. चतुषः.

6) चज्जिना Cb. चज्जिनो K. च जिनो A. B. Ca. W. च जिन O.

7) दा Cb.

8) यंत A. B. W. O. यंतो Cb. K.

9) प्रवर्तयंतः A. B. प्रकीर्तयंतो Cb. प्रवर्त्तयंतो K. प्रवर्त्तयंतो W.

10) श्च Cb. W.

11) देशय Cb.

12) व B. Cb. W. च K. Read चरन्ति.

13) स B. सु K. left out in Cb. W. From अभिज्ञानं until वैतुल्य° wanting in O.

14) त Cb. अनूनकेभिर् O.

15) In all but A. W. का.

16) चज्जिनो W. च जिनो the rest.

17) र A. Cb. K. W. O. रु B.

18) प्रांषसित्व A. W. प्रविसित्व B. प्रतिसित्व Cb. प्रविशित्व K. O.

19) पोत A. Cb. W. पीत् K. पित्ता B. पोतः O.

ते श्रामणेराश्च विदित्व नायकं विहारि[1] श्रासनमनिष्क्रमन्तम् ।
संश्रावयिंसु[2] बहुप्राणिकोटिनां बौद्धं इमं ज्ञानमनास्रवं शिवम् ॥ ८४ ॥
पृथक्पृथगासन[3] प्रज्ञपित्वा अभाषि तेषामिदमेव सूत्रम् ।
सुगतस्य तस्य[4] तद् शासनस्मिन् अधिकार[5] कुर्वन्तिममेवरूपम् ॥ ८५ ॥

5 गङ्गा यथा वालुक अप्रमेया[6] सहस्रषष्टिं तद् श्रावयिंसु ।
एकैकु[7] तस्य[8] सुगतस्य पुत्रो विनेति सत्त्वानि अनल्पकानि ॥ ८६ ॥
तस्यो[9] जिनस्य[9] परिनिर्वृतस्य चरित्व ते पश्यिसु[10] बुद्धकोट्यः ।
तेभ्ही[11] तदा श्रावितकेहि सार्धं कुर्वन्ति पूजां द्विपदोत्तमानाम् ॥ ८७ ॥
चरित्व चर्यां विपुलां[12] विशिष्टां बुद्धा[13] च ते बोधि दशद्दिशासु[14] ।

10 ते षोडशा तस्य जिनस्य पुत्रा दिशासु सर्वासु दयो दयो जिनाः ॥ ८८ ॥

---

1) र A. B. Cb. K. रि W. रमा O.

2) यन्सु A. यंसू B. यिंसू Cb. K. यिन्सु O. यित् W.

3) All but O. नि; but आसनम् is of the neuter gender.

4) All तस्यो, except O.

5) रु K.

6) यो W. Rather याः.

7) क A. B. K. W. O. कु Cb.

8) तत्र B. K.

9) स्य A. Cb. W. O. स्यो B. K.

10) चरिष्यते पस्यिसु Cb.

11) तेहि K. तेभिः सह O.

12) विमलां O.

13) बुध्या A. बुध्वा W. प्राप्ताश्च O.

14) दशान्दि O.

ये चापि संभाविताका तदा[1]सी ते श्रावका ते[2]ष जिनान सर्वे।
[3]इममेव बोधिं उपनामयन्ति क्रमक्रमे[4]णा विविधैरुपायैः ॥ ८९ ॥
अहं पि अभ्यन्तरि[5] ते[6]ष आसीन्मयापि संभावित सर्वि [7]युष्म।
तेनो[8] मम श्रावक यूयमद्य बोधावुपायेन[9] ह सर्वि नेमि ॥ ९० ॥
[10]अयं खु हेतुस्तद पूर्व आसीदयं प्रत्ययो येन ऋ धर्म भाषे। 5
नयाम्यहं ये[11]न ममाग्रबोधिं मा भिक्षवो उत्त्रसथेह स्थाने ॥ ९१ ॥
यथाटवी उग्र भवे[12]य दारुणा शून्या निरालम्ब निराश्रया च
बहुश्वापदा चैव अपानिया[13] च बालान सा भीषणिका भवेत ॥ ९२ ॥
पुरुषाण च तत्र सहस्रनैका[14] ये प्रस्थितास्तामटवीं भवेयुः।
अटवी च सा शून्य भवेत दीर्घा पूर्णानि पञ्चाशत[15] योजनानि ॥ ९३ ॥ 10

---

1) सि B. K.

2) षु A. K

3) ट् A. B. K. W. म Cb. हमेव बाधौ O

4) ए; A. B. K. W. O. णा Cb.

5) रु Cb. र् O. रि the rest.

6) षु A. Cb. K. W. ष B. O.

7) युष्मि सर्वे O. Cp. युष्मे Mahāvastu I, 313, 8; III, 86, 7.

8) तेन A. B. W. O. तेनो Cb. K.

9) नह A. W. O. निम Cb. निह B. Ca. K. ह = कु, Skr. अहं.

10) अहं Cb.

11) योनि B. येमि K. W. येन यमय O. Read येनिममग्र°.

12) यथापि अटवी भवि अग्र Cb. यथापि अटवीं भवि दुर्ग O.

13) चैव पदानिया च A. W. चैव अपानियानि B. चैव अपानिया च K. अ-पान Cb.

14) का A. O. क B. के Cb. K. को W.

15) ति A. B. K. W. त Cb. O.

पुरुषश्च भाव्यः स्मृतिमन्तु[1] व्यक्तो धीरो विनीतश्च विशारदश्च
यो देशिकस्तेष[2] भवेत[3] तत्र मटवीय दुर्गाय सुभैरवाय ॥ ९४ ॥

[4]ते चापि खिन्ना बहुप्राणिकोथ[5][6] उवाच तं देशिक तस्मि[7] काले ।
खिन्ना वयं मार्य न शक्नुयाम[8] निवर्तनं मद्यिक्[9] रोचते नः ॥ ९५ ॥

5 कुशलश्च सो पि[10] तद पण्डितश्च प्रणायकोपाय[11] तदा विचिन्तयेत् ।
धिक्काष्ट रत्नैरिमि सर्वि बाला[12] भश्यन्ति[13] मात्मान निवर्तयन्तः ॥ ९६ ॥

[14]यमून कं ऋद्धिबलेन[15] वाच्य नगरं महन्त मभिनिर्मिणेयम्[16] ।
प्रतिमण्डितं वेश्मसहस्रकोटिभिर्विहार-उद्यानुपशोभितं च ॥ ९७ ॥

वापी नदीयो[17] मभिनिर्मिणेयम्[16] मारामपुष्पे[18] प्रतिमण्डितं च ।
10 प्राकारद्वारैरुपशोभितं च नारीनरैश्चाप्रतिमैरुपेतम् ॥ ९८ ॥

---

1) न्त B. O.

2) तत्र भवेत तेषाम् O. The others have तस्य for तेष.

3) भवेच्च K.

4) ये K.

5) प्राणा K. O.

6) थ्याः B. थ्यो Cb. टय O.

7) तस्मिं K. W. तस्मिन् A.

8) कामा A. W. कर्मा B. चामो Cb. यामो K. याम्र O.

9) मद्दिक् K.

10) पि A. B. K. W. O. पी Cb.

11) यु K.

12) चात्र Cb. वारा W.

13) वसंति B. भ्रंशिन्तु O.

14) The whole of the 97[th] verse and the first half of the next are left out in Cb.

15) वा K. W. म O.

16) °र्मिर्याणित्वा A. °र्मिनित्वा B. °र्मिणित्वा K. मनिर्मिलित्वा W. °र्मिणेयम् O.

17) या A. यो B. K. left out in W.

18) ष्प A. K. W. O. ष्पे B.

निर्माणु[1] कृत्वा इति तान्वदेय मा भायथा[2] हर्ष करोथ चैव ।
प्राप्ता भवन्तो नगरं वरिष्ठं प्रविश्य कार्याणि कुरुध्व[3] क्षिप्रम् ॥ ९९ ॥
उदग्रचित्ता भवथेह निर्वृता निस्तीर्ण[4] सर्वा अटवी अशेषतः ।
आश्वासनार्थाय वदेति वाचं कथं न[5] प्रत्यागत[6] सर्वि अस्या[7] ॥ १०० ॥
विश्रान्तरूपांश्च विदित्व सर्वान्समानयित्वा च पुनर्ब्रवीति । 5
आगच्छथ[8] मह्य शृणोथ भाषतो ऋद्धीमयं नगरमिदं विनिर्मितम् ॥ १०१ ॥
युष्माक खेदं च मया विदित्वा निवर्तनं मा च भविष्यतीति[9] ।
उपायकौशल्यमिदं ममेति जनेथ वीर्यं गमनाय द्वीपम् ॥ १०२ ॥
एमेव[10] हं भिक्षव देशिको वा प्रणायकः[11] प्राणिसहस्रकोटिनाम् ।
खिद्यन्त पश्यामि तथैव प्राणिनः क्लेशाण्डकोशं न प्रभोन्ति भेत्तुम् ॥ १०३ ॥ 10
ततो मया चिन्तितु एष अर्थो विश्रामभूता इमि[12] निर्वृतीकृताः[13] ।
सर्वस्य दुःखस्य निरोध[14] एष अर्हन्तभूमौ कृतकृत्य यूयम् ॥ १०४ ॥

1) णा A. Cb. K. W. णु B. अभिनिर्मिणित्वा O.

2) अभासं A. W. मा ना K. थ for था O., correctly.

3) ध्वं W. करोथ O., better.

4) All but O. absurdly वि for नि.

5) च B. नु in the others.

6) गत left out in A. W.

7) अस्मा A. W. अस्या, Skr. स्यात्, for अस्यु, Skr. स्युः.

8) ध्व K. था the rest but O.

9) °र्त्तन माखु न भेष्य K. तु for च O. The original r. perhaps मा सु, Skr. मा स्म.

10) एवमेवाहं A.

11) परि O.

12) इय B. K.

13) ता in all MSS.

14) निरोध O. नुबोध in all other MSS. But Kumârajîva seems to read निरोध.

समये यदा तु स्थित अत्र स्थाने पश्यामि यूयमकृत(1) तत्र(2) सर्वान्(3)।
तदा(4) च सर्वानिह संनिपात्य(5) भूतार्थमाख्यामि यथैष धर्मः ॥ १०५ ॥
उपायकौशल्यं(6) विनायकानां यन्यान देशेन्ति त्रयो महर्षी।
एकं हि यानं न(7) द्वितीयमस्ति विश्रामणार्थं तु द्वि यान देशिता(8) ॥ १०६ ॥
5 ततो वदेमि(9) अहमद्य भिक्षवो जनेथ वीर्यं परमं उदारम्।
सर्वज्ञज्ञानस्य कृतेन यूयं नैतावता निर्वृति काचि भोति(10) ॥ १०७ ॥
सर्वज्ञज्ञानं तु यदा स्पृशिष्यथ दशो बला ये च जिनान धर्माः।
द्वात्रिंशतीलक्षणरूपधारी बुद्धा भविल्वान भवेथ निर्वृताः ॥ १०८ ॥
एतादृशी देशन नायकानां विश्रामहेतोः प्रवदन्ति निर्वृतिम्।
10 विश्रान्त ज्ञात्वा न च निर्वृतीय(11) सर्वज्ञज्ञाने उपनेन्ति सर्वान्(12) ॥ १०९ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये(13) पूर्वयोगपरिवर्तो नाम सप्तमः ॥

---

1) कृत A. Cb. K. W. O. कृत B. To read वो for यूयम्?
2) In B. only.
3) सत्वान् Cb. O. has भूमौ for तत्र सर्वान्.
4) तथा A. B. W. ततो ह O.
5) ह्य B.
6) ल्य A. B. K. W. O. ल्यु Cb.
7) यश्च A. च B. न K. चे W. left out in Cb.
8) ता A. W. ते Cb. देशना B. K.
9) All but O. वदामी.
10) This latter half of the verse is left out in Cb. MSS. वि for चि.
11) या O.; should be य.
12) सर्वमिति B. सर्वानिति Cb. सर्वे O. उपनेति सर्वानिति K.
13) इति सद्धर्मपुंडरीके A. W. आर्यसद्धर्मपुंडरीकस्य धर्मपर्याय B. आर्य ˚पर्याये K. left out altogether in Ca. Cb.

# VIII.

अथ खल्वायुष्मान्पूर्णो[1] मैत्रायणीपुत्रो भगवतो ऽन्तिकादिदमेवंरूपमुपायकौशल्यज्ञानदर्शनं[2] संधाभाषितनिर्देशं[3] श्रुत्वैषां च महाश्रावकाणां व्याकरणं श्रुत्वेमां च पूर्वयोगप्रतिसंयुक्तां कथां श्रुत्वेमां च भगवतो वृषभतां[4] श्रुत्वाश्चर्यप्राप्तो ऽभूदद्भुतप्राप्तो[5] ऽभून्निरामिषेण च[6] चित्तेन[7] प्रीतिप्रामोद्येन स्फुटो ऽभूत्। महता च प्रीतिप्रामोद्येन महता च धर्मगौरवेणोत्थायासनाद्भगवतश्चरणयोः प्रणिपत्यैवं[8] चित्तमुत्पादितवान्[9]। आश्चर्यं भगवन्नाश्चर्यं 5 सुगत परमदुष्करं तथागता अर्हन्तः सम्यक्संबुद्धाः कुर्वन्ति य इमं नानाधातुकं लोकमनुवर्तयन्ते[10] बहुभिश्चोपायकौशल्यज्ञाननिदर्शनैः सत्त्वानां धर्मं देशयन्ति[11] तस्मिंस्तस्मिंश्च सत्त्वान्विलग्नानुपायकौशल्येन प्रमोचयन्ति। किमत्र भगवन्नस्माभिः शक्यं कर्तुम्। तथागत एवास्माकं जानीत आशयं पूर्वयोगचर्यां च। स भगवतः पादौ शिरसाभिवन्द्यैकान्ते स्थितो ऽभूद्भगवन्तमेव नमस्कुर्वन्ननिमिषाभ्यां च नेत्राभ्यां[12] संप्रेक्षमाणः॥ 10

---

1) र्णो B.

2) न Cb. K. W.

3) तं K.

4) भि Cb. K. भितं O.

5) भूत् in Cb. only. बभूव in O.

6) In Cb. only.

7) Left out in B. Cb. K. भाजनं is added in A W.

8) योर्नि K. पादयोः शिरसा O.

9) A. W. add उत्पादयामासुः; Cb. O. read °मास.

10) र्तन्ति B. Cb. K. र्तितिन्ति O..

11) A. adds स्म.

12) नयना B. K. °भिर्नेत्रैभि प्रे° O.

अथ खलु भगवानायुष्मतः पूर्णस्य मैत्रायणीपुत्रस्य चित्ताशयमवलोक्य सर्वावन्तं भिक्षुसंघमामन्त्रयते स्म । पश्यथ[1] भिक्षवो यूयमिमं श्रावकं पूर्णं मैत्रायणीपुत्रं यो मयास्य[2] भिक्षुसंघस्य धर्मकथिकानामग्र्यो[3] निर्दिष्टो बहुभिश्च भूतैर्गुणैरभिष्टुतो बहुभिश्च प्रकारैरस्मिन्मम शासने सद्धर्मपरिग्रहायाभियुक्तः[4] । चतसृणां पर्षदां संहर्षकः[5] समादापकः समुत्ते-
5 जकः संप्रहर्षको[6] ऽक्लान्तो धर्मदेशनया[7] ऽनलसस्य धर्मस्याख्याता ऽलमनुग्रहीता[8] सब्रह्मचारिणाम् । मुक्त्वा भिक्षवस्तथागतं नान्यः शक्तः पूर्णं[9] मैत्रायणीपुत्रमर्थतो वा व्यञ्जनतो वा पर्यादातुम् । तत्किं मन्यध्वे भिक्षवो ममैवायं सद्धर्मपरिग्राहक इति । न खलु पुनर्भि-[10]क्षवो युष्माभिरेवं द्रष्टव्यम् । तत्कस्य हेतोः । अभिजानाम्यहं भिक्षवो ऽतीते ऽध्वनि नवनवतीनां बुद्धकोटीनां यत्रानेनैव तेषां बुद्धानां भगवतां शासने सद्धर्मः परिगृहीतः । तद्य-
10 थापि नाम ममैतर्हि सर्वत्र चाग्र्यो[11] धर्मकथिकानामभूत्सर्वत्र[12] च शून्यतागतिंगतो[13] ऽभूत्सर्वत्र च प्रतिसंविदां लाभ्यभूत्सर्वत्र च बोधिसत्त्वाभिज्ञासु गतिंगतो ऽभूत् । सुविनिश्चितधर्मदेशको निर्विचिकित्सधर्मदेशकः परिशुद्धधर्मदेशकश्चाभूत् । तेषां च बुद्धानां भगवतां शासने यावदायुष्प्रमाणं[14] ब्रह्मचर्यं चरितवान्सर्वत्र च श्रावक इति संज्ञायते स्म । स

---

1) Some MSS. have पश्यध्वं.

2) स्य left out in A. W. घे O.

3) ग्रो B. K. O.

4) ग्रहायपभि K. ग्रहायाभि O.; the rest ग्रहाभि.

5) दर्शकः K.

6) Left out in Cb.

7) ये A. Cb. W. या B. O. नया K.

8) ता अ A. Cb. W. ताः अ B. ताल K.

9) र्णा A. K. W.

10) पुनरेवं भि B. K. युष्माभिर् wanting in O.

11) चैषाग्र्यो O.

12) Left out in K. W.

13) A. W. add यान; B. K. add योग. शून्यतापा ग O.; read °यां.

14) प्रमाणं in K. only. ष्कं O.; preferable.

खल्वनेनो[1]पायेनाप्रमेयाणामसंख्येयानां सत्त्वकोटीनयुतशतसहस्राणामर्थमकार्षीदप्रमेयानसंख्येयांश्च सत्त्वान्परिपाचितवाननुत्तरायां सम्यक्संबोधौ। सर्वत्र च बुद्धकृत्येन सत्त्वानां प्रत्युपस्थितो ऽभूत्सर्वत्र चात्मनो बुद्धक्षेत्रं परिशोधयति स्म सत्त्वानां च[2] परिपाकायाभि[3]युक्तो ऽभूत्। एषामपि भिक्षवो विपश्यिप्रमुखानां सप्तानां तथागतानां येषामहं सप्तम एष एवाग्र्यो धर्मकथिकानामभूत्[4]॥ 5

यदपि तद्भिक्षवो भविष्यत्यनागते ऽध्वन्यस्मिन्भद्रकल्पे चतुर्भिर्बुद्धैर्नू[5]नं बुद्धसहस्रं तेषामपि शासन एषैव[6] पूर्णो मैत्रायणीपुत्रो ऽग्र्यो धर्मकथिकानां भविष्यति सद्धर्मपरि[7]ग्राहकश्च भविष्यति। एवमनागते ऽध्वन्यप्रमेयाणामसंख्येयानां बुद्धानां भगवतां सद्धर्ममाधार[8]यिष्यत्यप्रमेयाणामसंख्येयानां सत्त्वानामर्थं करिष्यत्य[9]प्रमेयानसंख्येयांश्च सत्त्वान्परिपाचयिष्यत्यनुत्तरायां सम्यक्संबोधौ। सततसमितं चाभियुक्तो भविष्यत्यात्मनो बुद्धक्षेत्रप- 10 रिशुद्धये सत्त्वपरिपाचनाय[10]। स इमामेवंरूपां बोधिसत्त्वचर्यां परिपूर्या[11]प्रमेयैरसंख्येयैः कल्पैरनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। धर्मप्रभासो नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवानस्मिन्नेव बुद्धक्षेत्र उपपत्स्यते॥

---

1) अथ खलु तेषां तेनो A. W.

2) In K. only.

3) परिपाकायाभि B. K. O. परिपाकाभि Cb. विपाकाभि A. Ca. W.

4) From भूत् till धर्मकथिकानां in the following paragraph is left out in A.

5) बुद्धैर्भगवद्भिर्नूनं B. K.

6) वं Cb. ष एव O.. correctly.

7) प्रति Cb.

8) मागमि B. Cb. मारागयि K. This points to a r. आराधयिष्यति.

9) कृत्वा अप्र B. K.

10) पाकाय च B. K. O.

11) पूरयित्वा A. Cb. W. O. more original.

तेन खलु पुनर्भिक्षवः समयेन गङ्गा[1]नदीवालुकोपमानिसमास्त्रमकासाहस्रलोकधातव एकं[2] बुद्धक्षेत्रं भविष्यति । समं पाणितलजातं सप्तरत्नमयमपगतपर्वतं सप्तरत्नमयैः कूटागारैः परिपूर्णं भविष्यति । देवविमानानि चाकाशस्थितानि[3] भविष्यन्ति देवा अपि मनुष्यान्द्रक्ष्यन्ति मनुष्या अपि[4] देवान्द्रक्ष्यन्ति । तेन खलु पुनर्भिक्षवः समयेनेदं बुद्धक्षेत्रम-

5 पगतपापं भविष्यत्यपगतमातृग्रामं च । सर्वे च ते सत्त्वा औपपादुका भविष्यन्ति ब्रह्मचारिणो मनोमयैरात्मभावैः स्वयंप्रभा ऋद्धिमन्तो वैहायसंगमा वीर्यवन्तः स्मृतिवन्तः प्रज्ञावन्तः सुवर्णवर्णाः समुच्छ्रयैर्द्वात्रिंशद्भिर्महापुरुषलक्षणैः समलंकृतविग्रहाः । तेन खलु पुनर्भिक्षवः समयेन तस्मिन्बुद्धक्षेत्रे तेषां सत्त्वानां द्वावाहारौ भविष्यतः । कतमौ द्वौ । यदुत[6] धर्मप्रीत्याहारो ध्यानप्रीत्याहारश्च । अप्रमेयाणि चासंख्येयानि[7] बोधिसत्त्वकोटीनयुतशतसहस्रा-

10 णि भविष्यन्ति सर्वेषां[8] च महाभिज्ञाप्राप्तानां प्रतिसंविद्गतिंगतानां सत्त्वाववादकुशलानाम्[9] । गणनासमतिक्रान्ताश्चास्य श्रावका भविष्यन्ति महर्द्धिका महानुभावा अष्टविमोक्षध्यायिनः । एवमपरिमितगुणसमन्वागतं तद्बुद्धक्षेत्रं भविष्यति । रत्नावभासश्च नाम स कल्पो भविष्यति । सुविशुद्धा च नाम सा लोकधातुर्भविष्यति । अप्रमेयानसंख्येयांश्चास्य कल्पानायुष्प्रमाणं भविष्यति । परिनिर्वृतस्य च तस्य भगवतो[10] धर्मप्रभासस्य तथागतस्यार्हतः

---

1) From गङ्गा till समयेनेदं left out in Cb.

2) वं B.

3) स्थानि A. W.

4) मनुष्याश्च B.

5) Left out in Cb. MSS. except K. add कायैः. The words वीर्य° till °ग्रहाः wanting in O.

6) यदितं Cb., meant यदिदं. कतमौ द्वौ । यदुत wanting in O.

7) चास्यासं in K.

8) O. has सर्वे च and instead of the following Genitives नि. Read सर्वे च and °प्ताः, °गताः and लाः.

9) सत्त्वानामव A. W.

10) O. has तथागतस्य धर्म°; the following words धर्मप्र° तथा° and सद् are wanting in O.

सम्यकसंबुद्धस्य सद्धर्मश्चिरस्थायी भविष्यति। रत्नमयैश्च स्तूपैः सा लोकधातुः स्फुटा भविष्यति। एवमचिन्त्यगुणसमन्वागतं भिक्षवस्तस्य भगवतस्तद्बुद्धक्षेत्रं भविष्यति॥

इदमवोचद्भगवान्। इदं वदित्वा सुगतो ह्यथापरमेतदुवाच शास्ता॥ [1]

शृणोथ मे भिक्षव [2] एतमर्थं यथा चरी मह्य सुतेन [3] चीर्णा।

उपायकौशल्यसुशिक्षितेन [3] यथा च चीर्णा इयं [4] बोधिचर्या॥ १॥

हीनाधिमुक्ता इम [5] सत्व ज्ञात्वा उदारयाने च समुत्त्रसन्ति।

ततु [6] श्रावका भोन्तिमि बोधिसत्त्वाः प्रत्येकबोधिं च निदर्शयन्ति॥ २॥

उपायकौशल्यशतैरनेकैः परिपाचयन्ति [7] बहुबोधिसत्त्वान्।

एवं च भाषन्ति वयं हि श्रावका दूरे वयं उत्तममग्रबोधिया [8]॥ ३॥

एतां चरिं तेषनुशिक्षमाणाः [9] परिपाकु [10] गच्छन्ति हि [11] सत्त्वकोट्यः।

हीनाधिमुक्ताश्च कुसीदरूपा अनुपूर्व ते सर्वि भवन्ति बुद्धाः॥ ४॥

---

1) हि wanting in O.

2) वः W.

3) तान O.

4) यं A. चरन्ति इम बोधिचारिकाम् O.

5) मुक्तानिमिमेव A. W. मुक्तिमिति सर्व B. मुक्तानिम सर्व Cb. मुक्तानिमि सर्व K. मुक्ता इम ज्ञात्व सत्वा O.

6) तत्र A. W. ततः B. K. न तु Cb. ततु O.

7) न्ति Cb. K. O. न्ते the rest.

8) All but O. धये. The *m* after उत्तम to avoid hiatus.

9) All but O. ते अ.

10) क B. K. W. O.

11) ह O.

अज्ञानचर्या च[1] चरन्ति एते[2] वयं खलु[3] श्रावक अल्पकृत्याः।
निर्विष्ण सर्वासु च्युतोपपत्तिषु[4] स्वकं च क्षेत्रं परिशोधयन्ति ॥ ५ ॥

सरागतामात्म निदर्शयन्ति सदोषतां चापि समोहतां च।
दृष्टीविलग्नांश्च विदित्व सत्वांस्तेषां पि दृष्टीं समुपाश्रयन्ति ॥ ६ ॥

5 एवं चरन्तो[5] बहु मह्य श्रावकाः सत्वानुपायेन विमोचयन्ति[6]।
उत्पादु[7] गच्छेयु नरा अविद्वसू सचेव सर्वं चरितं प्रकाशयेत् ॥ ७ ॥

पूर्णो अयं श्रावक मह्य भिक्षवश्चरितो पुरा बुद्धसहस्रकोटिषु।
तेषां च सद्धर्म परिग्रहेषीद्बौद्धं[8] इदं ज्ञान गवेषमाणो[9]: ॥ ८ ॥

सर्वत्र चैषो अभु अग्रश्रावको बहुश्रुतश्चित्रकथी विशारदः।
10 संहर्षकश्चा[10] अकिलासि नित्यं सद बुद्धकृत्येन च प्रत्युपस्थितः ॥ ९ ॥

महाअभिज्ञासु सदा गतिंगतः प्रतिसंविदानां च अभूषि लाभी।
सत्वान चो[11] इन्द्रियगोचरज्ञो धर्मं च देशेति[12] सदा विशुद्धम् ॥ १० ॥

सद्धर्मश्रेष्ठं च प्रकाशयन्तः परिपाचयी सत्व सहस्रकोट्यः।
अनुत्तरस्मिन्निह अग्रयाने क्षेत्रं स्वकं श्रेष्ठु विशोधयन्तः ॥ ११ ॥

---

1) आज्ञातचर्याय O.

2) ये ते O.

3) किल O.; preferable.

4) सत्वाभि चुतोपपत्तिभि° O.

5) तं A. W. ता B. ते Cb. तो K.

6) न्त A. W. च B. Cb. K. O.

7) उत्पादु A. B. उत्पाद् Cb. O. उत्पादुर् K. उपादु W. To r. उन्माद? Cp. English translation.

8) इं A. W. मं B. Cb. K.

9) णो A. B. णाः Cb. णा K. नो W. णाः O.

10) श्च K. correctly.

11) च A. W. O. correctly.

12) सि O.

अनागते चापि[1] तथैव[2] अध्वे पूरेष्यती[3] बुद्धसहस्रकोट्यः।
सद्धर्मश्रेष्ठं च परिग्रहीष्यति स्वकं च क्षेत्रं परिशोधयिष्यति॥१२॥
देशेष्यती[3] धर्म सदा विशारदो उपायकौशल्यसहस्रकोटिभिः।
बहूंश्च सत्त्वान्परिपाचयिष्यति सर्वज्ञज्ञानस्मि अनास्रवस्मिन्॥१३॥
सो[4] पूज कृत्वा नरनायकानां सद्धर्मश्रेष्ठं सद धारयित्वा[5]।
भविष्यती[3] बुद्ध स्वयंभु लोके धर्मप्रभासो दिशतासु विश्रुतः॥१४॥
क्षेत्रं च तस्य[6] सुविशुद्ध भेष्यती[7] रत्नान सप्तान सदा विशिष्टम्।
रत्नावभासश्च[8] स कल्पु भेष्यती[7] सुविशुद्ध सो भेष्यति लोकधातुः॥१५॥
बहुबोधिसत्त्वान सहस्रकोट्यो महाभिज्ञासु[9] सुकोविदानाम्।
येहि[10] स्फुटो भेष्यति लोकधातुः सुविशुद्ध शुद्धेहि महर्द्धिकेहि॥१६॥ 10
अथ श्रावकाणां पि सहस्रकोट्यः संघस्तदा भेष्यति नायकस्य।
महर्द्धिकानष्टविमोक्षध्यायिनां प्रतिसंविदासू च गतिंगतानाम्॥१७॥
सर्वे च सत्त्वास्तहि बुद्धक्षेत्रे शुद्धा भविष्यन्ति च ब्रह्मचारिणः।
उपपादुकाः सर्वि सुवर्णवर्णा द्वात्रिंशतीलक्षणरूपधारिणः॥१८॥

---

1) चैव B. K. अपि O.
2) अर्थे K. काले O.
3) ते O.
4) स A. W. O.
5) यिष्यति B. K.
6) तस्य A. Cb. O. K. W. तसो B. तस्यो Ca.
7) ति A. W. O. ती B. Cb. K.
8) प्र for अव O.
9) सु left out in Cb.
10) की K. भि for हि O. throughout.

आहारसंज्ञा च[1] न तत्र भेष्यति अन्यत्र धर्मे रति ध्यान[2]प्रीतिः।
न मातृग्रामो ऽपि च तत्र भेष्यति न चाप्यपाया[3]न च दुर्गतीभयम् ॥ १९ ॥
एतादृशं क्षेत्रवरं भविष्यति पूर्णस्य संपूर्णगुणान्वितस्य।
आकीर्ण सत्त्वेहि सुभद्रकेहि यत्किंचिमात्रं पि[4] इदं प्रकाशितम्[5] ॥ २० ॥

5 अथ खलु तेषां द्वादशानां वशीभूतशतानामेतदभवत्। आश्चर्यप्राप्ता[6]: स्माद्भुतप्राप्ता:[7] स्म[8]। सचेदस्माकमपि भगवान्यथेमे[9] ऽन्ये महाश्रावका व्याकृता[10] एवमस्माकमपि तथागतः पृथक्पृथग्व्याकुर्यात्। अथ खलु भगवांस्तेषां महाश्रावकाणां चेतसैव चेतः परिवितर्कमाज्ञायायुष्मन्तं महाकाश्यपमामन्त्रयते[11] स्म। इमानि[12] काश्यप द्वादश वशीभूतशतानि येषामहमेतर्हि संमुखीभूतः सर्वाण्येतान्यहं काश्यप द्वादश वशीभूतशतान्यनन्तरं व्याकरोमि।
10 तत्र काश्यप कौण्डिन्यो भिक्षुर्महाश्रावको द्वाषष्टीनां बुद्धकोटीनयुतशतसहस्राणां परेण परतरं समन्तप्रभासो[13] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्।

1) न च B. Cb.
2) MSS. ज्ञान for ध्यान O.
3) ती न चैवपायान K.
4) पि A. W. O. स्यि B. Cb. left out in K.
5) प्रकाश्ययति A. W. प्रकाशितं B. K. O. प्रकाशितमिति Cb.
6) प्ता in all MSS. स्म badly for स्मः throughout in all.
7) स्रा B. स्म अ° O.; better.
8) अद्भुतप्राप्ताः A. W. °प्ता स्म K. O. left out altogether in B. Cb.
9) इमे left out in A. W.
10) From एव till आयुष्मंतं left out in A.
11) यामास A. W. यति स्म O.
12) महा is added in K.
13) प्रभो O. So too in the sequel. Cp. vs. 22.

तत्र काश्यपानैनैकेन[1] नामधेयेन पञ्च तथागतशतानि भविष्यन्ति। अतः[2] पञ्च महाश्रावकशतानि सर्वाण्यनन्तरम्[3]नुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते सर्वाण्येव समन्तप्रभासनामधेयानि भविष्यन्ति। तद्यथा गयाकाश्यपो नदीकाश्यप उरुबिल्वाकाश्यपः कालः कालोदाय्य[4]निरुद्धो[5] रेवतः कप्फिणो[6] बक्कुल[7]शुन्दः स्वागत इत्येवंप्रमुखानि पञ्च वशीभूतशतानि॥ 5

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

कौण्डिन्यगोत्रो मम श्रावको ऽयं तथागतो भेष्यति लोकनाथः।

अनागते ऽध्वानि अनन्तकल्पे विनेष्यते प्राणिसहस्रकोट्यः॥ २१॥

समन्तप्रभो नाम जिनो भविष्यति क्षेत्रं च तस्यं[8] परिशुद्ध भेष्यति।

अनन्तकाल्प[9]स्मि अनागते ऽध्वनि दृष्ट्वान बुद्धान्बहु[10]त्वो ह्यनन्तान्॥ २२॥ 10

प्रभास्वरो बुद्धबलेनुपेतो विघुष्टशब्दो दशसु दिशासु।

पुरस्कृतः प्राणिसहस्रकोटिभिर्देशेष्यतो[11] उत्तममग्रबोधिम्॥ २३॥

ते चि बोधिसत्त्वा अभियुक्तरूपा विमानश्रेष्ठान्यभिरुह्य चापि।

---

1) एव added in Cb. K. एकेन left out in Cb.

2) ततः Cb.

3) ण्यनन्तरानन्तर K. ण्यनन्तरानन्तरेण O., but below after °शतानि it repeats सर्वाण्यनन्तरेणानुत्तरां स° सम्बोधिमभिसंभोत्स्यन्ति.

4) द् A. Cb. MSS. but O. add उदाय्य.

5) नु for नि in O.

6) स्फि B. Cb. K. फि W. प्फि A. प्फिनो O.

7) कु A. W.

8) तस्या A. K. W. तस्यो B. तस्य Cb. O.

9) ल्पे A. W.

10) बुद्धा A. B. Cb. बुद्धां K. W.

11) ते O.

विकुर्वन्त तत्र[1] अनुचिन्तयन्ति विशुद्धशीला सद साधुवृत्तयः[2] ॥ २४ ॥

श्रुत्वान धर्म[3] द्विपदोत्तमस्य अन्यानि क्षेत्राण्यपि चो सदा ते[4] ।

व्रजन्ति[5] ते बुद्धसहस्रकोटिकाः पूजां च तेषां विपुलां करोन्ति[6] ॥ २५ ॥

क्षणेन ते चापि तदास्य क्षेत्रं प्रत्यागमिष्यन्ति विनायकस्य ।

5 प्रभासनामस्य नरोत्तमस्य[7] चर्याबलं तादृशकं भविष्यति ॥ २६ ॥

षष्टिसहस्रा[8] परिपूर्णकल्पा[9]नायुष्प्रमाणं[10] सुगतस्य तस्य ।

ततश्च भूयो द्विगुणेन तायिनः परिनिर्वृतस्येह स धर्म[11] स्थास्यति ॥ २७ ॥

प्रतिरूपकश्चास्य भविष्यते पुनस्त्रिगुणं ततो एत्तकमेव कालम्[12] ।

सद्धर्मभ्रष्टे तद तस्य तायिनो दुःखिता[13] भविष्यन्ति नरा मरू च ॥ २८ ॥

10 जिनान तेषां[14] समनामकानां समन्तप्रभाणां पुरुषोत्तमानाम् ।

परिपूर्णपञ्चाशतनायकानां एते भविष्यन्ति परंपराय ॥ २९ ॥

---

1) तत्र A. तत्रो B. K. W. तत्रा Cb. विकुर्वन्ति तत्र अनुचिन्तयन्ता O.

2) वृत्ताः A. Cb. W. °वृत्तयः B. K. The 2[d] pāda wanting in O.

3) धर्म A. W. शब्दं B. शीलं Cb. शब्दां K.

4) क्षेत्राणि अन्यानि च नित्यकालं B. K. अन्यत्र क्षेत्रेषु सदा व्रजन्ति O.

5) MSS. पश्यन्ति; O. wholly different.

6) करिंषु B. करित्सु K. करोन्ति O.

7) समन्तप्रभानां पुरुषोत्तमानां O.

8) षष्टिः B. K.

9) स्रं A. स्रा K. O.

10) ल्पा K., better.

11) सद्धर्म A. B. Cb. O. सद्धर्मु K. सधर्म W. To r. सुधर्म.

12) द्विगुणं तत एकमेव कल्पान् A. त्रिगुणं तत्रो एत्तकमेक कल्पान् B. तृगुणं तदा एतेकमेव कालम् Cb. त्रिगुणात्ततो एत्तकमेव कल्पान् K. द्विगुणं ततो एकमेव कल्पान् W. द्विगुणे ततो एत्तककल्पमेव O.

13) दुःखी K. To r. दुखिता.

14) जिनस्य तस्य A. K. W. जि° तस्यो B. जि° मे स्य Cb. Our reading is that of O.

सर्वेष[1] एतादृशकाश्च व्यूहा ऋद्धीबलं[2] च तथ बुद्धतेजम् ।
गणाश्च[3] सद्धर्म[4] तथैव ईदृशः सद्धर्मस्थानं च समं भविष्यति ॥ ३० ॥
सर्वेषमेतादृशकं[5] भविष्यति नामं[6] तदा लोकि सदेवकस्मिन् ।
यथा मया पूर्वि प्रकीर्तितासीत्समन्तप्रभासस्य नरोत्तमस्य[7] ॥ ३१ ॥
परंपरा एवं[8] तथान्यमन्यं ते व्याकरिष्यन्ति हितानुकम्पी । 5
अनन्तरायं[9] मम अद्य भेष्यति यथैव शासाम्यहु[10] सर्वलोकम् ॥ ३२ ॥
एवं खु[11] एते त्वमिहाद्य काश्यप धारेहि पञ्चाशतनूनकानि ।
वशिभूत ये चापि ममान्यश्रावकाः कथयाहि[12] चान्येष्वपि श्रावकेषु[13] ॥ ३३ ॥

अथ खलु तानि पञ्चार्हच्छतानि भगवतः संमुखमात्मनो व्याकरणानि श्रुत्वा[14] तुष्टा उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाता येन भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य 10

---

1) सर्वेष A. K. W. O. सर्वे त B. मे स्य Cb.

2) A. W. add तस्य.

3) णा A.

4) सद्धर्मु K.

5) स्य A. W. ष ए O.

6) All but O. शब्दस्तदा; O. has एतादृशनामधेयं भविष्यते; our r. conjectural.

7) °प्रभासस्य नरोत्त A. B. K. W. °प्रभस्य नरोत्त Cb. O.

8) एक K. राय तथ अ O. The original Prākṛt परंपराए (= °राय) misunderstood; we have to follow O

9) अनुत्तरायां A. Cb. W.

10) भाषाम्यहु K. शास्ताम्यहं O.

11) खलु A. W. ख B. खु Cb. K. तु O.

12) य A. B. याहि O. येषि the rest.

13) Cb. adds इति; K. reads °केभ्य इति; O. ष च श्रावकानाम्.

14) अनुत्तरायां सम्यकसंबोधौ put in before श्रुत्वा in A. W., and after it in B. K. O., but left out in Cb.

भगवतः पादयोः शिरोभिर्निपत्यैवमाहुः[1]। अत्ययं वयं[2] भगवन्देशयामो यैरस्माभिर्भगवन्नेवं सततसमितं चित्तं परिभावितमिदमस्माकं[3] परिनिर्वाणं। परिनिर्वृता वयमिति यथापीदं भगवन्नव्यक्ता अकुशला अविधिज्ञाः। तत्कस्य हेतोः। यैर्नाम[4]स्माभिर्भगवंस्तथागतज्ञाने ऽभिसंबोद्धव्ये[5] एवंरूपेण परीत्तेन ज्ञानेन परितोषं गताः स्म॥

5 तद्यथापि नाम भगवन्कस्यचिदेव[6] पुरुषस्य कंचिदेव मित्रगृहं प्रविष्टस्य[7] मत्तस्य वा सुप्तस्य वा स मित्रो ऽनर्घमणिरत्नं वस्त्रान्ते बध्नीयादस्येदं[8] मणिरत्नं भवत्विति। अथ खलु भगवन्स[9] पुरुष उत्थायासनात्प्रक्रामेत्[10]। सो ऽन्यं जनपदप्रदेशं प्रपद्येत[11]। स तत्र कृच्छ्रप्राप्तो भवेदाहारचीवरपर्येष्टिहेतोः कृच्छ्रमापद्येत[12]। महता च व्यायामेन कथंचित्कंचिदाहारं प्रतिलभेत तेन च संतुष्टो भवेदात्तमनस्कः प्रमुदितः[13]। अथ खलु[14] भगवंस्तस्य 10 पुरुषस्य स[15] पुराणमित्रः पुरुषो येन तस्य तदनर्घं मणिरत्नं वस्त्रान्ते बद्धं स तं पुनरेव

---

1) भिः प्रणिपत्य K.

2) In A. O. only.

3) तमस्मकं B. तामिति अस्माकं Cb.

4) मा left out in A. K

5) धये A. W. द्धव्ये B. द्धव्य Cb. धव्ये K. ज्ञानमभिसंबोद्धव्यमभविष्यते (r. ते) वयमेवद्रू° O.

6) In O. the construction of the following lines quite different; instead of the Genitive case it has the Nomin. case कश्चिदेव पुरुषः etc.

7) स्य left out in K.

8) K. adds महा.

9) स left out in K.

10) क्रा B. K. क्र W. O. क्रम्य Cb. left out in A.

11) द्यते A. W. द्येत B. Cb. प्रतिपद्येत K.

12) द्येत् K. left out in Cb.

13) In A. W. only.

14) Left out in B. Cb. K. O.

15) In K. O. only.

पश्येत्तमेवं वदेत् । किं त्वं भोः पुरुष कृच्छ्रमापद्यसे[1] आहारचीवरपर्येष्टिहेतोर्यदा[2] यावद्भोः पुरुष मया तव सुखविहारार्थं[3] सर्वकामनिवर्तकमनर्घ्यं मणिरत्नं वस्त्रान्त उपनिबद्धम् । निर्यातितं ते भोः पुरुष ममैतन्मणिरत्नं । तदेवमुपनिबद्धमेव भोः पुरुष वस्त्रान्ते मणिरत्नं । न च नाम त्वं भोः पुरुष प्रत्यवेक्षसे । किं मम बद्धं केन वा बद्धं को हेतुः[4] किंनिदानं वा बद्धम् । एतद्बालजातीयस्त्वं[5] भोः पुरुष यस्त्वं कृच्छ्रेणाहारचीवरं पर्येषमाणस्तुष्टिमापद्यसे । 5
गच्छ त्वं भोः पुरुषैतन्मणिरत्नं प्रहाय[6] महानगरं गत्वा परिवर्तयस्व । तेन च धनेन सर्वाणि धनकरणीयानि कुरुष्वेति ॥

एवमेव भगवन्नस्माकमपि तथागतेन पूर्वमेव बोधिसत्त्वचर्यां चरता सर्वज्ञताचित्तान्युत्पादितान्यभूवन् तानि च वयं भगवन्न जानीमो न बुध्यामहे । ते वयं भगवन्नर्हद्भूमौ निर्वृताः स्म इति संजानीमः । वयं[7] कृच्छ्रं जीवामो यद्वयं[8] भगवन्नेवं परीत्तेन ज्ञानेन परि- 10
तोषमापद्यामः[9] सर्वज्ञज्ञानप्रणिधानेन सदाविनष्टेन ते वयं भगवंस्तथागतेन संबोध्यमानाः । मा यूयं भिक्षव एतन्निर्वाणं मन्यध्वं[11] संविद्यन्ते भिक्षवो युष्माकं संताने कुशलमूलानि यानि मया पूर्वं परिपाचितानि । एतर्हि च ममैवेदमुपायकौशल्यं धर्मदेशनाभिलापेन यद्यूयमेत-

---

1) सि A. W. O. से B. Cb. K.

2) ता B. K. यदिदानीं O.

3) सर्वसुखफासवि O. Cp. Pāli *phāsu*.

4) कस्य हेतोः B. K. कस्य हेतोर्वा O.; a better reading.

5) ज्ञातिकोसि O.

6) Rather गृहाय, i. e. having taken.

7) बहे A. वयं हे W. left out in B. Cb. K. O.

8) ये व O.

9) महे A. W.

10) एवं परिणिर्वाणं मन्यध्वं K. मन्यथ O. मन्यधे the rest.

11) From से° till मन्यधं before एवं च left out in A.

12) यद्द wanting in all but O.

किं निर्वाणमिति मन्यथे। एवं च वयं भगवता संबोधयित्वाद्यानुत्तरायां[1] सम्यक्संबोधौ व्याकृताः॥

अथ खलु तानि पञ्चवशीभूतशतान्याज्ञातकौण्डिन्यप्रमुखानि तस्यां वेलायामिमा गाथा अभाषन्त[2]॥

5 हृष्टा प्रहृष्टा स्म[3] श्रुणित्व एतां आश्वासनामीदृशिकामनुत्तराम्।
[4]यं व्याकृता स्म[5] परमाग्रबोधये नमो ऽस्तु ते नायक नन्तचक्षुः[6]॥ ३४॥
देशेमके अत्ययु तुभ्यमन्तिके यथैव बाला अविदू अज्ञानकाः।
यं वै[7] वयं निर्वृतिमात्रकेण परितुष्ट आसीत्सुगतस्य शासने॥ ३५॥
यथापि पुरुषो भवि कश्चिदेव प्रविष्ट स स्यादिह[8] मित्रशालाम्।
10 मित्रं च तस्य[9] धनवन्तमाढ्यं सो तस्य दद्याद्बहु खाद्यभोज्यम्॥ ३६॥
संतर्पयित्वान च भोजनेन अनेकमूल्यं रतनं स दद्यात्।
बद्धान्तरीये[10] वसनान्ति ग्रन्थिं दत्वा च तस्येह भवेत तुष्टः॥ ३७॥
[11]सो चापि प्रक्रान्तु भवेत बालो उत्थाय सो ऽन्यं नगरं व्रजेत।
सो कृच्छ्रप्राप्तः कृपणो गवेषी आहारु पर्येषति खिद्यमानः॥ ३८॥

---

1) सम्बोध्यानु B. K.
2) षन्ते स्म A. W. अभाषुः O.
3) तुष्टाश्च Cb. हृष्टाः प्रहृष्टा स्म K. O.
4) यां Cb. यं Prākṛt for यत्.
5) स्म A. Cb. W. O. स्मै B. स्मो K.
6) भगवन्ननंत A. Cb. W. O. नायक अनन्त B. नायका नन्त K.
7) यंद्वी A. W. यथै B. यचे Cb. यं वै K. यं for यत्.
8) प्रवृष्टं अस्या K. प्रविष्टक स्या° O.
9) तस्य A. Cb. W. O. तस्या B. तस्यो K. मित्रश्च तस्य धनवान्मु आढ्य स O.
10) बन्धित्वा च अन्तरिमे निवासने ग्रन्थीनि कृत्वा च भ° O. बद्धोऽन्तरीये the rest.
11) स A. B. K. W. O. सो Cb.

पर्येषितं[1]भोजननिर्वृतः स्यादहकं उदारं ग्रविचिन्तयन्तः ।
तं[2] चापि रत्नं हि भवेत विस्मृतं बह्वान्तरीये स्मृतिरस्य नास्ति ॥ ३९ ॥
तमेव सो पश्यति पूर्वमित्रो येनास्य दत्तं रतनं गृहे स्वे ।
तमेन सुष्ठू परिभाषयित्वा दर्शेति रत्नं वसनान्तरस्मिन् ॥ ४० ॥
दृष्ट्वा च सो परमसुखैः[3] समर्पितो रत्नस्य तस्यो ग्रनुभाव ईदृशः[4] । 5
महाधनी कोशबली च सो भवेत्समर्पितः कामगुणेहि पञ्चहि[5] ॥ ४१ ॥
एमेव[6] भगवन्[7]वयमेवरूपमज्ञानमाना प्रणिधानपूर्वकम् ।
तथागतेनैव इदं हि दत्तं भवेषु[8] पूर्वेष्विह दीर्घरात्रम् ॥ ४२ ॥
वयं च भगवन्निह[9] बालबुद्धयो ग्रज्ञानका स्म[10] सुगतस्य शासने ।
निर्वाणमात्रेण वयं हि तुष्टा न[11] उत्तरी प्रार्थयि नापि चिन्तयी ॥ ४३ ॥ 10

---

1) पर्यष्यतां K. पर्यतां A. B. पर्येषतां Cb. पर्येषातं W. पर्येषितं O.

2) Prākṛt for तत्.

3) खैः Cb. One would expect सुखा, Instrumental case, singular.

4) शी A. K. W. एद O.

5) षु °भिः A. W. हि °हि B. षु °षु Cb. K. भिः पञ्चभि O.

6) एव A. B. W.

7) A. W. add तायिन् B. K. have it for भगवन्. Here and vs. ४३ भग equal to once long syllable.

8) स A. W.

9) संबोधिनिहि A. नाथा इह B. भगवन्निह Cb. O. संबोधिनिह W. नाथो इह K.

10) स्म A. O. स्मो the others.

11) च A. W.

वयं च संबोधित लोकबन्धुना न एष एतादृश[1] काचि निर्वृतिः ।
ज्ञानं प्रणीतं पुरुषोत्तमानां या निर्वृतीयं[2] परमं च सौख्यम् ॥ ४४ ॥
इदं चुदार विपुलं बहुविधं ग्रनुत्तरं व्याकरणं च श्रुत्वा ।
प्रीतो[3] उदग्रा विपुला स्म जाताः[4] परस्परं व्याकरणाय नाथ[5] ॥ ४५ ॥

5 इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये पञ्चभिक्षुशतव्याकरणपरिवर्तो नामाष्टमः ॥

---

1) शि Cb. K. प्रोदृशिकयान नि O.

2) तिस्सा O. Have we to r. सा for या?

3) त्या Cb. त्य K. तिरु° O.

4) ता A. B. Cb. W. ताः K.

5) पो ना इति Cb. इति also in other MSS.

# IX.

अथ खल्वायुष्मानानन्दस्तस्यां वेलायामेवं चिन्तयामास । अप्येव नाम वयमेवंरूपं[1] व्याकरणं प्रतिलभेमहि । एवं च[2] चिन्तयित्वानुविचिन्त्य[3] प्रार्थयित्वोत्थायासनाद्भगवतः[4] पादयोर्निपत्य[5] । आयुष्मांश्च राहुलो ऽप्येवं चिन्तयित्वानुविचिन्त्य प्रार्थयित्वा भगवतः पादयोर्निपत्यैवं वाचमभाषत[6] । अस्माकमपि तावद्भगवन्नवसरो भवत्वस्माकमपि ताव-त्सुगतावसरो भवतु । अस्माकं हि भगवान्पिता जनको लयनं त्राणं च । वयं हि[7] भग- 5 वन्सदेवमानुषासुरे लोके ऽतीव चित्रीकृताः । भगवतश्चैते पुत्रा भगवतश्चोपस्थायका भगवतश्च धर्मकोशं धारयन्तीति । तन्नाम भगवन्क्षिप्रमेव प्रतिरूपं भवेद्यद्भगवानस्माकं[8] व्याकुर्यादनुत्तरायां सम्यक्संबोधौ ॥

[9]अन्ये च द्वे भिक्षुसहस्रे सातिरेके शैक्षाशैक्षाणां श्रावकाणामुत्थायासनेभ्य एकांसमु-त्तरासङ्गं[10] कृत्वाञ्जलिं प्रगृह्य भगवतो ऽभिमुखं भगवन्तमुल्लोकयमाने तस्थतुरेतामेव[11] चिन्ता- 10

1) वयमप्येवं B. K. O.

2) A. adds वि

3) अनुविचिन्त्य left out in Cb. K.

4) प्रार्थ्य Ca. K.

5) शिरसा निपतित O. In Ca. added एत्र वाचमभाषत.

6) षते स्म A. Cb. W. वाचं भाषते स्म B. K.

7) वयमपि B. K.

8) यद् wanting in all but O.

9) This whole paragraph is left out in Cb. रेकं शैक्षाणां श्रावकाणां उ° O. ते ते चो° the rest, but cp. below after vs. 11.

10) संगानि B. K. O.

11) नास्तस्थु O.

मनुविचिन्तयमाने यद्वुतेदमेव बुद्धज्ञानम्। अप्येव नाम वयमपि व्याकरणं प्रतिलभेमह्य-नुत्तरायां सम्यक्संबोधाविति[1]॥

अथ खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म। भविष्यसि त्वमानन्दानागते ऽध्वनि सागरवरधर[2]बुद्धिविक्रीडिताभिज्ञो नाम तथागतो ऽर्हन्सम्यक्संबु[3]द्धो विद्याचरणसंपन्नः 5 सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। द्वाषष्टीनां बुद्ध[4]कोटीनां सत्कारं कृत्वा गुरु[5]कारं माननां पूजनां[6] च कृत्वा तेषां बुद्धानां भगवतां सद्ध[7]र्मं धारयित्वा शासनपरिग्रहं च कृत्वानुत्तरां सम्यक्संबोधिमभिसंभो-त्स्यसि। स त्वमानन्द अनुत्तरां सम्यक्संबुद्धः समानो विंशतिगङ्गानदीवालुका-समा[9]नि बोधिसत्त्वकोटीनयुतशतसहस्राणि परिपाचयिष्यस्यनुत्तरायां सम्यक्संबोधौ। 10 समृ[10]द्धं च ते बुद्धक्षेत्रं भविष्यति वैडूर्यमयं च[11]। अनवनामितवैजयन्ती च नाम सा[12] लोकधातुर्भविष्यति। मनोज्ञशब्दाभिगर्जितश्च नाम स कल्पो भविष्यति। अपरि-मितांश्च कल्पांस्तस्य भगवतः सागरवरधरबुद्धिविक्रीडिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यायुष्प्रमाणं भविष्यति येषां कल्पानां न शक्यं गणनया पर्यन्तो ऽधिगन्तुम्।

---

1) वित्यर्थः A.

2) सागरवरबुद्ध O. So too in the sequel.

3) B. K. add लोके.

4) कोटीनियुतशतसहस्राणां B. K.

5) A. W. add कृत्वा.

6) पूजनामर्थनामवचायनां Cb. पूजनमपचयनां O. च is put in after तेषां in K. च कृत्वा left out in O.

7) र्प A. B. Cb. W. र्मं K.

8) Sic O. In the other MSS. अभिसंभोत्स्यसि स त्वमानन्द wanting.

9) वालिकोपमा Ca. O. वालुकोपमा Cb.

10) संवृद्धं O.

11) Left out in K. O.

12) तस्य स B. K.

तावदसंख्येयानि तानि कल्पकोटीनयुतशतसहस्राणि तस्य भगवत आयुष्प्रमाणं भविष्यति यावच्चानन्द तस्य भगवतः सागरवरधरबुद्धिविक्रीडिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यायुष्प्रमाणं भविष्यति । तद्विगुणं परिनिर्वृतस्य सद्धर्मः स्थास्यति । यावांस्तस्य भगवतः सद्धर्मः स्थास्यति[1] तद्विगुणं सद्धर्मप्रतिरूपकं स्थास्यति । तस्य खलु पुनरानन्द सागरवरधरबुद्धिविक्रीडिताभिज्ञस्य तथागतस्य दशसु दिक्षु बहूनि गङ्गानदीवालुकासमानि[3] बुद्धकोटीनयुतशतसहस्राणि वर्णं भाषिष्यन्ति[2] ॥ 5

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

आरोचयामी अहु भिक्षुसंघे आनन्दभद्रो मम धर्मधारकः[4] ।
अनागतेऽध्वानि जिनो भविष्यति पूजित्व[5] षष्टिं सुगतान[6] कोट्यः ॥ ॥

नामेन सो सागरबुद्धिधारी[7] अभिज्ञप्राप्तो इति तत्र विश्रुतः । 10
परिशुद्धक्षेत्रस्मि सुदर्शनीये अनोनतायां ध्वजवैजयन्त्याम्[8] ॥ २ ॥

तहि बोधिसत्त्वा यथ गङ्गवालिकास्ततश्च भूयो परिपाचयिष्यति ।
महर्द्धिकश्च स जिनो भविष्यति दशदिशे[9] लोकविघुष्टशब्दः[10] ॥ ३ ॥

---

1) This passage is left out in Cb., but more amplified in O.

2) कोपमा A. B. Cb. W. कासमा K. वालिकासमा O.

3) न्त इति Ca. K. गुणान्प्रकाशयिष्यन्ति added in O.

4) धर्मभाणकः B. Ca. K.

5) से Cb. K.

6) O. has द्वाषष्टि जिनान, agreeing with the foregoing prose.

7) रको O.

8) अनुनामित सो ध्वजवैजयन्तः O.

9) दि A. B. Cb. K. W. द्दि Ca. शदि O.

10) लोके O.

अमिते च तस्यायु[1] तदा भविष्यति यः[2]स्थास्यते लोकहितानुकम्पकः।
परिनिर्वृतस्यापि जिनस्य[3] तायिनो द्विगुणं च[4] सद्धर्मु स तस्य स्थास्यति ॥ ४ ॥
प्रतिरूपकं तद्द्विगुणेन भूयः संस्थास्यते[5] तस्य जिनस्य शासने।
तदापि सत्त्वा यथ गङ्गवालिका हेतुं जनेष्यन्तिह बुद्धबोधौ ॥ ५ ॥

5 अथ खलु तस्यां पर्षदि नवयानसंप्रस्थितानामष्टानां बोधिसत्त्वसहस्राणामेतदभवत्[6]। न बोधिसत्त्वानामपि तावदस्माभिरेवमुदारं व्याकरणं श्रुतपूर्वम् कः पुनर्वादः श्रावकाणाम्। कः खल्वत्र हेतुर्भविष्यति कः प्रत्यय इति। अथ खलु भगवांस्तेषां बोधिसत्त्वानां चेतसैव चेतः परिवितर्कमाज्ञाय तान्बोधिसत्त्वानामन्त्रयामास[7]। सममस्माभिः कुलपुत्रा एकक्षण एकमुहूर्ते[8] मया चानन्देन चानुत्तरायां सम्यक्संबोधौ चित्तमुत्पादितं धर्म-

10 गगनाभ्युद्गतराजस्य[9] तथागतस्यार्हतः सम्यक्संबुद्धस्य संमुखम्। तत्रैष कुलपुत्रा बाहुश्रुत्ये च सततसमितमभियुक्तो ऽभूदहं च वीर्यारम्भे ऽभियुक्तः। तेन मया क्षिप्रतर[10]मनुत्तरा[11] सम्यक्संबोधि[12]रभिसंबुद्धा अयं पुनरानन्दभद्रो बुद्धानां भगवतां सद्धर्मकोशधर एव भवति

---

1) Sic O., but यदा for तदा; आयुष्यु seems to be the r. of the other MSS.; a mistaken आयु स्य.

2) All but O. सं.

3) च तस्य Cb. तथैव भूयो O.

4) गोन O.

5) ति K. O. better.

6) दभूत् K.

7) यते स्म B. K. यति स्म O.

8) एकस्मिं क्षणे एकस्मिम्मुहूर्ते B. K. एकक्षणेनैकमुहूर्तेन Ca. Cb. O.

9) म Ca.

10) तर in A. W. only.

11) रां A. B. Ca. K. W. रा Cb.

12) म A. B. Ca. K. W. र K. O.

स्म । यदुत बोधिसत्त्वानां परिनिष्पत्तिहेतोः[1] प्रणिधानमेतत्कुलपुत्रा अस्य कुलपुत्रस्येति ॥

अथ खल्वायुष्मानानन्दो भगवतोऽन्तिकादात्मनो व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधावात्मनश्च बुद्धक्षेत्रगुणव्यूहाञ्श्रुत्वा पूर्वप्रणिधानचर्यां च[2] श्रुत्वा तुष्ट उदग्र आत्तमनस्कः[3] प्रमुदितः प्रीतिसौमनस्यजातोऽभूत् । तस्मिंश्च समये बहूनां बुद्धकोटीनयुतशतसहस्राणां सद्धर्ममनुस्मरति[4] स्मात्मनश्च पूर्वप्रणिधानम् ॥ 5

अथ खल्वायुष्मानानन्दस्तस्यां वेलायामिमा गाथा अभाषत ॥

आश्चर्यभूता जिन अप्रमेया ये स्मारयन्ति[5] मम धर्मदेशनाम्[6] ।
परिनिर्वृतानां हि जिनान तायिनां समनुस्मरामी[7] यथ अद्य श्वो वा ॥ ६ ॥
निष्काङ्क्षप्राप्तोऽस्मि स्थितोऽस्मि बोधये उपायकौशल्य ममेदमीदृशम् । 10
परिचारकोऽहं सुगतस्य भोमि सद्धर्म धारेमि च बोधिकारणात्[8] ॥ ७ ॥

अथ खलु भगवानायुष्मन्तं राहुलभद्रमामन्त्रयते स्म । भविष्यसि त्वं राहुलभद्रानागतेऽध्वनि सप्तरत्नपद्मविक्रान्तगामी[9] नाम तथागतोऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । दशलोकधातुपरमाणुरजःसमांस्तथागतानर्हतः सम्यक्संबुद्धान्सत्कृत्य[10] गुरुकृत्य[10] 15

---

1) निष्पादन O.

2) च in Ca. Cb. O. only.

3) मना Ca. O.

4) र्म समनुस्मरति O.

5) ति K. O. ती Cb. न्ते the rest.

6) ना Cb.

7) मि K. O. मी the other MSS.

8) कारणेति A. कारणा इति W. कारणादिति B. Ca. Cb. K. हेतोः O. Cp. X, vs. 3.

9) क्रामी B. Cb. क्रमो O. So too in the sequel.

10) त्वा A. B. Cb. K. W. त्य Ca. गुरुकृत्य left out in Ca.

मानयित्वा पूजयित्वार्चयित्वा[1] सदा तेषां बुद्धानां भगवतां ज्येष्ठपुत्रो भविष्यसि तद्यथापि नाम ममैतर्हि। तस्य खलु पुना राहुलभद्र भगवतः समरत्नपद्मविक्रान्तगामिनस्तथागतस्यार्हतः सम्यक्संबुद्धस्यैवंरूपमेवायुष्प्रमाणं भविष्यत्येवंरूपैव सर्वाकारगुणसंपद्भविष्यति तद्यथापि नाम तस्य भगवतः सागरवरधरबुद्धिविक्रीडिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सर्वाकारगुणोपेता[2] बुद्धक्षेत्रगुणव्यूहा[3] भविष्यन्ति। तस्यापि राहुल सागरवरधरबुद्धिविक्रीडिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य त्वमेव ज्येष्ठपुत्रो भविष्यसि। ततः पश्चात्परेणानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसीति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

अयं मम[4] राहुल ज्येष्ठपुत्रो यो औरसो आसि[5] कुमारभावे।
बोधिं मि प्राप्तस्य ममैष पुत्रो धर्मस्य दायाद्यधरो महर्षिः ॥ ८ ॥

अनागते ऽध्वे बहुबुद्धकोट्यो यान्द्रक्ष्यते येष प्रमाणु नास्ति।
सर्वेष तेषां हि जिनान पुत्रो भविष्यति बोधि गवेषमाणः ॥ ९ ॥

अज्ञात चर्या इय राहुलस्य प्रणिधानमेतस्य अहं प्रजानमि[6]।
करोति संवर्णन लोकबन्धुषु[7] अहं किल पुत्र तथागतस्य ॥ १० ॥

गुणान कोटीनयुताप्रमेयाः प्रमाणु येषां न कदाचिदस्ति।
ये राहुलस्येह ममौरसस्य तथा हि एषो स्थितु बोधिकारणात्[8] ॥ ११ ॥

---

1) अर्चयित्वा in B. K. only.

2) वरा A. B. Cb. K. W. गुणा Ca.

3) All but O. ता and हा.

4) All but O. ममा.

5) भावि A.

6) मी Cb. K.

7) ना A. W. नां O. The original reading certainly नो.

8) रणोति A. Ca. Cb. W. रणादिति B. K. रणां O. Cp. X, vs. 3.

अद्राक्षीत्खलु पुनर्भगवांस्ते द्वे श्रावकसहस्रे शैक्षाशैक्षाणां[1] श्रावकाणां भगवन्तमवलोकयमाने[2] ऽभिमुखं प्रसन्नचित्ते[3] मृदुचित्ते[3] मार्दवचित्ते[3]। अथ खलु भगवांस्तस्यां वेलायामायुष्मन्तमानन्दमामन्त्रयते स्म। पश्यसि त्वमानन्दैते द्वे श्रावकसहस्रे शैक्षाशैक्षाणां श्रावकाणाम्[4]। आह। पश्यामि भगवन्पश्यामि सुगत। भगवानाह। सर्व एवैत आनन्द द्वे भिक्षुसहस्रे समं बोधिसत्त्वचर्या समुदानयिष्यन्ति पञ्चाशल्लोकधातुपरमाणुरजःसमांश्च बुद्धान्भगवतः सत्कृत्य[5] गुरुकृत्य[5] मानयित्वा पूजयित्वार्चयित्वापचायित्वा[6] सद्धर्मं च धारयित्वा पश्चिमे समुच्छ्रय एकक्षणेनैकमुहूर्तेनैकलवेनैकसंनिपातेन दशसु दिक्ष्वन्योन्यासु लोकधातुषु स्वेषु[7] स्वेषु[7] बुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। रत्नकेतुराजो[8] नाम तथागता अर्हन्तः सम्यक्संबुद्धा भविष्यन्ति। परिपूर्णं चैषां कल्पमायुष्प्रमाणं भविष्यति। समाश्चैषां बुद्धक्षेत्रगुणव्यूहा भविष्यन्ति। समः श्रावकगणो बोधिसत्त्वगणश्च भविष्यति। समं चैषां परिनिर्वाणं भविष्यति। समश्चैषां सद्धर्मः स्थास्यति[9]॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

द्वे वै सहस्रे इमि श्रावकाणां आनन्द ये ते मम अग्रतः स्थिताः।
तान्व्याकरोमी अहमद्य पण्डितानानागते ऽध्वानि तथागतत्वे॥ १२॥

---

1) श्रावकाणां wanting in Ca. K.

2) यंतो A. Ca. Cb. W. यमाने B. यंत्यभिमुखं K. यमानानि O.

3) चित्तां A. W. चित्ते B. K. चित्तात् Ca. Cb. चित्तानि O.

4) Only in O.

5) त्वा A. B. Cb. O. K. W. त्य Ca.

6) अर्चयित्वा अपचायित्वा in B. K. only. Cp. above p. 220.

7) तेषु A. W. स्वेषु B. Ca. Cb. स्वकस्वकेषु O. left out in K.

8) राजानो B. Ca. Cb. O. राजो A. B. K. W., which is correct Skr., but certainly not the original reading.

9) W. adds इति.

अनन्तमौपम्यनिदर्शनेहि बुद्धान अग्र्यां करियाण पूजाम्।
आरागयिष्यन्ति ममाग्रबोधिं स्थिहित्व चरिमस्मि[1] समुच्छ्रयस्मिन्॥ १३॥
एकेन नामेन दशद्दिशासु[2] तणस्मि एकस्मि तथा मुहूर्ते।
निषद्य च द्रुमप्रवराणां[3] मूले बुद्धा भविष्यन्ति स्पृशित्व ज्ञानम्॥ १४॥
5 एकं च तेषामिति नाम भेष्यति रत्नस्य[4] केतूतिह[5] लोकि विश्रुताः।
समानि क्षेत्राणि वराणि[6] तेषां समो गणाः[7] श्रावकबोधिसत्त्वाः॥ १५॥
ऋद्धिप्रभूता इह सर्वि लोके समन्ततस्ते दशसु द्दिशासु[8]।
धर्मं प्रकाशेत्व यदापि[9] निर्वृताः सद्धर्मु तेषां सममेव स्थास्यति[10]॥ १६॥

अथ खलु ते शैलाशैलाः श्रावका भगवतो ऽन्तिकात्संमुखं स्वानि स्वानि व्याकर-
10 णानि श्रुत्वा तुष्टा उदग्रा आत्तमनस्काः[11] प्रमुदिताः प्रीतिसौमनस्यजाता भगवन्तं गाथाभ्या-
मध्यभाषन्त[12]॥

तृप्ता स्म लोकप्रद्योत श्रुत्वा व्याकरणं इदम्[13]।
अमृतेन यथा सिक्ताः सुखिता स्म तथागत॥ १७॥

---

1) मे A. B. K. W. म Cb. O. ये Ca.
2) दि A. B. O. Cb. K. W. द्दि Ca.
3) चो (च B) द्रुमवरराज्ञ B. K.
4) रतनस्य K.
5) केतूतिहि A. केतूनिह B. Cb. K. केतूनिभिहि W. केतूरिह O.
6) क्षेत्राप्रवरा K.
7) समो गणाः K. O. समा गणाः the rest.
8) All but O. दि.
9) All have सदा except O.
10) इति added in all but A. W. O.
11) मनसः Ca. O.
12) भिर Cb. O.
13) म B. Cb. K. W.

नास्माकं काङ्क्षा विमतिर्न[1] भेष्याम नरोत्तमाः ।

अद्यास्माभिः सुखं प्राप्तं श्रुत्वा व्याकरणं इदम्[2] ॥ १८ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय आनन्दराहुलाभ्यामन्याभ्यां च द्वाभ्यां भिक्षुसहस्राभ्यां व्याकरणपरिवर्तो नाम नवमः ॥

---

1) मतिर्वा न A. B. Cb. मतिर्न Ca. कांक्ष विमतिर्वा न K. विमति या न W. विमतिर्वा O.

2) All but O. add इति.

# X.

[1]अथ खलु भगवान्भैषज्यराजं[1] बोधिसत्त्वं महासत्त्वमारभ्य तान्यशीतिं[2] बोधिसत्त्वसहस्राण्यामन्त्रयते स्म । पश्यसि त्वं भैषज्यराजास्यां पर्षदि[3] [4]बहुदेवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यान्[5]भिक्षुभिक्षुण्युपासकोपासिकाः[6] श्रावकयानीयान्प्रत्येकबुद्धयानीयान्बोधिसत्त्वयानीयांश्च यैरयं धर्मपर्यायस्तथागतस्य संमुखं श्रुतः । आह । पश्यामि

5 भगवन्पश्यामि सुगत । भगवानाह । सर्वे खल्वेते भैषज्यराज बोधिसत्त्वा महासत्त्वा यैरस्यां पर्षद्यन्तश एकापि गाथा श्रुतैकपदमपि[7] श्रुतं यैर्वा पुनरन्तश एकचित्तोत्पादेनाप्यनुमोदितमिदं सूत्रं सर्वा[8] एता[8] अहं भैषज्यराज चतस्रः पर्षदो[9] व्याकरोम्यनुत्तरायां सम्यक्संबोधौ । ये[10]ऽपि केचिद्भैषज्यराज तथागतस्य परिनिर्वृतस्येमं धर्मपर्यायं श्रोष्यन्त्यन्तश एकगाथामपि[11] श्रुत्वान्तश एकेनापि चित्तोत्पादेनाभ्यनुमोदयिष्यन्ति[12] तानप्यहं भैषज्यराज कुलपुत्रा-

10 न्वा कुलदुहितॄर्वा व्याकरोम्यनुत्तरायां सम्यक्संबोधौ । परिपूर्णबुद्धकोटीनयुतशतस-

---

1) Dharmarakṣa has in his Chinese version a long prose passage and 12 verses at the beginning of this chapter.

1) ज्ञानं A. K. W. O.

2) ति W.

3) परिषदि K. राज ये इमस्मिं परिषदि O.

4) हून्देव B. Ca. K W. हवो O.

5) ष्यान्भि B. Cb. K. ष्या वा O ष्यभि A. Ca.

6) का A. कां Cb. K. का वा O.

7) त्वे A. B. W.

8) भविष्यति A.

9) परिषदो K. O.

10) पि in A. B. Ca. W. O. only.

11) एकामपि गाथां Ca. K.

12) Sic O.; the rest प्यनुमोदितं भविष्यन्ति.

कृतपर्युपासितास्ते भैषज्यराज कुलपुत्रा वा कुलदुहितरो वा भविष्यन्ति । बुद्धकोटीनयुतशतसहस्रकृतप्रणिधानास्ते भैषज्यराज कुलपुत्रा वा कुलदुहितरो वा भविष्यन्ति । सत्त्वानामनुकम्पार्थमस्मिञ्जम्बुद्वीपे मनुष्येषु प्रत्याजाता वेदितव्याः । य इतो धर्मपर्यायादन्तश एकगाथामपि धारयिष्यन्ति वाचयिष्यन्ति[2] प्रकाशयिष्यन्ति संग्राहयिष्यन्ति लिखिष्यन्ति[3] लिखित्वा चानुस्मरिष्यन्ति कालेन च कालं व्यवलोकयिष्यन्ति । तस्मिंश्च 5 पुस्तके तथागतगौरवमुत्पादयिष्यन्ति शास्तृगौरवेण सत्करिष्यन्ति गुरुकरिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति । तं[4] च पुस्तकं पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावाद्या[5]दिभिर्नमस्काराञ्जलिकर्मभिश्च पूजयिष्यन्ति । ये केचिद्भैषज्यराज कुलपुत्रा वा कुलदुहितरो वेतो धर्मपर्यायादन्तश एकगाथा[6]मपि धारयिष्यन्त्यनुमोदयिष्यन्ति वा सर्वांस्तानहं भैषज्यराज व्याकरोम्यनुत्तरायां सम्यक्संबोधौ ॥ 10

तत्र भैषज्यराज यः कश्चिदन्यतरः वा पुरुषो[7] स्त्री वैवं वदेत् । कीदृशाः खल्वपि ते सत्त्वा भविष्यन्त्यनागतेऽध्वनि तथागता अर्हन्तः सम्यक्संबुद्धा इति । तस्य भैषज्यराज पुरुषस्य वा स्त्रिया वा स कुलपुत्रो वा कुलदुहिता वा दर्शयितव्यः । य इतो धर्मपर्यायादन्तशश्चतुष्पादिकामपि गाथां[8] धारयिता[9] श्रावयिता वा देशयिता वा सगौरवो वेह धर्मपर्याये । अयं स कुलपुत्रो वा कुलदुहिता वा यो ह्यनागतेऽध्वनि तथागतोऽर्हन्सम्य- 15

---

1) B. K. O. add बहु.

2) Left out in W.

3) A. adds लिखापयिष्यन्ति मानयिष्यन्ति.

4) Sic all for तच्च.

5) वाद्ये A. W.

6) शश्चतुष्पदिकामपि गाथां B. K.

7) स्त्री वा पुरुषो A. W. पुरुषो वा स्त्री B. Ca. Cb. O. पुरुषः स्त्री K.

8) कायां गाथाया Cb. कायां अपि गाथाया K. ष्पदिया गाथया O.

9) Left out in K.

कसंबुद्धो[1] भविष्यति। एवं पश्य[2]। तत्कस्य हेतोः। स हि भैषज्यराज कुलपुत्रो वा कुलदु-
हिता वा तथागतो वेदितव्यः सदेवकेन लोकेन[3] तस्य च तथागतस्यैवं[4] सत्कारः कर्तव्यो
यः खल्वस्माद्धर्मपर्यायादन्तश एकगाथामपि[5] धारयेत्कः पुनर्वादो य इमं धर्मपर्यायं सकल-
समासमुद्गृह्णीयाद्धारयेद्वा वाचयेद्वा[6] पर्यवाप्नुयाद्वा प्रकाशयेद्वा लिखेद्वा लिखापयेद्वा[7] लि-
5 खित्वा चानुस्मरेत्तत्र च पुस्तके सत्कारं कुर्याद्गुरुकारं[8] कुर्यान्माननां पूजनामर्चनामपचायनां
पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्त्रध्वजपताकावाद्याञ्जलिनमस्कारैः[9][10][11] प्रणामैः[12]। प-
रिनिष्पन्नः स भैषज्यराज कुलपुत्रो वा कुलदुहिता वानुत्तरायां सम्यक्संबोधौ वेदितव्य-
स्तथागतदर्शी च[13] वेदितव्यो लोकस्य[14] हितानुकम्पकः प्रणिधानवशेनोपपन्नो ऽस्मिञ्जम्बु-
द्वीपे मनुष्येष्वस्य धर्मपर्यायस्य संप्रकाशनतायै[15]। यः स्वयमुदारं धर्माभिसंस्कारमुदारां च
10 बुद्धक्षेत्रोपपत्तिं स्थापयित्वास्य धर्मपर्यायस्य संप्रकाशनहेतोर्ममपि परिनिर्वृते सत्त्वानां हि-
तार्थमनुकम्पार्थं[16] चेहोपपन्नो वेदितव्यस्तथागतदूतः स भैषज्यराज कुलपुत्रो वा कुलदु-

---

1) K. adds लोके.
2) K adds ति. एवं पश्य left out in A. O.
3) All but Cb. O. add समारकेण.
4) गते K.
5) एकामपि चतुष्पदीगाथां O.
6) Left out in B. Ca. Cb.
7) Left out in Cb. O.
8) From गुरु till पचायनां left out in Cb. Differently in O.
9) W. adds दीप
10) B. adds घण्टा.
11) [illegible] A. K. W. [illegible]
12) मैश्च B. K. मेभिर्वा O.
13) Cb. K. add स. ति for च in O.
14) स्य left out in A. W.
15) शनाय B. K. O.
16) Left out in K

क्तिा वो वदितव्यः । तथागतकृत्यकरस्तथागतसंप्रेषितः[1] स[2] भैषज्यराज कुलपुत्रो वा कुलदुहिता वा संज्ञातव्यो य इमं धर्मपर्यायं तथागतस्य परिनिर्वृतस्य संप्रकाशयेदन्तशो रहसि चौर्येणापि कस्यचिदेकसत्त्वस्यापि संप्रकाशयेदाचक्षीत वा ॥

यः खलु पुनर्भैषज्यराज कश्चिदेव सत्त्वो दुष्टचित्तः पापचित्तो रौद्रचित्तस्तथागतस्य संमुखं कल्पमवर्णं भाषेत् । यश्च तेषां तथारूपाणां[3] धर्मभाणकानामस्य सूत्रान्तस्य धारकाणां गृहस्थानां वा प्रव्रजितानां वैकामपि वाचमप्रियां संश्रावयेद्भूतां वाभूतां वा । इदमागाढतरं[4] पापकं कर्मेति वदामि । तत्कस्य हेतोः । तथागताभरणप्रतिमण्डितः स भैषज्यराज कुलपुत्रो वा कुलदुहिता वा वेदितव्यः । तथागतं स[5] भैषज्यराजांसेन परिहरति[6] य इमं धर्मपर्यायं लिखित्वा पुस्तकगतं कृत्वांसेन परिहरति[7] । स येन येनैव प्रक्रामेत्तेन तेनैव सत्त्वैरञ्जलीकरणीयः[8] सत्कर्तव्यो गुरुकर्तव्यो मानयितव्यः पूजयितव्यो ऽर्चयितव्यो[9] ऽपचायितव्यो[9] दिव्यमानुष्यकैः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावाद्यखाद्यभोज्यान्नपानयानैरग्रप्राप्तैश्च दिव्यै रत्नराशिभिः । स धर्मभाणकः[10] सत्कर्तव्यो गुरुकर्तव्यो[11] मानयितव्यः[11] पूजयितव्यो[11] दिव्याश्च रत्नराशयस्तस्य धर्मभाणकस्योपनामयितव्याः ।

---

1) K. adds स भैषज्यराज, while Cb. leaves out तथागतसंप्रेषितः.

2) Left out in K. O.

3) K. adds पुद्गलानां.

4) All but O. घ.

5) Left out in A. Ca. W.

6) A. Cb. W. add स्म.

7) A. W. add स्म.

8) लिः कार्तव्या A. लोः करणीया B. लिं करणीयः Ca लीकरणीया Cb. लोः करणीयाः K. लिं करणीयाः W. लीकरणीयं O.

9) In Ca. only.

10) सह A. B. Ca. Cb. O. W. स घ K.

11) Left out in Ca. Cb. O.

तत्कस्य हेतोः । अप्येव नामैकवारमपीमं[1] धर्मपर्यायं संश्रावयेयं[2] अतुलाप्रमेया असंख्येयाः सत्त्वाः क्षिप्रमनुत्तरायां सम्यक्संबोधौ परिनिष्पद्येयुः[3] ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

बुद्धत्वे स्थातुकामेन स्वयंभूज्ञानमिच्छता ।
5 सत्कर्तव्याश्च ते सत्त्वा ये धारेन्ति इमं नयम् ॥ १ ॥
सर्वज्ञत्वं च यो इच्छेत्कथं शीघ्रं भवेदिति ।
स इमं धारयेत्सूत्रं सत्कुर्याद्वापि धारकम् ॥ २ ॥
प्रेषितो लोकनाथेन सत्त्ववैनेयकारणात्[4] ।
सत्त्वानामनुकम्पार्थं सूत्रं यो वाचयेदिदम् ॥ ३ ॥
10 उपपत्तिं शुभां त्यक्त्वा स धीर इह आगतः ।
सत्त्वानामनुकम्पार्थं सूत्रं यो धारयेदिदम् ॥ ४ ॥
उपपत्तिवशा[5] तस्य येन सो[6] दृश्यते तहि ।
पश्चिमे कालि भाषन्तो इदं सूत्रं निरुत्तरम् ॥ ५ ॥
दिव्येहि पुष्पेहि त[7] सत्करेत मानुष्यकेश्चापि हि सर्वगन्धैः ।
15 दिव्येहि वस्त्रेहि त[8] छादयेया रत्नेहि अभ्योकिरि धर्मभाणकम् ॥ ६ ॥

---

1) अपि left out in A. Ca. W.

2) संप्रकाशये Cb. K.

3) All but O. add इति.

4) सत्त्वानां विनायकारणां A. W. सत्त्वानां विनयादिह O.

5) शं A. शितास्य तस्य यया O. metrically wrong. The other MSS. शो. Our reading शा (Instr. c. or Abl. c.) conjectural.

6) सा A. B. Cb. W. सो K. सौ O.

7) तं A. W. स B. Ca. च K. O.

8) तं A. W. च B. Ca. K. O. सं Cb.

कृताञ्जली तस्य भवेत नित्यं यथा जिनेन्द्रस्य स्वयंभुवस्तथा।
यः पश्चिमे कालि सुभैरवे ऽस्मिन्परिनिर्वृतस्य इदं[1] सूत्र धारयेत्॥ ७॥
खाद्यं च भोज्यं च तथान्नपानं विहारशय्यासनवस्त्रकोट्यः।
ददेय पूजार्थ जिनात्मजस्य यस्येकवारं पि वदेत सूत्रम्॥ ८॥
तथागतानां करणीय कुर्वते[2] मया च सो प्रेषितु मानुषं भवम्।
यः सूत्रमेतच्चरिमस्मिं[3] काले लिखेय धारेय शृणोय वापि॥ ९॥ 5
यश्चैव स्थित्वेह जिनस्य संमुखं श्रावेदवर्णा परिपूर्णकल्पम्।
प्रदुष्टचित्तो भृकुटिं करित्वा बहुं नरो ऽसौ प्रसवेत पापम्[4]॥ १०॥
[5]यश्चापि सूत्रान्तधराण तेषां प्रकाशयन्तानिह सूत्रमेतत्।
अवर्णमाक्रोश वदेय तेषां बहूतरं[6] तस्य वदामि पापम्॥ ११॥ 10
नरश्च यो संमुख संस्तवेया कृताञ्जली[6] मां परिपूर्णकल्पम्।
गाथान कोटीनयुतै[7]रनेकैः पर्येषमाणो इममग्रबोधिम्॥ १२॥
बहुं खु[8] सो तत्र लभेत पुण्यं मां संस्तविहान प्रहर्षजातः।
अतश्च सो बहुतरकं[9] लभेत यो वर्ण तेषां प्रवदेन्मनुष्यः॥ १३॥

1) इदं Ca. मम O.
2) ति B. Cb. K. O.
3) तच्चरस्मि A. तं चरिमस्मि B. K. Ca. तच्चरिस्मि Cb. तंधरथास्मि W
4) बहूतरासौ प्रवेन पापं K. read प्रसवेत.
5) This verse is left out in W.
6) ति O. मं rest.
7) नि A. K.
8) खलु A.
9) रकं A. B. K. रं Ca. Cb. O. रं क W.

अष्टादश[1] कल्प[2]सहस्रकोट्यो यस्तेषु पुस्तेषु करोति[3] पूजाम् ।
शब्देहि रूपेहि रसेहि चापि दिव्यैश्च गन्धेश्च स्पर्शेश्च दिव्यैः ॥ १४ ॥
करित्व पुस्तान तथैव पूजां[4] अष्टादश कल्पसहस्रकोट्यः ।
यदि श्रुणो एकश[5] एत सूत्रं आश्चर्यलाभो ऽस्य भवेन्महानिति[6] ॥ १५ ॥

5 आरोचयामि ते भैषज्यराज प्रतिवेदयामि ते । बहवो हि मया भैषज्यराज धर्मपर्याया भाषिता भाषामि[7] भाषिष्ये[8] च । सर्वेषां च तेषां भैषज्यराज धर्मपर्यायाणामयमेव धर्मपर्यायः सर्वलोकविप्रत्यनीकः[9] सर्वलोकाश्रद्दधनीयः[10] । तथागतस्याप्येतद्भैषज्यराज आध्यात्मिकधर्म[11]रहस्यं तथागतबलसं[12]रक्षितमप्रति[13]भिन्नपूर्वमनाचक्षितपूर्वमनाख्यातमिदं स्थानम् । बहुजनप्रतिक्षिप्तो ऽयं भैषज्यराज धर्मपर्यायस्तिष्ठतो ऽपि तथागतस्य कः 10 पुनर्वादः परिनिर्वृतस्य ॥

अपि तु खलु पुनर्भैषज्यराज तथागतचीवरच्छन्नास्ते कुलपुत्रा[14] वा कुलदुहितरो

---

1) श A. B. सः Ca. O. शो Cb. शा K. W.
2) वर्ष Cb.
3) करेत Cb. यस्थान करेत कश्चित् O.
4) कर्तव्य वस्थान सद्धर्मधारके O.
5) श्रृणोदेकापि A. श्रुते एकं पि B. श्रुणो एक पि Ca. K. श्रुणी एक पि Cb. श्रुणोदेकापि W. श्रावये एकश O.
6) हामिति A. W. हांत इति B. Ca. Cb. K. Probably to r. महन्तः ॥.
7) भाषे B. K., more consistent.
8) भाषिष्यामि Ca. Cb., more original. भाषिष्याम O.
9) नीकभूतः A. W. नी B. नीयः Ca. Cb. O. नीकः K.
10) कश्च A. B. Ca. W. काश्च Cb. K. O.
11) राज अध्यात्मिक B. Ca. Cb. (r. आ° = O). राज अप्यात्मिकं K.
12) लं A. Cb. W.
13) ति left out in B. Cb. O.
14) Left out in B. K. O.

[1] वा वेदितव्याः। [2] अन्यलोक[3]धातुस्थितैश्च तथागतैरवलोकिताश्चाधिष्ठिताश्च। प्रत्यात्मिकं च तेषां श्रद्धाबलं भविष्यति कुशलमूलबलं च प्रणिधानबलं[4] च[4]। तथागतविहारै[5]कस्थानि[6]वासिनश्च ते भैषज्यराज कुलपुत्रा वा कुलदुहितरो वा भविष्यन्ति। तथागतपाणि[7]परिमार्जितमूर्धानश्च[8] ते[9] भविष्यन्ति। य इमं धर्मपर्यायं तथागतस्य परिनिर्वृतस्य श्रद्धा[10]स्यन्ति वाचयिष्यन्ति लिखिष्यन्ति सत्करिष्यन्ति गुरुकरिष्यन्ति[11] परेषां[11] च संश्रावयिष्यन्ति[12]॥

यस्मिन्खलु[13] पुनर्भैषज्यराज पृथिवीप्रदेशे ऽयं धर्मपर्यायो भाष्येत वा देश्येत वा लिख्येत वा लिखितो[14] वा[14] पुस्तकगतः[14] स्वाध्यायेत वा संगायेत वा तस्मिन्भैषज्यराज पृथिवीप्रदेशे तथागतचैत्यं कारयितव्यं महन्तं रत्नमयमुच्चं प्रगृहीतं न च तस्मिन्नवश्यं तथागतशरीराणि प्रतिष्ठापयितव्यानि। तत्कस्य हेतोः। एकघनमेव तस्मिंस्तथागतशरीरमुपनिक्षिप्तं भवति[15]। यस्मिन्पृथिवीप्रदेशे ऽयं धर्मपर्यायो भाष्येत वा देश्येत वा पठ्येत[16]

1) रश्च B. K.

2) अन्यत्र A. K. W.

3) धातौ A. W.

4) Left out in B. Cb.

5) एक left out in Cb.

6) नि in A. Cb. only.

7) पाणिना W.

8) मूर्द्धा च A. मूर्धानश्च B. मूर्धा च Ca. मूर्धानश्च Cb. K. O. मूर्धाश्च W.

9) K. adds सत्वा.

10) श्रद्धास्यंति A. B. K. W. श्रद्दधास्यन्ति O.

11) A. B. K. W. add विस्तरेण.

12) संप्रकाशयिष्यन्ति K. श्रावयिष्यन्ति O.

13) यस्मिंश्च खलु Cb.

14) Left out in Ca. Cb.

15) भविष्यति A. B. Cb. W.

16) वाच्येत वा स्वाध्यायेत वा leaving out पठ्येत वा in K. This reading agrees better with the preceding.

वा संगायेत वा लिख्येत वा लिखितो वा पुस्तकगतस्तिष्ठेत्तस्मिंश्च स्तूपे[1] सत्कारो गुरुकारो[2] मानना पूजनार्चना[3] करणीया सर्वपुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीभिः[4] सर्वगीतवाद्यनृत्यतूर्यताडावचरसंगीतिसंप्रवादितैः[5][6][7] पूजा करणीया। ये च खलु पुनर्भैषज्यराज सत्वास्तं तथागतचैत्यं लभेरन्वन्दनाय[8] पूजनाय[8] दर्शनाय[8] वा सर्वे

5 ते भैषज्यराजाभ्याशमन्नीभूता[9] वेदितव्या अनुत्तरायाः[10] सम्यक्संबोधेः[11]। तत्कस्य हेतोः। बहवो भैषज्यराज गृहस्थाः प्रव्रजिताश्च बोधिसत्वचर्यां चरन्ति न च पुनरिमं[12] धर्मपर्यायं लभन्ते दर्शनाय वा श्रवणाय वा लिखनाय[12] वा पूजनाय वा। न तावत्ते भैषज्यराज बोधिसत्वचर्यायां कुशला भवन्ति यावन्नेमं धर्मपर्यायं शृण्वन्ति। ये[13] त्विमं धर्मपर्यायं शृण्वन्ति श्रुत्वा चाधिमुच्यन्त्यवतरन्ति[14] विजानन्ति परिगृह्णन्ति तस्मिन्समये त आसन्नस्थायिनो

10 भविष्यन्त्यनुत्तरायां सम्यक्संबोधावभ्याशीभूताः॥

---

1) स्तूपस्यैव A. W.

2) Left out in Cb. W.

3) अर्चना left out in Ca. Cb.

4) B. adds घण्टा.

5) त्य K.

6) रैः B.

7) संगीति left out in Ca. O.

8) यै in A. B. W. पूजनायै left out in Ca. Cb. वाचनाय is added after दर्शनाय in Cb. दर्शनाय वन्दनाय O.

9) °सन्ने वे° O.

10) यां Cb. O.

11) धौ Ca.

12) K. adds पर्युपासनाय.

13) यदा A. K. W. यदाहो पुनः O.

14) B. K. W. add बुध्यन्ते before ऽवतरन्ति. O. adds पत्तीयन्ति बुध्यन्ति before विजानन्ति.

तद्यथापि नाम भैषज्यराज कश्चिदेव पुरुषो भवेदुदकार्थ्युदकगवेषी। स उदकार्थमुज्जङ्गले पृथिवीप्रदेश[1] उदपानं खानयेत्। स यावत्पश्येच्छुष्कं पाण्डरं[2] पांसुं निर्वाह्यमानं तावज्जानीयात्[3]। दूर[4] इतस्तावदुदकमिति। अथ परेण समयेन स पुरुष आर्द्रपांसुमुदकसंमिश्रं कर्दमपङ्कभूतमुदकबिन्दुभिः स्रवद्भिर्निर्वाह्यमानं पश्येत्तांश्च पुरुषानुदपानखानकान्कर्दमपङ्कदिग्धाङ्गान्[5]। अथ खलु पुनर्भैषज्यराज स पुरुषस्तत्पूर्वनिमित्तं दृष्ट्वा निष्काङ्क्षो भवेन्निर्विचिकित्स आसन्नमिदं खलूदकमिति। एवमेव भैषज्यराज दूरे ते बोधिसत्त्वा महासत्त्वा[6] भवन्त्यनुत्तरायां सम्यक्संबोधौ यावन्नेमं धर्मपर्यायं शृण्वन्ति नोद्गृह्णन्ति नावतरन्ति नावगाहन्ते न चिन्तयन्ति। यदा खलु पुनर्भैषज्यराज बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं शृण्वन्त्युद्गृह्णन्ति धारयन्ति[6] वाचयन्त्य[6]वतरन्ति स्वाध्यायन्ति चिन्तयन्ति भावयन्ति तदा ते ऽभ्याशीभूता भविष्यन्त्यनुत्तरायां सम्यक्संबोधौ[7]। सत्त्वानामितो भैषज्यराज[8] धर्मपर्यायादनुत्तरा सम्यक्संबोधिराजायते[9]। तत्कस्य हेतोः। परमसन्धाभाषित[10]विवरणो ह्ययं धर्मपर्यायस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्धर्मनिगूढस्थानमाख्यातं[11] बोधिसत्त्वानां महासत्त्वानां परिनिष्पत्तिहेतोः[12]। यः कश्चिद्भैषज्यराज बोधिसत्त्वो ऽस्य धर्मपर्यायस्यो[13]त्त्रसेत्संत्रसे[13]त्संत्रासमापद्येतनवयानसंप्रस्थितः स भैषज्यराज बोधिसत्त्वो महासत्त्वो वेदितव्यः। सचेत्पुनः

1) तद्दु° Cb.
2) पांसु B.
3) Sic O. दृष्ट्वा च पुनस्तस्यैवं भवेत् the rest.
4) दूरं O.
5) दिग्धागं A. K. W. दिग्धान् B. Ca. Cb.
6) Left out in Ca. Cb.
7) °या °धेः O. better.
8) Left out in K.
9) रूपना Ca. रायत्ता O.
10) Sic O. परमसंभाषितं K. परमता and परमतां! the rest.
11) ते K. निष्कुट for निगूढ O.
12) परिपादन O.
13) स्ये A. K. W.

श्रावकयानीयो[1] ऽस्य धर्मपर्यायस्योत्त्रसेत्संत्रसेत्संत्रासमापद्येदधिमानिकः स भैषज्यराज श्रावकयानिकः पुद्गलो वेदितव्यः ॥

यः कश्चिद्भैषज्यराज बोधिसत्त्वो महासत्त्वस्तथागतस्य परिनिर्वृतस्य पश्चिमे काले पश्चिमे समय इमं धर्मपर्यायं चतसृणां पर्षदां संप्रकाशयेत्तेन भैषज्यराज बोधिसत्त्वेन महा-
5 सत्त्वेन तथागतलयनं प्रविश्य तथागतचीवरं प्रावृत्य[2] तथागतस्यासने निषद्यायं धर्मपर्या-यश्चतसृणां पर्षदां संप्रकाशयितव्यः। कतमच्च[3] भैषज्यराज तथागतलयनम्। सर्वसत्त्वमैत्री-विहारः[4] खलु पुनर्भैषज्यराज तथागतलयनं। तत्र तेन कुलपुत्रेण प्रवेष्टव्यम्। कतमच्च[5] भैषज्यराज तथागतचीवरम्[6]। महाक्षान्तिसौरत्यं[7] खलु पुनर्भैषज्यराज तथागतचीवरं। तत्तेन कुलपुत्रेण वा कुलदुहित्रा वा प्रावरितव्यम्। कतमच्च[8] भैषज्यराज तथागतस्य धर्मास-
10 नम्। सर्वधर्मशून्यताप्रवेशः खलु पुनर्भैषज्यराज तथागतस्य धर्मासनं। तत्र तेन कुलपुत्रेण निषत्तव्यं निषद्य[9] चायं धर्मपर्यायश्चतसृणां पर्षदां संप्रकाशयितव्यः[10]। अनवलीनचित्तेन बोधिसत्त्वेन[11] पुरस्ताद्बोधिसत्त्वगणस्य[12] बोधिसत्त्वयानसंप्रस्थितानां[13] चतसृणां पर्षदां संप्रका-

---

1) यानिक इति O.

2) प्रावरित्वा Cb. O.; more original.

3) श्च in all MSS. barring that O. has मे च; the more original reading.

4) मैत्राविहारिता O.

5) श्च A. B. K. W. च्च Ca. Cb. स्च O.

6) A. K. W. put चीवर after आसन.

7) All °र्त्यं. Cp. Pāli *soracca*.

8) श्च A. B. K. W. च्च Ca. Cb. स्च O.

9) निसात्तव्यं निषीदित्वा A. W. निषत्तव्यं निषद्य B. निषतव्यः निषीदित्वा Ca. निसीदितव्यम्। निसीदित्वा K. निषीदितव्यं निषीदित्वा O.

10) तेन B. O.

11) Cb. adds महासत्त्वेन.

12) गणस्य बोधिसत्त्व left out in A. W.

13) B. adds भिक्षु.

शयितव्यः । अन्यलोकधातुस्थितश्चाहं भैषज्यराज तस्य कुलपुत्रस्य निर्मितैः पर्षदः समावर्तयिष्यामि । निर्मितांश्च भिक्षुभिक्षुण्युपासकोपासिकाः संप्रेषयिष्यामि [1] धर्मश्रवणाय । ते तस्य धर्मभाणकस्य भाषितं न प्रतिबाधिष्यन्ति [2] न प्रतिक्षेप्स्यन्ति । सचेत्खलु पुनररण्यगतो भविष्यति तत्राप्यहमस्य [3] बहुदेवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगान्संप्रेषयिष्यामि धर्मश्रवणाय । अन्यलोकधातुस्थितश्चाहं भैषज्यराज तस्य कुलपुत्रस्य [4] मुखमुपदर्शयिष्यामि । यानि चास्यास्माद्धर्मपर्यायात्पदव्यञ्जनानि परिभ्रष्टानि भविष्यन्ति तानि तस्य स्वाध्यायतः [5] प्रत्युच्चारयिष्यामि [6] ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

लीयनां सर्व वर्जित्वा शृणुयात्सूत्रमीदृशम् ।
दुर्लभो वै श्रवो ह्यस्य [7] अधिमुक्ती पि दुर्लभा ॥ १६ ॥
उदकार्थी यथा कश्चित्खानयेत्कूप जङ्गले ।
शुष्कं च पांसु पश्येत खान्यमाने पुनः पुनः ॥ १७ ॥
सो दृष्ट्वा चिन्तयेत्तत्र दूरे वारि इतो भवेत् ।
इदं निमित्तं दूरे स्यात् शुष्कपांसुरितोच्छ्रितः ॥ १८ ॥
तदा तु आर्द्रं पश्येत पांसुं स्निग्धं पुनः पुनः ।
निष्ठा तस्य भवेत्तत्र नास्ति दूरे जलं इह ॥ १९ ॥

1) K. adds पर्षदां O. परिषदः wanting in the others; from धर्म till संप्रेषयिष्यामि left out in Cb.

2) All but O. वादि.

3) बहु K.

4) K. adds सं. In O. मुखदर्शनं करिष्यामि.

5) तस्य वास्य (?) घटत्तस्य व्यायमतस्य स्वाध्यायं कारत्तस्य (r. कारोत्तस्य) O.

6) इति added in all but B., O. Added in O. अनुप्रबुद्धा चास्येमं धर्मपर्यायमनुप्रदास्यामि.

7) ह्येष Cb.

एवमेव तु ते दूरे बुद्धज्ञानस्य तादृशाः।
अशृणवन्त इदं सूत्रमभाविता पुनः पुनः ॥ २० ॥
यदा तु गम्भीरमिदं श्रावकाणां विनिश्चयम्।
सूत्रराजं श्रुणिष्यन्ति चिन्तयिष्यन्ति वासकृत्॥ २१ ॥
ते भोन्ति संनिकृष्टा वै बुद्धज्ञानस्य पण्डिताः।
यथैव चार्द्र[1] पांसुस्मिन्[2] आसन्नं जलमुच्यते ॥ २२ ॥
जिनस्य लेनं[3] प्रविशित्वा[4] प्रावरित्वा[5] मि चीवरम्।
ममासने निषीदित्वा अभीतो भाषि पण्डितः[6] ॥ २३ ॥
मैत्रीबलं[7] च लयनं क्षान्तिसौरत्य चीवरम्।
शून्यता चासनं मह्यमत्र स्थित्वा हि[8] देशयेत्॥ २४
लोष्टं दण्डं वाथ शक्ती[9] आक्रोशतर्जनाथ वा।
भाषन्तस्य भवेत्तत्र स्मरन्तो मम ता सहेत्[10]॥ २५ ॥
क्षेत्रकोटीसहस्रेषु आत्मभावो दृढो मम।
देशेमि धर्म सत्वानां कल्पकोटीरचिन्तियाः ॥ २६ ॥

---

1) आर्द्रो K.

2) स्वेद A. B. Cb. K. W. स्वेव Ca. सुस्मिन्नासन्ने वारिमुच्यते O.

3) All but O. लयनं.

4) प्राचं A. प्रविसित्वा B. Cb. W. प्राविस्य Ca. प्रविशित्वा K. O.

5) मि A. B. K. W. Cb. O. न Ca.

6) सूत्रमेतत् A. अंतिमं B. सूत्रिमं Ca. Cb. K. अत्रिमं W. पण्डितः O.

7) Ca. K. W. add मे. मैत्राबलं मम लीन (r. लेनं) O.

8) च B. K.

9) All but O. शक्तिंवा. Quite differently in O. ये लेण्डुदण्डशस्त्रेभि.

10) भवेत् A. क्षमेत् B. सहेत् Ca. Cb. K. O. समेत् W. ता our conjecture for तं in O., तां in the other MSS.

अद्धं पि तस्य वीरस्य यो मह्यं[1] परिनिर्वृते।
इदं सूत्रं प्रकाशेया प्रेषेष्ये बङ्कनिर्मितान्[2] ॥ २७ ॥
भिक्षवो भिक्षुणीया च[3] उपासका उपासिकाः।
तस्य पूजां करिष्यन्ति पर्षदश्च समा अपि ॥ २८ ॥
लोष्टं दण्डांस्तथाक्रोशांस्तर्जनां[4] परिभाषणाम्। 5
ये चापि तस्य दास्यन्ति धारिष्यन्ति स्य[5] निर्मिताः ॥ २९ ॥
यदापि चैको विहरन्स्वाध्यायपत्तो भविष्यति।
नरैर्विरहिते देशे अटव्यां[6] पर्वतेषु वा ॥ ३० ॥
ततो ऽस्य अद्धं दर्शिष्ये[7] आत्मभाव प्रभास्वरम्।
स्खलितं चास्य स्वाध्यायमुच्चारिष्ये पुनः पुनः ॥ ३१ ॥ 10
तर्हि च से[8] विहरतो एकस्य वनचारिणः।
देवान्यक्षांश्च प्रेषिष्ये सहायांस्तस्य नैकशः ॥ ३२ ॥
एतादृशास्तस्य गुणा भवन्ति चतुर्ण पर्षाणां[9] प्रकाशकस्य[10]।
एको विहारो वनकन्दरेषु[11] स्वाध्याय कुर्वन्तु ममा हि पश्येत् ॥ ३३ ॥

---

1) मह्यम् K. मम O.

2) इदम्प्रकाशयेया प्रेष्येया प्रेष्यं बङ्कविनिर्मितं K.

3) Rather यो च, Prākr. = Skr. यश्च. In O. णिकाश्चैव.

4) लेडुदण्डेण आ O.

5) धारयंति च A. W. धारिष्यन्ति च B. Ca. Cb. K. धारिष्यन्ते स्य O.

6 निष्पुरुषशब्द गत्वान अटवों O.

7) Sic O.; तस्याद्धं दर्शयिष्ये the rest, against the metre.

8) च विहरतस्य O. च मो विहरन्तो the rest; मो points to से, Skr. अस्य The r. of O. seems preferable.

9) चतुर्णां पर्षदां A. W. चतस्र पर्ष B. चतसृणां पर्षणा Ca. चतसृणां पर्षणो Cb. चतस्र पर्षाणा K. चतुर्ण परिषाणा O.

10) Conjectural; MSS. प्रकाशतो ऽस्य and प्रकाशयतः

11) वरं स एको A. चरं स एको W. एको हि विस्तरे B एको विहरे Ca. Cb. एको हि विहरेद्वन K. एको विहारे O.

प्रतिभान[1] तस्य भवती ग्रसङ्ग निरुक्ति[2]धर्माण बहू प्रजानति ।
तोषेति सो प्राणिसहस्रकोट्यः यथापि बुद्धेन[3] ग्रधिष्ठितत्वात् ॥ ३४ ॥
ये चापि तस्याश्रित भोन्ति सत्त्वास्ते बोधिसत्त्वा लघु भोन्ति सर्वे ।
तत्संगतिं चापि निषेवमाणाः पश्यन्ति बुद्धान्यथ गङ्गवालिकाः ॥ ३५ ॥

इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये धर्मभाणकपरिवर्तो नाम दशमः ॥

---

1) नु A. Ca. Cb. न W. O. ण B. K.

2) विभक्ति O.

3) बुद्धेभिर् O. All but O. स्तथापि.

# XI.

अथ खलु भगवतः पुरस्तात्ततः पृथिवीप्रदेशात्पर्षन्मध्यात्सप्तरत्नमयः[2] स्तूपो ऽभ्यु-
द्गतः पञ्चयोजनशतान्युच्चैस्त्वेन[3] तदनुरूपेण च[4] परिणाहेन । अभ्युद्गम्य वैहायसमन्तरीक्षे
समवातिष्ठ[5]च्चित्रो दर्शनीयः पञ्चभिः पु[6]ष्पग्रहणीयवेदिकासहस्रैः स्व[7]भ्यलंकृतो बहुतोर-
णसहस्रैः[8] प्रतिमण्डितः पताका[9]वैजयन्तीसहस्रा[10]भिः प्रलम्बितो रत्नदामसहस्राभिः[11] प्रल-
म्बितः पट्टघण्टासहस्रप्रलम्बितस्तमालपत्रचन्दनगन्धं प्रमुञ्चमानस्तेन च गन्धेन सर्वाव-
तीयं[12] लोकधातुः संमूर्छिताभूत्[13] । छत्रावली[14] चास्य यावच्चातुर्महाराजकायिकदेवभवनानि
समुच्छ्रिता[15]भूत्सप्तरत्नमयी । तद्यथा सुवर्णस्य रूप्यस्य वैडूर्यस्य[16] मुसारगल्वस्याश्मगर्भस्य

1) Better in O. परिषन्मण्डलमध्ये.

2) ये A. य B. W. यः Cb K. In O. स्तूप throughout of neuter g.

3) स्तेन K.

4) B. K. adds सिंहासन.

5) स्थासीत् O.

6) य left out in B. K. W. O.

भ्य left out in K. O.

8) स्र Cb. O.

9) का K. क the rest.

10) स्रालङ्कृतो (for भिः प्रलंबितो) K. शतसहस्रैभिरलंकृतं रत्न O.

11) भि K. रत्न° till तः left out in Cb. दामशतसहस्रैभिरवसो (r. स) क्तैभिः O.

12) सर्वावत्तो O.

13) तगन्धेन स्फुटो बभूव O

14) च्छत्र A. B. K. छत्र Cb.

15) तो भूत् A. B. K. W. तानि । Cb. अनुप्राप्ता O.

16) A. W. add स्फटिकस्य.

लोहितमुक्तेः कर्केतनस्य[1]। तस्मिंश्च[2] स्तूपे त्रायस्त्रिंशत्कायिका देवपुत्रा दिव्यैर्मान्दारवमहामान्दारवैः पुष्पैस्तं रत्नस्तूपमवकिरन्त्यध्यवकिरन्त्यभिप्रकिरन्ति[3][4]। तस्माच्च रत्नस्तूपादेवंरूपः शब्दो निश्चरति स्म। साधु साधु भगवञ्शाक्यमुने। सुभाषितस्ते ऽयं सद्धर्मपुण्डरीको धर्मपर्यायः। एवमेतद्भगवन्नेवमेतत्सुगत॥

5 अथ खलु ताश्चतस्रः पर्षदस्तं महान्तं रत्नस्तूपं दृष्ट्वा वैहायसमन्तरीक्षे स्थितं संजातहर्षाः प्रीतिप्रामोद्यप्रसादप्राप्ताः[5]। तस्यां वेलायामुत्थायासनेभ्यो ऽञ्जलिं[6] प्रगृह्यावस्थिताः। अथ खलु तस्यां वेलायां महाप्रतिभानो नाम[7] बोधिसत्त्वो महासत्त्वः सदेवमानुषासुरं लोकं कौतूहलप्राप्तं विदित्वा भगवन्तमेतदवोचत्। को भगवन्हेतुः कः प्रत्ययो ऽस्यैवंरूपस्य महारत्नस्तूपस्य लोके प्रादुर्भावाय। को वा[8] भगवन्नस्मान्महारत्नस्तूपादेवंरूपं शब्दं
10 निश्चारयति। एवमुक्ते भगवान्महाप्रतिभानं बोधिसत्त्वं महासत्त्वमेतदवोचत्। अस्मिन्महाप्रतिभान महारत्नस्तूपे तथागतस्यात्मभावस्तिष्ठत्येकघनस्तस्यैष स्तूपः। स एष शब्दं निश्चारयति। अस्ति महाप्रतिभानाधस्तायां दिश्यसंख्येयानि लोकधातुकोटीनयुतशतसहस्राण्यतिक्रम्य रत्नविशुद्धा नाम लोकधातुः[9]। तस्यां प्रभूतरत्नो नाम तथागतो ऽर्हन्सम्यक्संबुद्धो ऽभूत्। तस्यैतद्भगवतः पूर्वप्रणिधानमभूत्। अहं खलु[10] पूर्वं[11] बोधिसत्त्व-

---

1) A. W. add पद्मरागस्य; B. K. add सप्तमस्य.

2) त्रयस्त्रिंशा दे O.

3) रत्नमयं W.

4) अभिप्रकिरन्ति left out in K. In O. follows a long description of other acts of worship to the Stūpa.

5) प्रीतिप्रसादप्रतिलब्धाः प्रामोद्यप्राप्ताः B. K. W. प्रीतिस्फुटाः प्रामोद्यजाता O.

6) लो B. Cb. K. लि W.

7) नाम left out in B. Cb. K.

8) वायं W.

9) तत्र विशुद्धरत्नायां लोकधातौ O.

10) पुनः added in A. W.

11) Sic O.; पूर्व, r. पूर्वं the rest.

चर्यां चरमाणो न तावन्निर्यातो[1] ऽनुत्तरायां सम्यक्संबोधौ यावन्मयायं सद्धर्मपुण्डरीको धर्मपर्यायो बोधिसत्त्वाववादो न श्रुतो ऽभूत् । यदा तु मयायं सद्धर्मपुण्डरीको धर्मपर्यायः श्रुतस्तदा[2] पश्चादहं परिनिष्पन्नो ऽभूवमनुत्तरायां सम्यक्संबोधौ । तेन खलु पुनर्महाप्रतिभान भगवता प्रभूतरत्नेन तथागतेनार्हता सम्यक्संबुद्धेन परिनिर्वाणकालसमये सदेवकस्य लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः पुरस्तादेवमारोचितम् । मम खलु भिक्षवः परिनिर्वृतस्यास्य[3] तथागतात्मभावविग्रहस्यैको[4] महारत्नस्तूपः कर्तव्यः । शेषाः पुनः स्तूपा ममोद्दिश्य कर्तव्याः । तस्य खलु पुनर्महाप्रतिभान भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्यैतदधिष्ठानमभूत् । अयं मम स्तूपो दशसु दिक्षु सर्वलोकधातुषु येषु बुद्धक्षेत्रेष्वयं सद्धर्मपुण्डरीको धर्मपर्यायः संप्रकाश्येत तेषु तेष्वयं ममात्मभावविग्रहस्तूपः समभ्युद्गच्छेत् । तैस्तैर्बुद्धैर्भगवद्भिरस्मिन्सद्धर्मपुण्डरीके धर्मपर्याये भाष्यमाणे पर्षन्मण्डलस्योपरिवैहायसं[5] तिष्ठेत् । तेषां च बुद्धानां भगवतामिमं सद्धर्मपुण्डरीकं[6] धर्मपर्यायं भाषमाणानामयं ममात्मभावविग्रहस्तूपः साधुकारं दद्यात् । तदयं महाप्रतिभान तस्य भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य शरीरस्तूपो ऽस्यां सहायां लोकधातावस्मिन्सद्धर्मपुण्डरीके धर्मपर्याये मया भाष्यमाणे ऽस्मात्पर्षन्मण्डलमध्यादभ्युद्गम्योपर्यन्तरीक्षे वैहायसं[7] स्थित्वा साधुकारं ददाति स्म[8] ॥

---

1) त्परिनिष्पन्नो O.

2) ततः O.

3) अस्य left out in K. इमस्य O.

4) तस्यात्म K. O.

5) सं A. Cb. W. स्ये B. स K. से न्तरीक्षे O. Cp. Pāli *vehāyasa ṭhito.*

6) A. adds नाम.

7) All से.

8) स्म left out in Cb. K. O.

अथ खलु महाप्रतिभानो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। पश्यामि[1] वयं भगवन्नेतं[2] तथागतविग्रहं भगवतो ऽनुभावेन। एवमुक्ते भगवान्महाप्रतिभानं बोधिसत्त्वं महासत्त्वमेतदवोचत्। तस्य खलु पुनर्महाप्रतिभान भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रणिधानं गुरुकमभूत्[3]। एतदस्य प्रणिधानम्। यदा खल्वन्येषु बुद्धक्षेत्रेषु
5 बुद्धा भगवन्त इमं[4] सद्धर्मपुण्डरीकं धर्मपर्यायं भाषेयुस्तदायं[5] ममात्मभावविग्रहस्तूपो ऽस्य सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य श्रवणाय[6] गच्छेत्तथागतानामन्तिकम्[7]। यदा पुनस्ते बुद्धा भगवन्तो ममात्मभावविग्रहमुद्धाट्य दर्शयितुकामा[8] भवेयुश्चतसृणां पर्षदाम् अथ तैस्तथागतैर्दशसु दिक्ष्वन्योन्येषु बुद्धक्षेत्रेषु य आत्मभावनिर्मितास्तथागतविग्रहा अन्योन्यनामधेयास्तेषु तेषु बुद्धक्षेत्रेषु सत्त्वानां धर्मं देशयन्ति तान्सर्वान्[9] संनिपात्य तैरात्मभावनिर्मितैस्त-
10 थागतविग्रहैः सार्धं पश्चादयं ममात्मभावविग्रहस्तूपः समुद्घाट्योपदर्शयितव्यश्चतसृणां[10] पर्षदाम्। तन्मयापि महाप्रतिभान बहवस्तथागतविग्रहा निर्मिता ये दशसु दिक्ष्वन्योन्येषु बुद्धक्षेत्रेषु लोकधातुसहस्रेषु सत्त्वानां धर्मं देशयन्ति ते सर्वे खल्विहानयितव्या[11] भविष्यन्ति[12]॥

1) Conjectural for मो; in O. द्रष्टुकामा.

2) इमं O.; एवं the rest.

3) गरुकं प्रणिधानं कृतं बभूव O.

4) Sic O.; इदं the rest.

5) येऽनन्त B. K.

6) श्रुणानाय O.

7) के K.

8) श्च in Cb. In O. the singular throughout.

9) सत्त्वान् K.

10) उप left out in A. W.

11) हागताः A. W.

12) All but O. add इति.

अथ खलु महाप्रतिभानो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। तानपि ताव-द्भगवंस्तथागतात्मभावांस्तथागतनिर्मितान्सर्वान्[1]वन्दामहे[2]॥

अथ खलु भगवांस्तस्यां वेलायामूर्णाकोशाद्रश्मिं प्रामुञ्चत्[3]। यया रश्म्या समनन्त-रप्रमुक्तया पूर्वस्यां दिशि पञ्चाशत्सु गङ्गानदीवालुकासमेषु[4] लोकधातुकोटीनयुतशतसह-स्रेषु ये[5] बुद्धा भगवन्तो विहरन्ति स्म ते सर्वे संदृश्यन्ते स्म। तानि च बुद्धक्षेत्राणि स्फ- 5
टिकमयानि संदृश्यन्ते स्म रत्नवृक्षैश्च चित्राणि संदृश्यन्ते स्म दूष्यपट्टदामसमलंकृतानि बहुबोधिसत्त्वशतसहस्रपरिपूर्णानि वितानविततानि सप्तरत्नहेमजालप्रतिच्छन्नानि। तेषु तेषु[6] बुद्धा भगवन्तो मधुरेण वल्गुना स्वरेण सत्त्वानां धर्मं देशयमानाः संदृश्यन्ते स्म। बो-धिसत्त्वशतसहस्रैश्च परिपूर्णानि तानि बुद्धक्षेत्राणि संदृश्यन्ते स्म। एवं पूर्वदक्षिणस्यां दिशि। एवं दक्षिणस्यां[7] दिशि। एवं दक्षिणपश्चिमायां दिशि। एवं पश्चिमायां[8] दिशि। एवं 10
पश्चिमोत्तरायां[9] दिशि। एवमुत्तरायां[9] दिशि। एवमुत्तरपूर्वस्यां[10] दिशि। एवमधस्तायां[11] दि-शि। एवमूर्ध्वायां दिशि। एवं समन्ताद्दशसु दिक्ष्वेकैकस्यां दिशि बहूनि गङ्गानदीवालु-

---

1) वन्द्याम सर्वान्वन्देम O.

2) Conjectural for महे.

3) प्रमुमोच K. प्रमुञ्चयामास O.

4) कासमेषु A. Ca. Cb. W. O. कोपमेषु B. K.

5) ये left out in K.

6) च B. K. W.

7) दक्षिणायां A. W.

8) पश्चिमस्यां A.

9) रस्यां B. K.

10) पूर्वायां A. W. O.

11) केष्टिमायां O.

कोपमानि[1] बुद्धक्षेत्र[2]कोटीनयुत[3]शतसहस्राणि बहुषु गङ्गानदीवालुका[4]कोपमेषु लोककधातुकोटीनयुतशतसहस्रेषु ये बुद्धा भगवन्तस्तिष्ठन्ति ते सर्वे संदृश्यन्ते स्म ॥

अथ खलु ते दशसु दिक्षु तथागता अर्हन्तः सम्यक्संबुद्धाः स्वान्स्वान्बोधिसत्त्वगणानामन्त्रयन्ति स्म । गन्तव्यं खलु पुनः कुलपुत्रा भविष्यत्यस्माभिः सहां लोकधातुं भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्यान्तिकं प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य शरीरस्तूपवन्दनाय[5] । अथ खलु ते बुद्धा भगवन्तः स्वैः स्वैरुपस्थायकैः सार्धमात्मद्वितीया[6] आत्मतृतीया[6] इमां सहां लोकधातुमागच्छन्ति स्म । इति हि तस्मिन्समय इयं सर्वावती लोकधातू रत्नवृक्षप्रतिमण्डिताभूद्वैडूर्यमयी सप्तरत्नहेमजालसंछन्ना महारत्नगन्धधूपनधूपिता[7] मान्दारवमहामान्दारवपुष्पसंस्तीर्णा[8] किङ्किणीजालालंकृता सुवर्णसूत्राष्टापदविनद्धा[9]पगतग्रामनगरनिगमजनपदराष्ट्रराजधान्यपगतकालपर्वतापगतमुचिलिन्दमहामुचिलिन्दपर्वतापगत[10]चक्रवाडमहाचक्रवाडपर्वतापगतसुमेरुपर्वतापगततदन्यमहापर्वतापगतमहासमुद्रापगतनदीमहानदीपरिसंस्थिताभूद्[11]पगतदेवमनुष्यासुरकायापगतनिरयतिर्यग्योनियमलोका । इति हि तस्मिन्समये येऽस्यां सहायां लोकधातौ षड्गत्युपपन्नाः सत्त्वास्ते सर्वेऽन्येषु लोकधातुषूपनिक्षिप्ता अभूवन्स्थापयित्वा ये तस्यां

---

1) कामसा A. W.

2) क्षेत्राणि K.

3) नियुत K. नयुत O., and left out in the other MSS.

4) वालिकास O.

5) Sic O., °यं दर्शनाय वन्दनाये the others.

6) या A. B. K. W. O. °यं Cb.

7) धूपेणा A. W.

8) संकीर्णा A.

9) Sic O.; the other MSS. have द्राभिनद्धा; elsewhere द्रानिबद्ध.

10) B. Cb. put here सुमेरुपर्वता; K. reads मेरुपर्वत. Wholly different in O.

11) परिसंस्थापयत्य Cb. °स्थितो भूद् B. °स्थिताभूद् A. K. W. °स्थापयामास O. Cf. p. 246 below.

पर्षदि संनिपतिता अभूवन्। अथ खलु ते बुद्धा भगवन्त उपस्थायकद्वितीया[1] उपस्थायक-[1] तृतीया इमां महतीं लोकधातुमागच्छन्ति स्म। आगतागताश्च ते तथागता रत्नवृक्षमूले सिंहासनमुपनिश्रित्य[2] विहरन्ति स्म। एकैकश्च रत्नवृक्षः पञ्चयोजनशतान्युच्चैस्त्वेनाभूदनु-पूर्वशाखापत्रपलाशपरिणाहः[3] पुष्पफलप्रतिमण्डितः। एकैकस्मिंश्च रत्नवृक्षमूले सिंहा-सनं प्रज्ञप्तमभूत्पञ्चयोजनशतान्युच्चैस्त्वेन[4] महारत्नप्रतिमण्डितम्। तस्मिन्नेकैकस्तथागतः 5 पर्यङ्कं बद्ध्वा[5] निषण्णो ऽभूत्। अनेन पर्यायेण सर्वस्यां[6] त्रिसाहस्रमहासाहस्रायां[7] लोकधातौ सर्वरत्नवृक्षमूलेषु[8] तथागताः पर्यङ्कं बद्ध्वा[5] निषण्णा अभूवन्॥

तेन खलु पुनः समयेनेयं त्रिसाहस्रमहासाहस्री[9] लोकधातुस्तथागतपरिपूर्णाभून्न[10] तावद्भगवतः शाक्यमुनेस्तथागतस्यात्मभावनिर्मिता एकस्मादपि दिग्भागात्सर्व आगता अभूवन्[11]। अथ खलु पुनर्भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेषां तथागतवि- 10 ग्रहाणामागतागतानामवकाशं[12] निर्मिमीते स्म। समन्तादष्टभ्यो दिग्भ्यो विंशतिबुद्धक्षेत्र-कोटीनयुतशतसहस्राणि सर्वाणि वैडूर्यमयाणि सप्तरत्नहेमजालसंछन्नानि किङ्किणीजा-

---

1) प K.

2) लेषु (r. षू) प O.

3) °भूत् अर्धयोजनपरिमाणमन्तकेनानुपूर्व B. °भूदर्धे योजनपरिमाणमन्ततेनानुपूर्वे K.

4) शत left out in B. K.

5) आबद्धा O.

6) सर्वे K. सर्वत्र O.

7) स्रे B. O.

8) In K. only added सिंहासनेषु.

9) नायं तृसाहस्रमहासाहस्रो O.; cp. note 7 above.

10) B. K. add च.

11) In the following the text in O. much amplified.

12) 2-nd गता in Cb. only.

लालंकृतानि मान्दारवमहामान्दारवपुष्पसंस्तीर्णानि[1] दिव्यवितानविततानि[2] दिव्यपुष्पदामाभिप्रलम्बितानि दिव्यगन्धधूपनधूपितानि[3]। सर्वाणि च तानि विंशतिबुद्धक्षेत्रकोटीनयुतशतसहस्राण्यपगतग्रामनगरनिगमजनपदराष्ट्रराजधानीन्यपगतकालपर्वतान्यपगतमुचिलिन्दमहामुचिलिन्दपर्वतान्यपगतचक्रवाडमहाचक्रवाडपर्वतान्यपगतसुमेरुपर्वतान्यप-
5 गततदन्यमहापर्वतान्यपगतमहासमुद्राण्यपगतनदीमहानदीनि[4] परिसंस्थापयत्यपगतदेव-[5]मनुष्यासुरकायान्यपगतनिरयतिर्यग्योनियमलोकानि[6]। तानि च सर्वाणि बहुबुद्धक्षेत्राण्येकमेव बुद्धक्षेत्रमेकमेव पृथिवीप्रदेशं परिसंस्थापयामास[7] समं रमणीयं[8] सप्तरत्नमयैश्च वृक्षैश्चित्रितं तेषां च रत्नवृक्षाणां[9] पञ्चयोजनशतान्यारोहपरिणाहो ऽनुपूर्वशाखापत्रपुष्प-[10]फलोपेतः। सर्वस्मिंश्च रत्नवृक्षमूले[11] पञ्चयोजनशतान्यारोहपरिणाहं[12] दिव्यरत्नमयं विचित्रं
10 दर्शनीयं सिंहासनं प्रज्ञप्तमभूत्। तेषु[13] रत्नवृक्षमूलेष्वागतागतास्तथागताः[14] सिंहासनेषु पर्यङ्कं बद्धा[15] निषीदन्ते स्म। अनेन पर्यायेण पुनरपराणि विंशतिलोकधातुकोटीनयुतशत-

---

1) की A. Cb. W. स्त्री B. K. O.

2) मा B. K.

3) धूपन in Cb. O. only. परिधूपि O.

4) K. O. add समुद्र.

5) परिसंस्थापयति अपगत B. O. °स्थाप्य W. Cp. p. 244 above.

6) A. W. add च.

7) परिस्था Cb. परिसंस्था K. O. Without परि the rest.

8) B. K. add प्रासादिकं.

9) रत्न only in O.

10) वे A.

11) रत्न in O. B. K. only.

12) शत left out in K. O.

13) तस्मिंश्च A. Cb. K. O. W. तेषु B.

14) मूले आगता A. Cb. O. K. W. मूलेषु आ° B. Rather to r. मूल आ° and °सने.

15) आबद्धा O., as above.

सहस्राण्येकैकस्यां दिशि शाक्यमुनिस्तथागतः परिशोधयति स्म। तेषां[1] तथागतानामागतागतानामवकाशार्थं[2] तान्यपि विंशतिर्लोकधातुकोटीनयुतशतसहस्राण्येकैकस्यां दिश्यपगतग्रामनगरनिगमजनपदराष्ट्रराजधानीन्यपगतकालपर्वतान्यपगतमुचिलिन्दमहामुचिलिन्दपर्वतान्यपगतचक्रवाडमहाचक्रवाडपर्वतान्यपगतसुमेरुपर्वतान्यपगततदन्यमहापर्वतान्यपगतमहा[3]समुद्राण्यपगतनदीमहानदीनि परिसंस्थापयत्यपगतदेवमनुष्यासुरकायान्यपगतनिरयतिर्यग्योनियमलोकानि। ते च सर्वसत्त्वा अन्येषु[4] लोकधातुषूपनिक्षिप्ताः। तान्यपि[5] बुद्धक्षेत्राणि वैडूर्यमयानि सप्तरत्नहेमजालप्रतिच्छन्नानि किङ्किणीजालालंकृतानि मान्दारवमहामान्दारवपुष्पसंस्तीर्णानि[6] दिव्यवितानविततानि दिव्यपट्टदामाभिप्रलम्बितानि[7] दिव्यगन्धधूपनधूपितानि[8] रत्नवृक्षोपशोभितानि। सर्वे च ते रत्नवृक्षाः पञ्चयोजनशत[9]प्रमाणाः पञ्चयोजन[10]प्रमाणानि च सिंहासनान्यभिनिर्मितानि।[11] ततस्ते तथागता निषीदन्ति स्म पृथक्पृथक्सिंहासनेषु रत्नवृक्षमूलेषु[12] पर्यङ्कं बद्ध्वा॥

तेन खलु पुनः समयेन भगवता शाक्यमुनिना[13] ये निर्मितास्तथागताः पूर्वस्यां दिशि सत्त्वानां धर्मं देशयन्ति स्म[14] गङ्गानदीवालुकोपमेषु[15] बुद्धक्षेत्रकोटीनयुतशतसहस्रेषु

---

1) ये Cb.
2) 2-nd गता in Cb. O. only.
3) K. O. add समुद्र.
4) न्यलो O. The reading न्येषु in the other MSS. is inconsistent.
5) प्तान्ये पि Cb. प्तान्यपि K.
6) र्णा A. B. Cb. स्तो K. W. O.
7) All but O. have भिप्रति; but see above p. 246, l. 2.
8) परिधू O.
9) शत left out in B. सहस्र W.
10) W. adds शत.
11) प्रज्ञप्तानि निर्मिणोति। तत्र O.
12) मूले O.
13) B. adds तथागतेनार्हता. K. adds तथागतेन.
14) स्म left out in Cb. K. O.
15) कल्पमेषु (r. का°) O.

ते सर्वे समागता दशभ्यो दिग्भ्यस्ते चागता अष्टासु दिक्षु निषण्णा अभूवन्। तेन खलु पुनः समयेनैकैकस्यां दिशि त्रिंशल्लोकधातुकोटीशतसहस्राण्यष्टभ्यो दिग्भ्यः समन्तात्ते-स्तथागतैराक्रान्ता अभूवन्। अथ खलु ते तथागताः स्वेषु स्वेषु सिंहासनेषूपविष्टाः स्वान्स्वानुपस्थापकान्संप्रेषयन्ति[1] स्म भगवतः शाक्यमुनेरन्तिके[2] रत्नपुष्पपुटान्दत्त्वैवं[3] वद-
5 न्ति स्म। गच्छत यूयं गृध्रकूटं पर्वतं गत्वा च पुनस्तस्मिंस्तं भगवन्तं शाक्यमुनिं तथागत-मर्हन्तं सम्यक्संबुद्धं वन्दित्वास्मद्वचनादल्पाबाधतां मन्दग्लानतां च बलं च[4] स्पर्शविहा-[5]रतां च परिपृच्छध्वं सार्धं बोधिसत्त्वगणेन श्रावकगणेन। अनेन च रत्नराशिनाभ्यवकिरध्व-मेवं च वदध्वम्[6]। ददाति खलु पुनर्भगवांस्तथागतश्छन्दमस्य महारत्नस्तूपस्य समुद्घाटने। एवं ते[7] तथागताः सर्वे स्वान्स्वानुपस्थापकान्संप्रेषयामासुः॥

10 अथ खलु भगवाञ्शाक्यमुनिस्तथागतस्तस्यां वेलायां स्वान्निर्मितानशेषतः समा-गतान्विदित्वा पृथक्पृथक्सिंहासनेषु निषण्णांश्च विदित्वा तांश्चोपस्थापकांस्तेषां तथाग-तानामर्हतां सम्यक्संबुद्धानामागतान्विदित्वा छन्दं च तैस्तथागतैरर्हद्भिः सम्यक्संबुद्धै-रारोचितं विदित्वा तस्यां वेलायां स्वकाद्धर्मासनादुत्थाय वैहायसमन्तरीक्षे ऽतिष्ठत्। अथ खलु भगवांस्तं महान्तं रत्नस्तूपं वैहायसं[8] स्थितं दक्षिणया हस्ताङ्गुल्या मध्ये समु-

---

1) न्ते B. Cb. K. न्ति A. W. O.

2) A. W. add वैहायसं स्थितं.

3) कृत्वा A.

4) च B. O. left out in Cb. K.

5) All but O. संस्पर्श.

6) अभ्यवकिरध्व एवं च वदध्व O. The others वि for अभि, but see p. 249, l. below.

7) तेन A. Cb. W. ते B. K. O.

8) सं A. Cb. W. सि B. से K. O.

द्घाटयति स्म समुद्घाट्य च द्वे भित्ती[1] प्रविसारयति[2] स्म। तद्यथापि नाम महानगरद्वारेषु[3] महाकपाटसंपुटावर्गलविमुक्तौ[4] प्रविसार्येते[5]। एवमेव भगवांस्तं महान्तं रत्नस्तूपं वैहायसं स्थितं दक्षिणया हस्ताङ्गुल्या मध्ये समुद्घाट्यापावृणोति[6] स्म। समनन्तरविवृतस्य खलु पुनस्तस्य महारत्नस्तूपस्य अथ खलु भगवान्प्रभूतरत्नस्तथागतस्तथागतो ऽर्हन्सम्यक्संबुद्धः सिंहासनोपविष्टः पर्यङ्कं बद्ध्वा[7] परिशुष्कगात्रः संघटितकायो यथा समाधिसमापन्नस्तथा संदृश्यते स्म। एवं च वाचमभाषत[8]। साधु साधु भगवञ्शाक्यमुने। सुभाषितस्ते ऽयं सद्धर्मपुण्डरीको धर्मपर्यायः। साधु खलु पुनस्त्वं भगवञ्शाक्यमुने यस्त्वमिमं सद्धर्मपुण्डरीकं धर्मपर्यायं पर्षन्मध्ये भाषसे। अस्यैवाहं भगवन्सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य श्रवणायेहागतः॥

अथ खलु ताश्चतस्रः पर्षदस्तं भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं[10] बहुकल्पकोटीनयुतशतसहस्रपरिनिर्वृतं तथा भाषमाणं दृष्ट्वाश्चर्यप्राप्ता अद्भुतप्राप्ता अभूवन्। तस्यां वेलायां तं भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं तं च भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं दिव्यमानुष्यकै[11] रत्नराशिभिरभ्यवकिरन्ति स्म। अथ खलु

---

1) द्वौ भित्तौ Cb.

2) प्रविचारयति A. प्रतिसारयति B. K. प्रसारयति Cb. प्रविचारयते W. प्रविसारयामास O.

3) षु left out in B.

4) चगति A. वर्गच B. वर्गड Cb. K. चर्गति च W. कवाटसमूहता अर्गटप्रमुक्ता O.

5) अपावृणवन्ति O. प्रतिसार्यते the others.

6) द्याप्राव् A. W. द्यापाव् B. द्यावव् Cb. द्य प्राव् K. समुत्पाडयित्वा द्वे द्वे भित्तां विसारयति स्म O.

7) पर्यङ्केन बन्धेन O.

8) भाषते स्म Cb. K. भाषति O.

9) भगवतः शाक्यमुनेः K.

10) A. Cb. W. add भगवन्तं च शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं.

11) ष्यै K. ष्यकेभि पुष्पेभिः रत्नपुष्पा O.

भगवान्प्रभूतरत्नस्तथागतो ऽर्हन्सम्यक्संबुद्धो भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्य तस्मिन्नेव सिंहासने ऽर्धासनमदासीत्तस्यैव महारत्नस्तूपाभ्यन्तर एवं च वदति। इहैव भगवाञ्शाक्यमुनिस्तथागतो निषीदतु। अथ खलु भगवाञ्शाक्यमुनिस्तथागतस्तस्मिन्नर्धासने निषसाद तेनैव तथागतेन सार्धमुभौ च तौ तथागतौ तस्य महारत्नस्तू-
5 पस्य मध्ये सिंहासनोपविष्टौ वैहायसमन्तरीक्षस्थौ[1] संदृश्येते[2]॥

अथ खलु तासां चतसृणां पर्षदामेतदभवत्। दूरस्था वयमाभ्यां तथागताभ्यां। यन्नूनं वयमपि तथागतानुभावेन वैहायसमभ्युद्गच्छेम इति। अथ खलु भगवाञ्शाक्यमुनिस्तथागतस्तासां चतसृणां पर्षदां चेतसैव चेतः परिवितर्कमाज्ञाय तस्यां वेलायामृद्धिबलेन ताश्चतस्रः पर्षदो वैहायसमुपर्यन्तरीक्षे प्रतिष्ठापयति स्म। अथ खलु भगवाञ्शाक्यमुनि-
10 स्तथागतस्तस्यां वेलायां ताश्चतस्रः पर्षद आमन्त्रयते स्म। को भिक्षवो युष्माकमुत्सहते तस्यां सहायां लोकधाताविमं सद्धर्मपुण्डरीकं धर्मपर्यायं संप्रकाशयितुम्। अयं स कालो ऽयं स समयः संमुखीभूत[3]स्तथागतः परिनिर्वापयितु[4]कामो भिक्षवस्तथागत इमं सद्धर्मपुण्डरीकं धर्मपर्यायमुपनिक्षिप्य॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

15 अयमागतो निर्वृतको महर्षी रतनामयं[6] स्तूप प्रविश्य नायकः।
श्रवणार्थ धर्मस्य इमस्य भिक्षवः को धर्महेतोर्न जनेत[7] वीर्यम्॥ १॥

बहुकल्पकोटीपरिनिर्वृतो ऽपि सो नाम अद्यापि शृणोति धर्मम्।
तद्धि तद्धि गच्छति धर्महेतोः सुदुर्लभो धर्म यमेवरूपः॥ २॥

---

1) क्षे A. K.
2) दृश्यते A. संदृश्यते B. संदृश्यंते Cb. संदृश्येते K. दृश्यन्ते W. दृश्यत O.
3) तः A. Cb. ता B. K. तं W. तम् Cb. O.
4) वापयि in all but B. K. which have वा for वापि.
5) क्षिपित्वा Cb.
6) रत्नामयां A. रत्नामयं B. K. रतनामयं Cb. रत्नमयं W.
7) तोर्न जनेत B. O. तो न जने Cb. तो न जपेत W. तोर्जनयेत A. Ca.

प्रणिधानमेतस्य विनायकस्य निषेवितं पूर्वभवे यदासीत्।
परिनिर्वृतोपि[1] इमु सर्वलोकं पर्येषती[2] सर्वदशद्दिशासु[3] ॥ ३ ॥

इमे च सर्वे मम आत्मभावाः सहस्रकोट्यो यथ गङ्गवालिकाः।
ते धर्मकृत्यस्य कृतेन आगताः परिनिर्वृतं च[4] इमु द्रष्टु नाथम् ॥ ४ ॥

छोरित्व क्षेत्राणि स्वकस्वकानि तथ श्रावकान्नरमरुतश्च[5] सर्वान्। 5
सद्धर्मसंरक्षणहेतु सर्वे यथा[6] चिरं तिष्ठिय[7] धर्मनेत्री[8] ॥ ५ ॥

एतेष बुद्धान निषीदनार्थं बहुलोकधातून सहस्रकोट्यः।
संक्रामिता मे तथ सर्वसत्त्वा ऋद्धीबलेन[9] परिशोधिताश्च ॥ ६ ॥

एतादृशी उत्सुकता[10] इयं मे कथं प्रकाशेदिय[11] धर्मनेत्री[12]।
इमे च बुद्धा स्थित अप्रमेया द्रुमाण मूले यथ पद्मराशिः[13] ॥ ७ ॥ 10

द्रुममूलकोटीय अनल्पकायो[14] सिंहासनस्थेहि विनायकेहि।
शोभन्ति तिष्ठन्ति च[15] नित्यकालं हुताशनेनेव यथान्धकारम् ॥ ८ ॥

---

1) पि B. Cb. W. O. पी the rest.

2) पर्यास्यतो B. पर्यपठते O.

3) द्दि A. W. O. द्रि B. Cb. K.

4) चो B. द्रष्टुमिमं विनायकम् O.

5) कनरमरुतांश्च A. का नरमरुतश्च B. K. कानान्नरमरुश्च Cb. का नरमरु-तांश्च W. कान्नरमरुणाश्च सर्वे O.

6) All but O. कथं.

7) तिष्ठियु A. Cb. W. तिष्ठय B. तिष्ठयु K. तिष्ठिय O.

8) त्रीं K. W.

9) वलेन A. K. W. बलो सो B. बलं च Cb.

10) उत्सहुता A.

11) य A. Cb. K. W. म B. O.

12) त्री A. B. W. O. त्रीं Cb. K.

13) सि A. Cb. W. शिं B. शि: K.

14) कानि A. W. काय B. कायो Cb. K. अनन्तकानि O.

15) All but O. न.

गन्धो मनोज्ञो दशसू[1] दिशासु प्रवायते लोकविनायकानाम् ।
येना[2] इमे मूर्छित सर्वसत्त्वा वाते प्रवाते इह नित्यकालम् ॥ ९ ॥
मयि निर्वृते[3] यो एतं धर्मपर्यायु धारयेत् ।
क्षिप्रं व्याहरतां वाचं लोकनाथान संमुखम् ॥ १० ॥
5 परिनिर्वृतो हि संबुद्धः प्रभूतरतनो[4] मुनिः ।
सिंहनादं शृणो[5] तस्य व्यवसायं करोति यः ॥ ११ ॥
अहं द्वितीयो बहवो इमे च ये कोटियो आगत नायकानाम् ।
व्यवसाय[6] श्रोष्यामि जिनस्य पुत्रात्[7] यो उत्सहेद्धर्ममिमं प्रकाशितुम् ॥ १२॥
अहं च तेन[8] भवि पूजितः सदा प्रभूतरत्नश्च जिनः स्वयंभूः ।
10 यो गच्छते दिशविदिशासु[9] नित्यं श्रवणाय धर्मं इममेवरूपम् ॥ १३ ॥
इमे च ये आगत लोकनाथा विचित्रिता यैरिय शोभिता भूः ।
तेषां पि पूजा विपुला अनल्पका कृता भवेत्सूत्रप्रकाशनेन[10] ॥ १४ ॥
अहं च दृष्टा इह आसनस्मिन्[11] भगवांश्च यो ऽयं स्थितु स्तूपमध्ये ।
इमे च अन्ये बहुलोकनाथा ये आगताः क्षेत्रसहस्रकोटिभिः[12] ॥ १५ ॥

---

1) सु in all MSS.
2) येन A. W. O. येनो B. K. येना Cb.
3) मम निर्वृतस्य A. Cb. W. मयि निर्वृते B. मयि निर्वृत K.
4) रत्नो A. W. तना B. Cb. तनो K. O.
5) शृणव A. शृणुते B. शृणो Cb. शृणो K. O. शृणवन् W.
6) व्यवलोकय A. W.
7) पुत्रा B. जिनात्मजानां O.
8) तेन A. K. W. O. तेनो B. ते Cb.
9) दिशि A. B. K. W. देश Cb. दिश O.
10) प्रकाशनेन B. Cb. K. O. प्रकाशितेन the others.
11) ने W.
12) क्षेत्रसहस्रकोटिभिः B. O., an erroneous Sanskritisation of a Prākṛt Ablat. c. pl. in भि or हि. Wholly wrong in the other MSS. क्षेत्रशतैरनेकैः.

चिन्तेथ[1] कुलपुत्राहो[2] सर्वसत्त्वानुकम्पया।
सुदुष्करमिदं स्थानमुत्सहन्ति विनायकाः[3]॥ १६॥

बहुसूत्रसहस्राणि यथा गङ्गाय वालिकाः[4]।
तानि कश्चित्प्रकाशेत न तद्भवति दुष्करम्॥ १७॥

सुमेरुं यश्च हस्तेन ग्रध्यालम्बिव मुष्टिना।  5
क्षिपेत क्षेत्रकोटीयो न तद्भवति दुष्करम्॥ १८॥

यश्च इमां[5] त्रिसाहस्रीं[6] पादाङ्गुष्ठेन कम्पयेत्।
क्षिपेत क्षेत्रकोटीयो न तद्भवति दुष्करम्॥ १९॥

भवाग्रे यश्च तिष्ठित्वा[7] धर्मं भाषेन्नरो इह।
अन्यसूत्रसहस्राणि न तद्भवति दुष्करम्॥ २०॥  10

निर्वृतस्मिन्तु[8] लोकेन्द्रे पश्चात्काले सुदारुणे।
य इदं धारयेत्सूत्रं भाषेद्वा तत्सुदुष्करम्॥ २१॥

आकाशधातुं यः सर्वामेकमुष्टिंतु[9] निक्षिपेत्।
प्रक्षिपित्वा च गच्छेत न तद्भवति दुष्करम्॥ २२॥

यस्तु ईदृशकं सूत्रं निर्वृतस्मिन्तदा मपि।  15
पश्चात्काले लिखेच्चापि इदं भवति दुष्करम्॥ २३॥

---

1) MSS. except O. add यूयं.

2) All but O. कुलपुत्राः

3) Sic O.; हन्ति स नायकः the rest.

4) लु in all MSS. but O.

5) यश्चेमां A. B. W. O. यश्च इमं Cb. K.

6) स्रां A. W. स्रिं B. स्रीं Cb. K. O.

7) यश्च भवाग्रे स्थित्वा A. Cb. W. °तिष्ठित्वा K. भवाग्रे यश्च तिष्ठत्वा B.

8) All ते ऽस्मि. Many lines wanting in O.

9) सृक्षि A. सृप्रक्षि W. तृ निक्षि Cb. K.

पृथिवीधातुं च यः सर्वां नखाग्रे संप्रवेशयेत् ।
प्रतिपित्वा च गच्छेत ब्रह्मलोकं पि आरुहेन् ॥ २४ ॥
न दुष्करं हि सो[1] कुर्यान्न च वीर्य स्य तत्तकम् ।
तं[2] दुष्करं करित्वान सर्वलोकस्यिहायतः[3] ॥ २५ ॥
5 अतो ऽपि दुष्करतरं[4] निर्वृतस्य तदा मम ।
पश्चात्काले[5] इदं सूत्रं वदेया यो मुहूर्तकम् ॥ २६ ॥
न दुष्करमिदं लोके कल्पदाहस्मि यो नरः ।
मध्ये गच्छेत दह्यन्तस्[6] तृणभारं वहेत च ॥ २७ ॥
अतो ऽपि दुष्करतरं निर्वृतस्य तदा मम ।
10 धारयित्वा इदं[7] सूत्रमेकसत्त्वं पि श्रावयेत् ॥ २८ ॥
धर्मस्कन्धसहस्राणि चतुरशीतिं पि[8] धारयेत् ।
सोपदेशान्यथाप्रोक्तान्देशयेत्प्राणिकोटिनाम् ॥ २९ ॥
न ह्येतं[9] दुष्करं भोति तस्मिन्कालस्मि[10] भिक्षुणाम् ।
विनयेच्छ्रावकान्सर्वा पञ्चाभिज्ञासु स्थापयेत् ॥ ३० ॥

---

1) सत्क A. सत्कु B. W. सः कु Cb. सो कु K.

2) Prākṛt for तद्.

3) स्मिहायतो A. W. मिहायतो Cb. स्मिहागतः B. K. Our r. conjectural.

4) All MSS. add कुर्यान् but see vs. 28 below.

5) ले in all MSS.

6) दाह्येत्तो A. दह्यन्तो B. Cb. K. W., the more original reading.

7) इमं Cb. K.

8) शीतिं पि B. K. The other MSS. have ति धा, omitting पि; metrically wrong.

9) ह्येतं A. W. एतं B. Cb. एत K. Skr. एतद्.

10) कालेथ K. कालेस्मि Cb.

तस्येदं दुष्करतरं इदं सूत्रं च धारयेत्[1]।
श्रद्दधेदधिमुच्येद्वा भाषेद्वापि पुनः पुनः ॥ ३१ ॥
कोटीसहस्रान्बहवः[2] अर्हत्वे यो ऽपि स्थापयेत्।
षडभिज्ञान्महाभागान्यथा गङ्गाय वालिकाः ॥ ३२ ॥
अतो बहुतरं[3] कर्म करोति स नरोत्तमः। 5
निर्वृतस्य हि यो मह्यं सूत्रं धारयते वरम् ॥ ३३ ॥
लोकधातुसहस्रेषु बहु मे धर्म भाषिताः।
अद्यापि चाहं भाषामि बुद्धज्ञानस्य कारणात् ॥ ३४ ॥
इदं तु सर्वसूत्रेषु सूत्रमग्रं प्रवुच्यते[4]।
धारेति यो इदं सूत्रं स धारे जिनविग्रहम् ॥ ३५ ॥ 10
भाषध्वं कुलपुत्राहो[5] संमुखं वस्तथागतः।
य उत्सहति वः कश्चित्पश्चात्काले[6]स्मि धारणाम्[7] ॥ ३६ ॥
महत्प्रियं[8] कृतं भोति लोकनाथान सर्वशः।
दुराधारमिदं सूत्रं धारयेद्यो मुहूर्तकम् ॥ ३७ ॥
संवर्णितश्च सो भाति लोकनाथेहि[9] सर्वदा। 15
शूरः शौटीर्यवांश्चापि[10] क्षिप्राभिज्ञश्च बोधये ॥ ३८ ॥

---

1) य इदं सूत्र धा O.
2) स्रां बहव: A. W. स्रबहवः B. स्राबहव Cb. K. O.
3) दुष्करतरं Cb.
4) प्रबुच्चति A. Cb. W. प्रबुद्धति B. प्रबुध्यते K. The original r. पवुच्चति.
5) हे A. हो B. Cb. K. हं W.
6) ले W.
7) णां A.
8) महत्प्रियं Cb. K. महाप्रियं the rest.
9) थेन K. थान Cb.
10) सौटीरवांश्चापि A. सौटीरवं चैव B. सौटीर्यवाश्चेपिव Cb. सौटीरवांश्चैव K. सौटीरकांश्चापि W.

धुरावाहश्च सो भोति लोकनाथान श्रीरसः।
दान्तभूमिमनुप्राप्तः सूत्रं धारेति यो इदम्[1]॥ ३९॥
चक्षुभूतश्च सो भोति लोके सामर[2]मानुषे।
इदं[3] सूत्रं प्रकाशित्वा निर्वृते नरनायके॥ ४०॥
5 वन्दनीयश्च सो भोति सर्वसत्त्वान पण्डितः।
पश्चिमे कालि यो भाषेत्सूत्रमेकं[4] मुहूर्तकम्[5]॥ ४१॥

अथ खलु भगवान्कृत्स्नं बोधिसत्त्वगणं सासुरं च लोकमामन्त्र्यैतदवोचत्। भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्यसंख्येयाप्रमेयान्कल्पान्सद्धर्मपुण्डरीकं[6] सूत्रं पर्येषितवानखिन्नो ऽविश्रान्तः। पूर्वं चाहमनेकान्कल्पाननेकानि कल्पशत[7]सहस्राणि राजाभूवम्।
10 अनुत्तरायां सम्यक्संबोधौ कृतप्रणिधानो[8] न च मे चित्तव्यावृत्तिरभूत्। षण्णां च पारमितानां परिपूर्या[9] उद्युक्तो ऽभूवमप्रमेयदानप्रदः सुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवाडजातरूपरजताश्मगर्भमुसारगल्वलोहितमुक्ताग्रामनगरनिगमजनपदराष्ट्रराजधानीभार्यापुत्रदुहितृदासीदासकर्मकरपौरुषेय[10]हस्त्यश्वरथयावदात्मशरीरपरित्यागी करचरणशि-

1) इमं in all MSS.

2) रु Cb., which is admissible, provided one r. समरु.

3) इमं B. K.

4) मेतत्मु A. K. W. मेतं B. मेकं मु Cb. MSS. add इति.

5) Hereafter Kumārajīva makes the 12th chapter entitled Devadatta-parivarta; so does Dharmarakṣa sometimes under the title of Brahmacāriparivarta. The whole up to the beginning of Ch. XII is a clumsy interpolation.

6) Cb. adds धर्मपर्यायं.

7) शत left out in B. Cb. But K. reads कल्पशतानि अनेकानि कल्पसहस्राणि.

8) ने B.

9) परिपूर्य A. °र्ये B. °र्यै Cb. K W.

10) कर्म°षेय in B. K. only.

रोत्तमाङ्गप्रत्यङ्गजीवितदाता[1]। न च मे कदाचिदाग्रह[2]चित्त[3]मुत्पन्नम्। तेन च समयेनायं लोको दीर्घायुरभूदनेकवर्षशतसहस्रजीवितेन चाहं कालेन धर्मार्थं[4] राज्यं कारितवान्न विषयार्थम्। सो ऽहं ज्येष्ठं कुमारं राज्ये ऽभिषिच्य चतुर्दिशं ज्येष्ठधर्मगवेषणायोद्युक्तो ऽभूवमेवं घण्टया घोषापयितवान्। यो मे ज्येष्ठं धर्ममनुप्रदास्यत्यर्थं चाख्यास्यति तस्याहं दासो भूयासम्[5]। तेन च कालेनर्षिरभूत् स मामेतदवोचत्। अस्ति महाराज सद्धर्मपुण्डरीकं नाम सूत्रं[6] ज्येष्ठधर्मनिर्देशकम्। तद्यदि दास्यम्[7]भ्युपगच्छसि ततस्ते ऽहं तं धर्मं श्रावयिष्यामि। सो ऽहं श्रुत्वा तस्यर्षेर्वचनं हृष्टस्तुष्ट उदग्र आत्तमनाः[8] प्रीतिसौमनस्यजातो[9] येन स[10] ऋषिस्तेनोपेयिवानु[11]पेत्यावोचत्[12]। यत्ते दासेन कर्म करणीयं तत्करोमि। सो ऽहं तस्यर्षेर्दासभावमभ्युपेत्य तृणकाष्ठपानीयकन्दमूलफलादीनि प्रेष्यकर्माणि कृतवान्यावद्द्वाराध्यक्षो ऽप्यहमासम्। दिवसं[13] चैवंविधं कर्म कृत्वा रात्रौ शयानस्य[14] मञ्चके पादान्धारयामि। न च मे कायक्लमो न चेतसि[15] क्लमो ऽभूत्। एवं च मे कुर्वतः परिपूर्णं वर्षसहस्रं गतम्॥

---

1) दात्रा K.

2) ह left out in Cb.

3) चित्त in all MSS.

4) थं A. B. Cb. W. र्थं K.

5) भूयात् A. W. भूतयं B. भूयां Cb. O. भूया K.

6) MSS. but Cb. add धर्मपर्याय

7) Sic O.; दास्यत्व the rest.

8) All but Cb. add प्रमुदित.

9) In B. K. O. only.

10) A. W. read महा ऋषि.

11) नोपयित्वा A. W. नोपेतयित्वा B. नोपयितवा Cb. नोपसंपेयित्वा K. नोपक्रामि O.

12) Badly for चम्. O. has correctly उवाच.

13) दिवसं is put after कर्म in K.

14) नं A. W. न K. शय्यानस्य B. शयानस्य Cb. O. शय्यामनमञ्चके the rest.

15) K. adds कः.

अथ खलु भगवांस्तस्यां वेलायामेतमेवार्थं परिद्योतयन्निमा गाथा अभाषत ॥

कल्पानतीतान्समनुस्मरामि[1] यदाहमासं धर्मिको[2] धर्मराजा ।
राज्यं च मे धर्महेतोः[3] कृतं तन्न[4] च कामहेतोर्ध्येष्ठधर्महेतोः[5] ॥ ४२ ॥

चतुर्दिशं मे कृत घोषणो ऽयं धर्मं वचेद्यस्तस्य दास्यं व्रजेयम् ।
5 आसीदृषिस्तेन कालेन धीमान्सूत्रस्य सद्धर्मनाम्नः प्रवक्ता ॥ ४३ ॥

स मामवोचद्यदि ते धर्मकाङ्क्षा उपेहि दास्यं धर्म ततः प्रवक्ष्ये ।
तुष्टश्चाहं वचनं तं निशाम्य कर्माकरोद्दासयोग्यं[6] तदा यत[7] ॥ ४४ ॥

न कायचित्तक्लमथो स्पृशेन्मां सद्धर्महेतोर्दासमागतस्य[8] ।
प्रणिधिस्तदा मे भवि[9] सत्त्वहेतोर्नात्मानमुद्दिश्य न कामहेतोः ॥ ४५ ॥

10 स राज आसीत्तदा[10] लब्धवीर्यो अनन्यकर्माणि दशादिशासु[11] ।
परिपूर्णकल्पान सहस्र खिन्नो यावत्सूत्रं लब्धवान्धर्मनाम[12] ॥ ४६ ॥

तत्किं मन्यध्वे भिक्षवो ऽन्यः स तेन कालेन तेन समयेन राजाभूत् । न खलु पुनरेवं द्रष्टव्यम् । तत्कस्य हेतोः । अहं स तेन कालेन तेन समयेन राजाभूवम्[13] । स्यात्खलु पुन-

---

1) मो Cb.

2) धा A. B. Cb. W. ध K. «The text of these verses is one mass of corruption, as is proved by the repeated offences against the metre». — Prof. Kern's note on his version, p. 246.

3) धर्मस्य K.

4) तन् in B. K. only.

5) धर्मस्य A. B. W. धर्मार्थस्य Cb. धर्मार्थ K.

6) कर्माकर्षदास्य A. W. कर्माकरोदास B. कर्मकारोप्यस Cb. कर्मकार्यं दास K.

7) तदायं A. Cb. तदायत B. K. तदायत् W. यत, Skr. यतः.

8) B. Cb. K. W. add. ता. To read दासतां गतस्य.

9) भव A. W.

10) राजासी A. B. K. W. राज आसी Cb.

11) दि A. The foregoing कर्माणि impossible.

12) नामां A. नाम B. Cb. नामं K. नामस W.

13) भूत् A. W.

र्भिक्षवो ऽन्यः स तेन कालेन तेन समयेनर्षिरभूत्। न खलु पुनरेवं द्रष्टव्यम्। अयमेव स तेन कालेन तेन समयेन देवदत्तो भिक्षुर्ऋषिरभूत्। देवदत्तो हि भिक्षवो मम कल्याणमित्रम्। देवदत्तमेव चागम्य(1) मया षट्पारमिताः परिपूरिता महामैत्री महाकरुणा महामुदिता महोपेक्षा द्वात्रिंशन्महापुरुषलक्षणान्यशीत्यनुव्यञ्जनानि(2) सुवर्णवर्णच्छविता दशबलानि चत्वारि वैशारद्यानि चत्वारि संग्रहवस्तून्यष्टादशावेणिकबुद्धधर्मा महर्द्धिबलता(3) दशदि- 5 क्सत्त्वनिस्तारणता(4) सर्वमेतद्देवदत्तमागम्य। आरोचयामि वो भिक्षवः प्रतिवेदयाम्येष देवदत्तो भिक्षुरनागते ऽध्वन्यप्रमेयैः कल्पैरसंख्येयैर्देवराजो(5) नाम तथागतो ऽर्हन्सम्यक्संबुद्धो भविष्यति(6) विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च भगवान्देवसोपानायां लोकधातौ। देवराजस्य खलु पुनर्भिक्षवस्तथागतस्य(7) विंशत्यन्तरकल्पानायुष्प्रमाणं भविष्यति। विस्तरेण च धर्मं देशयिष्यति। गङ्गानदी- 10 वालुकासमाश्च(8) सत्त्वाः सर्वक्लेशप्रहाणादर्हत्त्वं साक्षात्करिष्यन्ति। अनेके च सत्त्वाः प्रत्येकबोधौ चित्तमुत्पादयिष्यन्ति। गङ्गानदीवालुकासमाश्च(9) सत्त्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यन्त्यवैवर्तिकक्षान्तिप्रतिलब्धाश्च भविष्यन्ति। देवराजस्य खलु पुनर्भिक्षवस्तथागतस्य परिनिर्वृतस्य विंशत्यन्तरकल्पान्सद्धर्मः स्थास्यति। न च शरीरं धातुभेदेन भेत्स्यते(10)। एकघनं चास्य शरीरं भविष्यति सप्तरत्नस्तूपं प्रविष्टम्। स च स्तूपः 15

---

1) तं ह्यागम्य A. W. तमेव चागम्य B. K. तं चागम्य Cb.

2) A. W. add व्योमप्रभावता, B. adds व्यामप्रता, K. adds व्योमप्रभता. But Cb. and the two Chinese versions leave it out.

3) बला K.

4) वा added in all but K. W.

5) B. K. add तर after असंख्येय.

6) लोके is added here in Cb. K.

7) B. K. add अर्हतः सम्यक्संबुद्धस्य.

8) काम Cb. K. W. कोप B.

9) काम A. Cb. K. W. कोप B.

10) संदृश्यते A. W. भोत्स्यते B. K. भेत्स्यते Cb.

षष्टियोजनशतान्युच्चैस्त्वेन[1] भविष्यति चत्वारिंशद्योजनान्यायामेन । सर्वे च तत्र देवमनुष्याः पूजां करिष्यन्ति पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिर्गाथाभिर्गीतेन चाभिष्टोष्यन्ति । ये च तं स्तूपं प्रदक्षिणां करिष्यन्ति प्रणामं वा तेषां केचिदग्रफलमर्हत्त्वं साक्षात्करिष्यन्ति केचित्प्रत्येकबोधिमनुप्राप्स्यन्ते । अचिन्त्याश्चाप्रमेया देव[2]मनुष्या अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पाद्याविनिवर्तनीया भविष्यन्ति ॥

अथ खलु भगवान्पुनरेव भिक्षुसंघमामन्त्रयते स्म । यः कश्चिद्भिक्षवो ऽनागते ऽध्वनि कुलपुत्रो वा कुलदुहिता वेदं[3] सद्धर्मपुण्डरीकं सूत्रपरिपरिवर्तं श्रोष्यति श्रुत्वा च न काङ्क्षिष्यति[4] न विचिकित्सिष्यति[4] विशुद्धचित्तश्चाधिमोक्ष्यते । तेन त्रिसृणां दुर्गतीनां द्वारं पिथितं भविष्यति । नरकतिर्यग्योनियमलोकोपपत्तिषु न पतिष्यति । दशदिग्[5]बुद्धक्षेत्रोपपन्नश्चेदमेव सूत्रं जन्मनि जन्मनि श्रोष्यति । देवमनुष्यलोकोपपन्नस्य चास्य विशिष्टस्थानप्राप्तिर्भविष्यति । यस्मिंश्च बुद्धक्षेत्र उपपत्स्यते[6] तस्मिन्नौपपादुके सप्तरत्नमये पद्म उपपत्स्यते तथागतस्य संमुखम्[7] ॥

अथ खलु तस्यां वेलायामधस्ताद्दिशः [8]प्रभूतरत्नस्य तथागतस्य बुद्धक्षेत्रादागतः प्रज्ञाकूटो नाम बोधिसत्त्वः[9] । स तं प्रभूतरत्नं तथागतमेतदवोचत् । गच्छामो भगवन्स्वकं बुद्धक्षेत्रम् । अथ खलु भगवाञ्शाक्यमुनिस्तथागतः प्रज्ञाकूटं बोधिसत्त्वमेतदवोचत् । मुहूर्तं तावत्कुलपुत्रागमयस्व यावन्मदीयेन बोधिसत्त्वेन मञ्जुश्रिया कुमारभूतेन सार्धं[10] कंचिदेव

---

1) शत left out in B. Cb. K.

2) B. adds नाग.

3) वा एतत् Cb. K.

4) Left out in A.

5) दशसु दिक्षु B.

6) उत्पत्स्यते A.

7) संमुखीभूतः Cb. K.

8) K. adds भगवतः leaving out तथागतस्य

9) B. K. add महासत्त्वः.

10) कश्चि Cb. K. किंचि the rest.

धर्मविनिश्चयं कृत्वा पश्चात्स्वकं बुद्धक्षेत्रं गमिष्यामि। अथ खलु तस्यां वेलायां मञ्जुश्रीः कुमारभूतः सहस्रपत्रे पद्मे शकटचक्रप्रमाणमात्रे निषण्णो ऽनेकबोधिसत्त्वपरिवृतः पुरस्कृतः[1] समुद्रमध्यात्सागरनागराजभवनादभ्युद्गम्योपरि[2] वैहायसं खगपथेन गृध्रकूटे पर्वते भगवतो ऽन्तिकमुपसंक्रान्तः। अथ[3] मञ्जुश्रीः कुमारभूतः पद्मादवतीर्य भगवतः[4] शाक्यमुनेः प्रभूतरत्नस्य च तथागतस्य पादौ शिरसाभिवन्दित्वा येन प्रज्ञाकूटो बोधिसत्त्वस्तेनोपसंक्रान्त 5 उपसंक्रम्य प्रज्ञाकूटेन बोधिसत्त्वेन सार्धं संमुखं संमोदनीं संरञ्जनीं विविधां कथामुपसंगृह्यैकान्ते न्यषीदत्। अथ खलु प्रज्ञाकूटो बोधिसत्त्वो मञ्जुश्रियं कुमारभूतमेतदवोचत्। समुद्रमध्यगतेन[5] त्वया मञ्जुश्रीः कियान्सत्त्वधातुर्विनीतः। मञ्जुश्रीराह। अनेकान्यप्रमेयाण्यसंख्येयानि सत्त्वानि विनीतानि। तावदप्रमेयाण्यसंख्येयानि[6] यावद्वाचा[7] न शक्यं[7] विज्ञापयितुं[7] चित्तेन वा चिन्तयितुम्। मुहूर्तं तावत्कुलपुत्रागमयस्व यावत्पूर्वनिमित्तं द्रक्ष्यसि। सम- 10 नन्तरभाषिता चेयं मञ्जुश्रिया कुमारभूतेन वाक् तस्यां वेलायामनेकानि पद्मसहस्राणि समुद्रमध्यादभ्युद्गतान्युपरि वैहायसं तेषु च[8] पद्मेष्वनेकानि बोधिसत्त्वसहस्राणि संनिषण्णानि। अथ ते बोधिसत्त्वास्तेनैव खगपथेन येन गृध्रकूटः पर्वतस्तेनोपसंक्रान्ता उपसंक्रम्य तत्रश्चोपरि वैहायसं स्थिताः संदृश्यन्ते स्म। सर्वे च ते मञ्जुश्रिया कुमारभूतेन विनीता अनुत्तरायां सम्यक्संबोधौ। तत्र ये बोधिसत्त्वा[9] महायानसंप्रस्थिताः पूर्वमभूवंस्ते महाया- 15

---

1) Left out in Cb.

2) स्य उपरि B.

3) Cb. adds च.

4) Left out in B. Cb. K.

5) मध्य left out in B. Cb. K.

6) असंख्येयानि left out in Cb.

7) Left out in Cb. Then follows in the rest न शक्यमभिपालयितुं, a mistake for °लापयितुं, which ought to be °लपितुं.

8) Left out in Cb. K.

9) Cb. adds महासत्त्वा.

नगुणान्षट्पारमिताः संवर्णयन्ति । ये श्रावकपूर्वा[1] बोधिसत्वास्ते श्रावकयानमेव संवर्णयन्ति । सर्वे च ते सर्वधर्मान्[2]शून्यानिति संजानन्ति स्म[3] महायानगुणांश्च । अथ खलु मञ्जुश्रीः कुमारभूतः प्रज्ञाकूटं बोधिसत्वमेतदवोचत् । सर्वो ऽयं कुलपुत्र मया समुद्रमध्यगतेन सत्त्वविनयः[4] कृतः स चायं संदृश्यते । अथ खलु प्रज्ञाकूटो बोधिसत्वो मञ्जुश्रियं कुमारभूतं गाथा-
5 भिगीतेन परिपृच्छति स्म[5] ॥

महाभद्र प्रज्ञया शूरनामसंख्येया[6] ये विनीतास्त्वयाद्य[7] ।
सत्त्वा अमी कस्य चायं प्रभावस्तद्ब्रूहि पृष्टो नरदेव त्वमेतत् ॥ ४७ ॥
कं[8] वा धर्मं देशितवानसि[9] त्वं किं वा सूत्रं बोधिमार्गोपदेशम्[10] ।
यच्छ्रुत्वामी[11] बोधये जातचित्ताः सर्वज्ञत्वे निश्चितं लब्धगाधाः[12] ॥ ४८ ॥

10 मञ्जुश्रीराह । समुद्रमध्ये सद्धर्मपुण्डरीकं सूत्रं[13] भाषितवान्न चान्यत् । प्रज्ञाकूट

---

1) श्रावकपूर्व A. W. श्रावकापूर्वा B. श्रावकपूर्वा Cb. K.

2) सर्वान् B. K.

3) Left out in O.

4) MSS. but O. संवि°.

5) पर्यपृच्छत Cb. पर्यपृच्छत् K. परिपृच्छत् O.

6) ख्य K. W.

7) The whole verse very different in O. महासमुद्र महाप्रज्ञ महाशूर महाबल । असंख्येया विनीता . . . It is hardly necessary to read शूर for सूर, and to leave out तम् before एतत्.

8) किं A. B. K. W. कं Cb.

9) The short syllable against the metre. The original reading probably तावी.

10) MSS. देशेयम्.

11) यच् in B. only.

12) लब्धगा A. लब्धलाभाः B. लब्धगाभाः Cb. लब्धगाथा K. W. Corrected by us.

13) Left out in B. Cb. K.

ग्राह। इदं सूत्रं गम्भीरं सूक्ष्मं दुर्दर्शं[1] न चानेन सूत्रेण किंचिदन्यत्सूत्रं सममस्ति। अस्ति कश्चित्सत्त्वो य इदं सूत्ररत्नं[2] सत्कुर्यादवबोद्धुमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। मञ्जुश्रीराह। अस्ति कुलपुत्र सागरस्य नागराज्ञो दुहिताष्टवर्षा जात्या महाप्रज्ञा तीक्ष्णेन्द्रिया ज्ञानपूर्वंगमेन कायवाङ्मनस्कर्मणा समन्वागता सर्वतथागतभाषितव्यञ्जनार्थोद्ग्रहणे धारणीप्रतिलब्धा सर्वधर्मसत्त्वसमाधानसमाधिसहस्रैकक्षणप्रतिलाभिनी। बोधिचित्ताविनिवर्तिनी[3] विस्तीर्णप्रणिधाना सर्वसत्त्वेष्वात्मप्रेमानुगता गुणोत्पादने[4] च समर्था न च तेभ्यः परिहीयते। स्मितमुखी परमया शुभवर्णपुष्करतया समन्वागता मैत्रचित्ता करुणां च वाचं भाषते। सा सम्यक्संबोधिमभिसंबोद्धुं समर्था। प्रज्ञाकूटो बोधिसत्त्व आह। दृष्टो मया भगवाञ्शाक्यमुनिस्तथागतो बोधाय घटमानो बोधिसत्त्वभूतो ऽनेकानि पुण्यानि कृतवाननेकानि च कल्पसहस्राणि[5] न कदाचिद्वीर्यं स्रंसितवान्। त्रिसाहस्रमहासाहस्रायां लोकधातौ नास्ति कश्चिदन्ततः सर्षपमात्रो ऽपि पृथिवीप्रदेशो यत्रानेन शरीरं न निक्षिप्तं सत्त्वहितहेतोः। पश्चाद्बोधिमभिसंबुद्धः। क एवं[6] श्रद्दध्याद्यदनया[7] शक्यं मुहूर्तेनानुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्॥

अथ खलु तस्यां वेलायां सागरनागराजदुहिताग्रतः स्थिता संदृश्यते स्म[8]। सा भगवतः पादौ शिरसाभिवन्द्यैकान्ते[9] ऽस्थात्तस्यां वेलायामिमा गाथा अभाषत॥

---

1) दर्शनं A. दुर्दर्शनं W.

2) रत्नसूत्रं B. K.

3) र्तनीय B.

4) नेन B. K.

5) B. adds च.

6) एनं B. K. एतां W. एतं O.

7) श्रद्दध्यापदनया A. श्रद्धास्यति यत्तया B. श्रद्दधात्। यदा ऽन्यया Cb. श्रद्दध्यात्। यत्तया K. श्रद्दध्याद्यदिनया W. श्रद्दधास्यति यः O.

8) Left out in A. W. O.

9) सा वन्दित्वा A. W. सौ वन्द्यै O.

पुण्यं पुण्यं गम्भीरं च दिशः स्फुरति सर्वशः ।
सूक्ष्मं शरीरं द्वात्रिंशल्लक्षणैः समलंकृतम् ॥ ४९ ॥
अनुव्यञ्जनयुक्तं च सर्वसत्त्वनमस्कृतम् ।
सर्वसत्त्वाभिगम्यं च अन्तरापणवद्यथा ॥ ५० ॥
5 यथेच्छया मे संबोधिः साक्षी मे ऽत्र तथागतः ।
विस्तीर्णं देशयिष्यामि धर्मं दुःखप्रमोचनम् ॥ ५१ ॥

अथ खलु तस्यां वेलायामायुष्माञ्शारिपुत्रस्तां सागरनागराजदुहितरमेतदवोचत् । केवलं कुलपुत्रि[1] बोधाय चित्तमुत्पन्नमविवर्त्याप्रमेयप्रज्ञा चासि सम्यक्संबुद्धत्वं तु दुर्लभम् । अस्ति कुलपुत्रि[1] स्त्री न च वीर्यं स्रंसयत्य[2]नेकानि च कल्पशतान्यनेकानि च कल्प-
10 सहस्राणि पुण्यानि करोति षट्पारमिताः परिपूरयति न चाद्यापि बुद्धत्वं प्राप्नोति । किं-कारणं । पञ्च स्थानानि स्त्र्यद्यापि न प्राप्नोति । कतमानि[3] पञ्च । प्रथमं[3] ब्रह्मस्थानं द्वितीयं शक्रस्थानं तृतीयं महाराज[4]स्थानं चतुर्थं चक्रवर्तिस्थानं पञ्चममवैवर्तिकबोधिसत्त्वस्थानम् ॥

अथ खलु तस्यां वेलायां सागरनागराजदुहितुरेको मणिरस्ति[5] यः कृत्स्नां त्रिसा-
15 हस्रां महासाहस्रां लोकधातुं मूल्यं क्षमते[6] । स च मणिस्तया सागरनागराजदुहित्रा भगवते दत्तः । स भगवता चानुकम्पामुपादाय प्रतिगृहीतः । अथ सागरनागराजदुहिता प्रज्ञाकूटं बोधिसत्त्वं स्थविरं च शारिपुत्रमेतदवोचत् । यो ऽयं मणिर्मया भगवतो दत्तः स च

1) ते कुलपुत्रि B. Cb. K. कुलदुहिते O. भगिनि the others.
2) संमयति B. K. ज्ञनयति Cb. प्रशयति W. स्रंसयति O.
3) Left out in O.
4) राजिक Cb.
5) कमणिरत्नम B. K. कं मणिरत्नम् O.
6) क्षपयति K. क्षमति O.

भगवता[1] शीघ्रं प्रतिगृहीतो नेति[2]। स्थविर आह। त्वया च शीघ्रं दत्तो भगवता च शीघ्रं प्रतिगृहीतः। सागरनागराजदुहिताह। यद्यहं भदन्त शारिपुत्र महर्द्धिकी स्यां शीघ्रतरं[3] सम्यक्संबोधिमभिसंबुध्येयं न चास्य मणेः प्रतिग्राहकः स्यात्॥

अथ तस्यां वेलायां सागरनागराजदुहिता सर्वलोकप्रत्यक्षं स्थविरस्य च शारिपुत्रस्य प्रत्यक्षं तत्स्त्रीन्द्रियमन्तर्हितं पुरुषेन्द्रियं च प्रादुर्भूतं बोधिसत्त्वभूतं चात्मानं संदर्शयति। तस्यां वेलायां दक्षिणां दिशं प्रक्रान्तः[4]। अथ दक्षिणस्यां दिशि विमला नाम लोकधातुस्तत्र सप्तरत्नमये बोधि[5]वृक्षमूले निषण्णमभिसंबुद्धमात्मानं संदर्शयति स्म[6] द्वात्रिंशल्लक्षणधरं सर्वानुव्यञ्जनरूपं प्रभया च[6] दशदिशं स्फुरित्वा धर्मदेशनां कुर्वाणम्। ये च सहायां लोकधातौ सत्त्वास्ते सर्वे तं तथागतं[7] पश्यन्ति स्म[8] सर्वैश्च देवनागयक्षगन्धर्वासुरगरुडकिंनरमनुष्यामनुष्यैर्नमस्यमानं[9] धर्मदेशनां च कुर्वन्तम्[10]। ये च सत्त्वास्तस्य तथागतस्य धर्मदेशनां शृण्वन्ति सर्वे तेऽविनिवर्तनीया[11] भवन्त्य[12]नुत्तरायां सम्यक्संबोधौ। सा च विमला लोकधातुरियं च सहा लोकधातुः षड्विकारं प्राकम्पत्। भगवतश्च शाक्यमुनेः पर्ष-

---

1) अनु °य कम्पामुपादाय added in B.

2) हीत A. °त उत B. °तो नेति Cb. °तो उत्तेति K. °त उतरेति W. तो नेति स्थविर आह O. न is here «or not». The reading in B. W. points to उत नेति.

3) तरेण Cb.

4) ता B. K.

5) बोधि left out in B. K.

6) Left out in K.

7) भगवन्तं A. W.

8) In B. only.

9) नमस्कारं Cb.

10) कुर्वाणं B.

11) अवैवर्तिका Cb.

12) भविष्यन्ति A. K. W.

न्मण्डलानां त्रयाणां प्राणिसहस्राणामनुत्पत्तिकधर्मक्षान्तिप्रतिलाभो ऽभूत् । त्रयाणां च प्राणिशत[1]सहस्राणामनुत्तरायां सम्यक्संबोधौ व्याकरणप्रतिलाभो ऽभूत् ॥

अथ प्रज्ञाकूटो बोधिसत्त्वो महासत्त्वः[2] स्थविरश्च शारिपुत्रस्तूष्णीमभूताम् ॥

॥ इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये स्तूपसंदर्शनपरिवर्तो नामैकादशमः[3] ॥

1) शत added in Cb. only.

2) Left out in A. W.

3) दशः Cb.

# XII.

अथ खलु भैषज्यराजो बोधिसत्त्वो महासत्त्वो महाप्रतिभानश्च[1] बोधिसत्त्वो महासत्त्वो विंशतिबोधिसत्त्वशतसहस्रपरिवारो भगवतः संमुखमिमां वाचमभाषेताम्[2] । अल्पोत्सुको भगवान्भवत्वस्मिन्नर्थे । वयमिमं भगवन्धर्मपर्यायं तथागतस्य परिनिर्वृतस्य सत्त्वानां देशयिष्यामः[3] संप्रकाशयिष्यामः[4] । किं चापि भगवन् शठकाः सत्त्वास्तस्मिन्काले भविष्यन्ति परीत्तकुशलमूला अधिमानिका[5] लाभसत्कारसंनिश्रिता अकुशलमूलप्रतिपन्ना दुर्दमा अधिमुक्तिविरहिता अनधिमुक्तिबहुलाः । अपि तु खलु पुनर्वयं भगवन्क्षान्तिबलमुपदर्शयित्वा[6] तस्मिन्काल इदं सूत्रमुद्देक्ष्यामो[7] धारयिष्यामो[8] देशयिष्यामो लिखिष्यामः सत्करिष्यामो गुरुकरिष्यामो मानयिष्यामः पूजयिष्यामः कायजीवितं च वयं भगवन्नुत्सृज्येदं सूत्रं प्रकाशयिष्यामः । अल्पोत्सुको भगवान्भवत्विति ॥

अथ खलु तस्यां पर्षदि शैक्षाशैक्षाणां भिक्षूणां पञ्चमात्राणि भिक्षुशतानि भगवन्तमेतदूचुः[9] । वयमपि भगवन्नुत्सहामह इमं धर्मपर्यायं संप्रकाशयितुमपि तु खलु पुनर्भगवनन्यासु[10] लोकधातुष्विति । अथ खलु यावन्तस्ते भगवतः श्रावकाः शैक्षाशैक्षा[11] भगवता व्या-

1) श्च K.

2) मभाषत A. Cb. W. मभाषेतां B. K.

3) A. B. K. add धर्मं.

4) In A. W. only.

5) अभि K.

6) पदर्श्य K. पदर्शयंति स्म W.

7) मुपदे Cb.

8) Left out in Cb.

9) दवोचत् A. B. K. W. ऊचुः Cb.

10) न्ये Cb. K.

11) ये ते added in A. W.

कृता अनुत्तरायां सम्यक्संबोधावष्टौ भिक्षुसहस्राणि सर्वाणि तानि येन भगवांस्तेनाञ्जलिं प्रणामय्य[1] भगवन्तमेतदूचुः[2]। अल्पोत्सुको भगवान्भवतु वयमपीमं धर्मपर्यायं संप्रकाशयिष्यामस्तथागतस्य परिनिर्वृतस्य पश्चिमे काले पश्चिमे समये ऽपि त्वन्यासु[3] लोकधातुषु। तत्कस्य हेतोः। अस्यां[4] भगवन्सहायां[5] लोकधातावधिमानिकाः सत्त्वा अल्पकुशलमूला नित्यं व्यापन्नचित्ताः शठा वङ्कजातीयाः[6]॥

अथ खलु महाप्रजापती गौतमी भगवतो मातृभगिनी[7] षड्भिर्भिक्षुणीसहस्रैः सार्धं शैक्षाशैक्षाभिर्भिक्षुणीभिरुत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणामय्य[8] भगवन्तमुल्लोकयन्ती स्थिताभूत्। अथ खलु भगवांस्तस्यां वेलायां महाप्रजापतीं गौतमीमामन्त्रयामास। किं त्वं गौतमि दुर्मनस्विनी[9] स्थिता तथागतं व्यवलोकयसि। नाहं परिकीर्तिता व्याकृता चानुत्तरायां सम्यक्संबोधौ। अपि तु खलु पुनर्गौतमि सर्वपर्षद्व्याकरणेन व्याकृतासि। अपि तु खलु पुनस्त्वं गौतमि इत उपादायाष्टात्रिंशतां[10] बुद्धकोटीनयुतशतसहस्राणामन्तिके [सत्कारं गुरुकारं माननां पूजनामर्चनामपचायनां कृत्वा][11] बोधिसत्त्वो [महासत्त्वो][12] धर्मभाणको भविष्यसि। इमान्यपि षड्भिक्षुणीसहस्राणि शैक्षाशैक्षाणां भिक्षुणीनां त्वयैव सार्धं तेषां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके बोधिसत्त्वा धर्मभाणका भविष्यन्ति। ततः

---

1) प्रणामय्य A. W. प्रणम्य the rest.

2) दवोचत् A. B. Cb. W. ऊचुः K.

3) न्ये A. K. W.

4) अस्मिन् K.

5) यां left out in K.

6) वङ्क K. वञ्चक the rest.

7) मातृस्वषा added in K. सा in A. B. Cb. W.

8) प्रणामय्य A. प्रणम्य the others.

9) दु A. W. दौ the others; reading of O. unknown.

10) तस्त्वं च्युता समाना अनुपूर्वेण सपरिवारा इस्त्रिभावं विवर्तयित्वा अष्टात्रिं O.

11) The words between brackets wanting in O. See Engl. transl. p. 257, note 1.

12) Wanting in O.

परेण परतरेण[1] बोधिसत्त्वचर्यां परिपूर्य[2] सर्वसत्त्वप्रियदर्शनो नाम तथागतोऽर्हन्सम्यक्सं-
बुद्धो लोके भविष्यसि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता
देवानां च मनुष्याणां च बुद्धो भगवान्। स च गौतमि सर्वसत्त्वप्रियदर्शनस्तथागतोऽर्हन्स-
म्यक्संबुद्धस्तानि षड्भिक्षुणीसहस्राणि परंपराव्याकरणेन व्याकरिष्यत्यनुत्तरायां सम्य-
क्संबोधौ ॥ 5

अथ खलु राहुलमातुर्यशोधराया भिक्षुण्या[3] एतदभवत्। न मे भगवता नामधेयं
परिकीर्तितम्। अथ खलु भगवान्यशोधराया[4] भिक्षुण्याश्चेतसैव चेतः परिवितर्कमाज्ञाय
यशोधरां भिक्षुणीमेतदवोचत्। आरोचयामि ते यशोधरे प्रतिवेदयामि ते। त्वमपि दशानां
बुद्धकोटीसहस्राणामन्तिके[5] [सत्कारं गुरुकारं माननं पूजनामर्चनामपचायनं[6] कृत्वा] बो-
धिसत्त्वो धर्मभाणको भविष्यसि। बोधिसत्त्वचर्यां चानुपूर्वेण परिपूर्य[7] रश्मिशतसहस्रपरि- 10
पूर्णध्वजो नाम तथागतोऽर्हन्सम्यक्संबुद्धो लोके[8] भविष्यसि विद्याचरणसंपन्नः सुगतो
लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्भद्रायां
लोकधातौ। अपरिमितं च तस्य भगवतो रश्मिशतसहस्रपरिपूर्णध्वजस्य तथागतस्यार्हतः
सम्यक्संबुद्धस्यायुष्प्रमाणं भविष्यति ॥

अथ खलु महाप्रजापती[9] गौतमी भिक्षुणी षड्भिक्षुणीसहस्रपरिवारा यशोधरा च 15

---

1) A. Cb. W. O. add ते.

2) पूरयित्वा A. Cb. W. O.

3) भिक्षुण्या is put before यशोधराया except in K.

4) यां K.

5) इतश्चवित्वा स्त्रीभावं विवर्तयित्वा यशोधरे बुद्धकोटिनयुतशतसहस्राणां सा-
न्तिके O.

6) See above.

7) पूरयित्वा A. Cb. W. O. In O. added पश्चिमे समुच्छ्रये.

8) लोके omitted in A. Ca.

9) प्रजा left out in K.

भिक्षुणी[1] चतुर्भिक्षुणीसहस्रपरिवारा भगवतो ऽन्तिकात्स्वकं व्याकरणं श्रुत्वानुत्तरायां सम्यक्संबोधावाश्चर्यप्राप्ता अद्भुतप्राप्ताश्च[2] तस्यां वेलायामिमां गाथामभाषन्त[3] ॥

भगवन्विनेतासि विनायको ऽसि शास्तासि लोकस्य सदेवकस्य ।
आश्वासदाता नरदेवपूजितो[4] वयम्पि[5] संतोषित अद्य नाथ ॥ १ ॥

5 अथ खलु ता भिक्षुण्य इमां गाथां भाषित्वा भगवन्तमेतदूचुः । वयमपि भगवन्समु[6]त्सहामह इमं धर्मपर्यायं संप्रकाशयितुं[7] पश्चिमे काले पश्चिमे समये ऽपि त्वन्यासु[8] लोकधातुष्विति ॥

अथ खलु भगवान्येन तान्यशीतिबोधिसत्त्वकोटीनयुतशतसहस्राणि धारणीप्रतिलब्धानां बोधिसत्त्वानामवैवर्तिकधर्मचक्रप्रवर्तकानां तेनावलोकयामास । अथ खलु ते 10 बोधिसत्त्वा महासत्त्वाः समनन्तरावलोकिता[9] भगवता उत्थायासनेभ्यो येन भगवांस्तेनाञ्जलिं प्रणाम्यैवं[10] चित्तयामासुः । अस्माक[11]म्भगवानध्येषत्य[12]स्य धर्मपर्यायस्य संप्रकाशनतायै[13] । ते खल्वेवमनुविचिन्त्य संप्रकम्पिताः परस्परमूचुः[14] । कथं वयं कुलपुत्राः[15] करिष्यामो

1) Left out in K.
2) प्राप्त A. B. Cb. W. प्राप्त त K. The whole passage amplified in O.
3) षत A. B. षंत Cb. K. षतः W. र्षिंसु O.
4) ता A. Cb. W. तो K.
5) वयमपि A. B. W. वयम्पि Cb. K. वयंति O.
6) सम Left out in B. Cb. K. O.
7) कासितुं K.
8) न्येषु in all MSS., but see above.
9) All but O. ते.
10) प्रणामय्यैवं A. W. प्रणाम्यैवं B. Cb. प्रणाम्यैवं K. प्रणामयित्वा O.
11) स्मान्भ Cb. W.
12) Sic K. ष्यति O. The others have षयति.
13) नायेति A. W. नतायै Cb. K. नाय B. नताय O.
14) परंप B.
15) त्राहो O.

यद्भगवानध्येषत्यस्य[1] धर्मपर्यायस्यानागते ऽध्वनि संप्रकाशनतायै[2]॥ अथ खलु ते कुलपुत्रा भगवतो गौरवेणात्मनश्च पूर्वचर्याप्रणिधानेन भगवतो ऽभिमुखं सिंहनादं नदन्ते स्म। वयं भगवन्ननागते ऽध्वनीमं धर्मपर्यायं तथागते परिनिर्वृते दशसु दिक्षु गत्वा सर्वसत्त्वाँल्लेख-यिष्यामः[3] पाठयिष्यामश्चिन्तापयिष्यामः प्रकाशयिष्यामो भगवत एवानुभावेन। भगवांश्चा-स्माकमन्यलोकधातुस्थितो[4] रक्षावरणगुप्तिं करिष्यति॥ 5

अथ खलु ते बोधिसत्त्वा महासत्त्वाः समं संगीत्या[5] भगवन्तमाभिर्गाथाभिरध्यभाषन्त[6]॥

अल्पोत्सुकस्त्वं भगवन्भवस्व वयं तदा ते[7] परिनिर्वृतस्य।
[8]अपश्चिमे कालि[9] सुभैरवस्मिन्प्रकाशयिष्यामिदं[10] सूत्रमुत्तमम्॥ २॥

आक्रोशांस्तर्जनाश्चैव दण्डउद्गूरणानि[11] च।
बालानां संसहिष्यामो ऽधिवासिष्याम नायक॥ ३॥ 10

---

1) अयं भगवानस्माकमध्ये O.

2) नतायै A. W. नायेति B. K. नार्यति Cb. नताय O.

3) लिखापयिष्याम वाचापयिष्याम स्वाध्यापयिष्याम चि° O.

4) धातुस्थे K. धातुस्थो B.

5) समसंगीत्या एकस्वरेण भ° O.

6) षंते स्म A. B. K. षंते Cb. षते स्म W. षिंसु O.

7) वयंति सूत्रं O.

8) K adds स्वं. O. has तयात्ति सुभैरवकालि पश्चिमे. अप° our conjecture for प°.

9) ले W.

10) मीमं A. W. म्यम B. मि। मम Cb. मिम K. सूत्रमिदं विस्तरत प्रका-शयेत् O.

11) मु A. W. शताटना भोत्म दण्डानि मुद्गराणि च O. गू for गो in the other MSS. our conjecture.

दुर्बुद्धिनश्च वङ्काश्च शठा बालाधिमानिनः[1] ।
अप्राप्ते प्राप्तसंज्ञी च घोरे कालस्मि[2] पश्चिमे ॥ ४ ॥
अरण्यवृत्त[3]काश्चैव कन्थां[4] प्रावरियाण च ।
संलेखचरिता अस्मे[5] एवं वक्ष्यन्ति दुर्मती[6] ॥ ५ ॥
5 रसेषु गृद्ध सक्ताश्च गृहीणां धर्म देशयो[7] ।
सत्कृताश्च भविष्यन्ति षडभिज्ञा[8] यथा तथा ॥ ६ ॥
रौद्रचित्ताश्च दुष्टाश्च गृहचित्ताविवित्तकाः ।
अरण्यगुप्तिं प्रविशित्वा अस्माकं परिवादका[9]ः ॥ ७ ॥
अस्माकं चैव वक्ष्यन्ति लाभसत्कारनिश्रिताः ।
10 तीर्थिका[10] वतिमे भिक्षू[11] स्वानि काव्यानि[12] देशयुः ॥ ८ ॥
स्वयं सूत्राणि ग्रन्थित्वा लाभसत्कारकेतवः ।
पर्षाय[13] मध्ये भाषन्ते[14] अस्माकमनुकुट्टकाः[15] ॥ ९ ॥

---

1) धि A. W. भि B. Cb. K. दुर्बुद्धीनां च वङ्कानां चण्डा बालाधिमानिनाम् O.

2) संज्ञीनां भिक्षूणां कालि O.

3) Sic O.; चित्त the rest.

4) कन्थां left out in K. कस्थां A. कन्था B. O. कथं Cb. काचक्षां W.

5) Sic O. वृत्तिं करिष्याम A. W. वृत्ति धारस्यं B. वृत्त चारिस्य Cb. वृत्ति चरिष्याम K.

6) ती A. B. K. तीः Cb. तीम् W.

7) शनां A. W.

8) षड्भिज्ञाश्च Cb.

9) वार A. Cb. वादि B. वाद् K. W. कुट्टकाः O.

10) ति Cb. °के वादि O. त the others. वत for बत, cf. Pāli.

11) क्षु A. W. क्षूं B. Cb. क्षू K.

12) कर्या A. W. वाक्या B. Cb. K. काव्यानि Ca. O.

13) पर्याय A. W. पर्षाय B. Cb. K. परिषाय O.

14) भाष्यन्ति O.

15) क परि O.

राजेषु राजपुत्रेषु राजामात्येषु वा तथा।
विप्राणां गृहपतीनां च अन्येषां चापि भिक्षुणाम्॥ १०॥
वक्ष्यन्त्यवर्णमस्माकं तीर्थ्यवादं च चारयो[(1)]।
सर्वं वयं क्षमिष्यामो गौरवेण महर्षिणाम्॥ ११॥
ये चास्मान्कुत्सयिष्यन्ति तस्मिन्कालस्मि दुर्मती।                5
इमे बुद्धा भविष्यन्ति क्षमिष्यामथ[(2)] सर्वशः॥ १२॥
कल्पसंक्षोभभीष्मे[(3)]स्मिन्दारुणास्मि महाभये।
यक्षरूपा बहू भिक्षू अस्माकं परिभाषकाः॥ १३॥
गौरवेणोह[(4)] लोकेन्द्रे उत्सहाम सुदुष्करम्।
क्षान्तीय कक्ष्यां बन्धित्वा[(5)] सूत्रमेतं प्रकाशये॥ १४॥                10
अनर्थिका स्म कायेन जीवितेन च नायक[(6)]।
अर्थिकाश्च[(7)] स्म बोधीय[(8)] तव निक्षेपधारकाः॥ १५॥
भगवानेव जानीते यादृशाः पापभिक्षवः।
पश्चिमे कालि भेष्यन्ति संधाभाष्यमजानकाः॥ १६॥

---

1) यि B. K. तीर्थिका वाच चारयी O.

2) बुद्धा ति वक्ष्यन्ति अधिवासिष्याम O. क्षमयिष्यामथ the rest.

3) स्मे A. Cb. W. ष्म B. ष्मे K. क्ष O., meant क्ष्म. Perhaps to r. क्षोभि (= क्षोभे).

4) ण हि Cb. K. णाति O.

5) बन्धत्ता O.

6) This line is left out in Cb.

7) श्चा in all MSS. O. excepted, which has का वयं.

8) All बोधाय.

भृकुटी [1] सर्व मोढव्या म्रप्रज्ञप्तिः पुनः पुनः ।
निष्कासनं [2] विहारेभ्यो बहुकुट्टी [3] बहुविधा ॥ १७ ॥
स्राज्ञप्तिं [4] लोकनाथस्य स्मरन्ता [5] कालि पश्चिमे ।
भाषिष्याम इदं सूत्रं पर्षन्मध्ये विशारदाः [6] ॥ १८ ॥
5 नगरेषु च ग्रामेषु ये भेष्यन्ति इहार्थिकाः [7] ।
गत्वा गत्वास्य दास्यामो निततं तुभ्य [8] नायक ॥ १९ ॥
प्रेषणां तव लोकेन्द्र करिष्यामो महामुने ।
स्रल्पोत्सुको भव त्वं हि [9] शान्तिप्राप्तो [10] सुनिर्वृतः ॥ २० ॥
सर्वे च लोकप्रद्योता स्रागता ये दिशो दश [11] ।
10 सत्यां वाचं प्रभाषामो [12] स्रधिमुक्तिं विजानथ ॥ २१ ॥

॥ इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याय उत्साहपरिवर्तो [13] नाम द्वादशमः [14] ॥

---

1) टी A. W. टिः B. टं Cb. टीस्सर्व K. टी तीव्र O.
2) निष्कालना O.
3) उपक्रोशा O.
4) म्रप्राज्ञप्तिं B. म्रप्राप्तिं Cb
5) ता A. B. K. W. तो Cb. त O.
6) दा W
7) चे A. भविष्यन्ति स्रर्थि O.
8) Sic O ; तं च (a misread तव?) the rest.
9) भवाहि त्वं O.
10) All but O. ति for सु.
11) दश दिशा A. B. दश दिसाः Cb. दश दिशाः K दिशो दशः W. दशो दिश O.
12) षामो A. W. ष्याम B. Cb. K. षाम O.
13) हन O.
14) त्रपोद् O.

# XIII.

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत्। दुष्करं भगवन्परमदुष्करमे-[1] भिर्बोधिसत्त्वैर्महासत्त्वैः कृतमोढं[2] भगवतो गौरवेण। कथं भगवन्नेभिर्बोधिसत्त्वैर्महासत्त्वैरयं धर्मपर्यायः पश्चिमे काले पश्चिमे समये संप्रकाशयितव्यः। एवमुक्ते भगवान्मञ्जुश्रियं कुमारभूतमेतदवोचत्। चतुर्षु मञ्जुश्रीर्धर्मेषु प्रतिष्ठितेन बोधिसत्त्वेन महासत्त्वेनायं धर्मपर्यायः पश्चिमे काले पश्चिमे समये संप्रकाशयितव्यः। कतमेषु चतुर्षु। इह मञ्जुश्रीर्बोधिसत्त्वेन 5 महासत्त्वेनाचारगोचर[3]प्रतिष्ठितेनायं धर्मपर्यायः [पश्चिमे काले पश्चिमे समये][4] संप्रकाशयितव्यः। कथं च मञ्जुश्रीर्बोधिसत्त्वो महासत्त्व आचारगोचर[5]प्रतिष्ठितो भवति। यदा [च] मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वः क्षान्तो[6] भवति दान्तो दान्तभूमिमनुप्राप्तो ऽनुत्त्र[स्तासंत्र]स्त-मना[7] अनभ्यसूयको यदा च मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वो न कस्मिंश्चिद्धर्मे[8] रज्यति यथाभूतं च धर्माणां स्वलक्षणं व्यवलोकयति। या[9] खल्वेषु[10] धर्मेष्वविचारणाविकल्पना[11] अयमुच्यते[12] 10 मञ्जुश्रीर्बोधिसत्त्वस्य महासत्त्वस्याचारः। कतमश्च मञ्जुश्रीर्बोधिसत्त्वस्य महासत्त्वस्य गो-

---

1) A. B. W. add पश्चिमे काले पश्चिमे समये

2) कृतमोढं A. W. कृतमूढं B. कृतमहां Cb. कृतमोढं K. कृतमीढं O.

3) गौरवेण B. गोचरे W.

4) The words between brackets wanting in O.

5) रे A. W.

6) क्षान्तो Cb. O क्षमो the others.

7) अनुत्त्रस्तमानस O.

8) क्वचिद्धर्मेष्वभिरज्यति न क्वचिद्धर्माणां स्वभावलक्षणं व्य O.

9) यः A. स B. या Cb. K. याः W.

10) Left out in Cb. O.

11) णा अवि in all MSS.

12) ना अय A. B. Cb. K. नाय W. नता अविपरिकल्पनता अय O

चरः। यदा [च] मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वो न राजानं संसेवते न राजपुत्रान्[1] राजमहामात्रान् राजपुरुषान्संसेवते न भजते न पर्युपास्ते [नोपसंक्रामति] नान्यतीर्थ्याँश्चरकपरिव्राजकाजीवकनिर्ग्रन्थान्[2] काव्यशास्त्रप्रसृतान्सत्त्वान्संसेवते न भजते न पर्युपास्ते। न च लोकायतमन्त्रधारकान् लोकायतिकान्सेवते न[3] भजते न[4] पर्युपास्ते न च तैः सार्धं संस्तवं करोति। न चण्डालान् मौष्टिकान् सौकरिकान् कौक्कुटिकान्[5] मृगलुब्धकान् मांसिकान्[6] नटनृत्तकान्[7] कच्छान्[8] मल्लानन्यानि परेषां रतिक्रीडास्थानानि[9] तानि नोपसंक्रामति। न च तैः सार्धं संस्तवं करोत्यन्यत्रोपसंक्रान्तानां कालेन कालं धर्मं भाषते तं चानिश्रितो भाषते। श्रावकयानीयांश्च भिक्षुभिक्षुण्युपासकोपासिका न सेवते न भजते न पर्युपास्ते न च तैः सार्धं संस्तवं करोति। न च तैः सह समवधानगोचरो[10] भवति चङ्क्रमे[11] वा विहारे[12] वान्यत्रोपसंक्रान्तानां चैषां[13] कालेन कालं धर्मं भाषते तं[14] चानिश्रितो भाषते। अयं मञ्जुश्रीर्बोधिसत्त्वस्य महासत्त्वस्य[14] गोचरः॥

---

1) राजमात्रान् Cb., which is added after पुत्रान् in K. Likewise राजामात्यान् in O.

2) तीर्थिकान्सेवति न च चरकान् प O.

3) न in O. only.

4) न सौनिकानौरभ्रिकान् O.

5) न शाकुनिकान् जालपाशकान्सत्त्वान्सेव° etc. O.

6) नर्त्त K. नाटकान् नृत्यका O.

7) ध्यल्लान् A. W. मल्लान् B. मल्लान् Cb. झल्लान् K. जल्लान् O.

8) Cb. adds पन O. has षामसंवृतानां क्रीडाहास्यरतिस्था.

9) र K.

10) Cb. adds माला (?)

11) A. W. add मालविहारे without वा; in O. महाविहारे वा.

12) Left out in Cb.; and it is put in after कालं in B. K.

13) तां A. W.

14) प्रथमो added in O. It is in fact the first गोचरः, but in vs. 15 is called the first what in O. is the second.

पुनरपरं मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वो न मातृग्रामस्यान्यतरान्यतरमनुनयनिमित्तं[1] गृह्याभीक्ष्णं[2] धर्मं देशयति न च मातृग्रामस्याभीक्ष्णं दर्शनकामो भवति। न च कुलान्युपसंक्रमति न च दारिकां वा कन्यां वा वधुकां वाभीक्ष्णमाभाषितव्यां मन्यते न प्रतिसंमोदयति।[3] न च पण्डकस्य धर्मं देशयति न च तेन सार्धं संस्तवं करोति न च प्रतिसंमोदयति। न चैकाकी[4] भिक्षार्थमन्तर्गृहं[5] प्रविशत्यन्यत्र तथागतानुस्मृतिं भावयमानः। सचेत्पुनर्मातृग्रामस्य धर्मं देशयति स नान्तशो धर्मसंरागेणापि धर्मं देशयति कः पुनर्वादः स्त्रीसंरागेण।[6] नान्तशो दन्तावलीमप्युपदर्शयति कः पुनर्वाद औदारिकमुखविकारम्। न च श्रामणेरं न च श्रामणेरीं न भिक्षुं न भिक्षुणीं न कुमारकं न कुमारिकां मातीयति[7] न च तैः सार्धं संस्तवं करोति न च संलापं करोति न च प्रतिसंलापगुरुको[8] भवति न चाभीक्ष्णं प्रतिसंलयनं[9] सेवते। अयमुच्यते मञ्जुश्रीर्बोधिसत्त्वस्य महासत्त्वस्य प्रथमो[10] गोचरः॥

पुनरपरं मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वः सर्वधर्माञ्छून्यान्व्यवलोकयति[11] यथावत्प्रतिष्ठितान्धर्मानविपरीतस्थायिनो[12][13] यथाभूतस्थितानचलानकम्प्यानविवर्त्यानपरिवर्तान्स-[14]

1) रान्यत left out in B. Cb. W.

2) All but O. यं निमित्तमुद्गृह्य.

3) मोदितव्यामुच्यते A. W. मोदितव्यां मन्यते O. मोदनोति Cb.

4) चैको हि Cb.

5) भैक्षार्थं K. Cp. below vs. 14. भिक्षुरेकपण्डक अन्तर्गृहे प्र O.

6) All but O. add सार्धं देशयति.

7) सादीयति O. Cp. Pāli *sādiyati* and स्वादीयति Mahāvastu II, 145.

8) लपन K.

9) MSS. लापनं.

10) द्वितीयो O. See remark above p. 276.

11) धर्मशून्यं Cb.

12) मानसारानवि A. W. तानुसारानवि B. तानां सागराणां संस्तवं करोति। नवी Cb. मान्सारानवि K. असारान् wanting in O.

13) A. K. W. add भावा.

14) भूतस्थितान A. B. K. W. भूतान् Cb.

मादाय[1] यथाभूतास्थितानाकाशस्वभावान्निरुक्तिव्यवहार[2]विवर्जितानजातानभूतान्[3] संस्कृतानासंस्कृतान्न सतो नासतो ऽनभिलाप[4]प्रव्याहृतानसंगस्थानस्थिता[5]न्संज्ञाविपर्यासप्रादुर्भूतान्[6]। एवं हि मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वो ऽभीक्ष्णं सर्वधर्मान्व्यवलोकयन्विहरति। अनेन विहारेण विहरन्[7]बोधिसत्त्वो महासत्त्वो गोचरे स्थितो भवति। अयं मञ्जुश्री-
5 बोधिसत्त्वस्य[8] द्वितीयो गोचरः ॥

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत ॥

यो बोधिसत्त्व[9] इच्छेया[10] पश्चात्काले सुदारुणे।
इदं सूत्रं प्रकाशेतुं[11] अनोलीनो[12] विशारदः ॥ १ ॥
10 आचारगोचरं रक्षेदसंसृष्टः शुचिर्भवेत्[13]।
वर्जयेत्संस्तवं नित्यं राजपुत्रेहि राजभिः ॥ २ ॥

---

1) वर्त्ता समादाय A. वर्त्ता न समादाय B. वर्त्ता सदा Cb वर्तान्सदा O. वर्तान्समादाय K. वर्त्ता समाशयय W.

2) ते Cb.

3) रं Cb.

4) °तानसंस्कृतानसंस्कृतानसंख्यातान्नसतो O.

5) प्य Ca. Another var. r. mentioned in Engl. translation p. 264.

6) नसंगच्छातस्थितां A. नसंगच्छानस्थितान B. नसंस्थान Cb. नसंस्थानस्थितान K. नसंस्थानस्थितां W. नसत्तानसंगस्थानस्थितानभावानस्वभावा O. असंग an old error for असंत, Skr. असत्?

7) रन्न बो Cb.

8) तृ for त्रि O.

9) त्वो A. B. K. त्व Cb. O. त्वा W.

10) इच्छेत पश्चाकालेस्मि भैरव O.

11) शयितुं A. W.

12) अनो A. K. W. O. अनोन B. अना W

13) असंक्लिष्टो भवे शुचि O.

ये चापि राजपुरुषाः[1] कुर्यात्तेहि न संस्तवम् ।
चण्डालमुष्टिकैः शौण्डैस्तोर्थिकैश्चापि सर्वशः ॥ ३ ॥
अधिमानीन[2] सेवेत विनयेदागम[3]स्थितान् ।
अर्हत्संमतान्भितून्दुःशीलांश्चैव वर्जयेत् ॥ ४ ॥
भितुणीं वर्जयेन्नित्यं हास्यसंलापगोचराम्[4] । 5
उपासिकाश्च वर्जेत[5] प्राकटा या अवस्थिताः[6] ॥ ५ ॥
या निर्वृतिं गवेषन्ति दृष्टे धर्मे उपासिकाः ।
वर्जयेत्संस्तवं ताभिः[7] आचारो अयमुच्यते ॥ ६ ॥
यश्चैन[8]मुपसंक्रम्य धर्मं पृच्छे ऽग्रबोधये ।
तस्य भाषेत्सदा धीरो अनोलीनो अनिश्रितः ॥ ७ ॥ 10
स्त्री पण्डकाश्च ये सत्त्वाः संस्तवं तैर्विवर्जयेत् ।
कुलेषु चापि वधुकां[9] कुमार्यश्च विवर्जयेत् ॥ ८ ॥

---

1) षां K. राज्ञः पुरुषा ये भोन्ति O.

2) भि A. B. K. W. धि Cb. O.

3) विनयेनागम A. B. W. विनयेदागमे Cb. विनयेनागमे K. आगमे विनये स्थित्वा (intended स्थितः?) O.

4) णो and रा (Skr. राः) O., preferable.

5) All but O. वर्जयेत्.

6) तान् Cb. तां K. न वस्थिताः O

7) भि A. B. K. W. भिः । Cb. O.

8) व Cb.

9) वधुकाश्चापि O

न ताः संमोदयेज्ज्ञातु कौशल्यं[1] साधु[2] पृच्छितुम्।
संस्तवं तेहि[3] वर्जेत[4] सौकरौरभ्रिकैः[5] सह ॥ ९ ॥
ये चापि विविधान्प्राणीन्हिंसेयुर्भोग[6]कारणात्।
मांसं सूनाय विक्रेति संस्तवं तैर्विवर्जयेत् ॥ १० ॥
5 स्त्रीपोषकाश्च ये सत्त्वा वर्जयेत्तेहि संस्तवम्।
नटेभिर्झल्लमल्लेभिर्ये[7] चान्ये तादृशा भवेत् ॥ ११ ॥
वारमुख्या[8] न सेवेत ये चान्ये भोगवृत्तिनः[9]।
प्रतिसंमोदनं तेभिः[10] सर्वशः परिवर्जयेत् ॥ १२ ॥
यदा च[11] धर्मं देशेया मातृग्रामस्य पण्डितः।
10 न चैकः[12] प्रविशेत्तत्र नापि हास्यस्थितो भवेत् ॥ १३ ॥
यदापि प्रविशेद्ग्रामं भोजनार्थी पुनः पुनः।
द्वितीयम्भितु[13] मार्गेत बुद्धं वा समनुस्मरेत् ॥ १४ ॥

---

1) कुशलं B. हास्य कौशल्य O.

2) साधु A. K. W. (= Skr. सार्धं?). हासु B. ज्ञातु Cb. वर्जयेत् O. यो A. W. या B. K.

3) तेभि O., च वि the rest.

4) ज्ञयो A. W. ज्ञया B. K. ज्ञयेत् Cb.

5) स्मि A. त्ति B. भ्रि K. त्ति W. रौत्रकैर्हि वह Cb सौनिकौरभ्रिकेन च O.

6) सयेयु A. W. सेयु B. K. सयु Cb. र्हसन्ति O.

7) All but O. टे for टेभि. म्न K.

8) मूर्च्यं A. मुखं W. मुख्यां B. Cb. K. मुख्या O.

9) वृत्तये A. W. वृत्तिका O.

10) तेषां O.

11) र्म B. देशयेद्धर्मं O.

12) कं A. W. तः B. कः Cb. K. O.

13) यभि A. B. Cb. W. यम्भि K. यं भि O.

आचारगोचरो ह्येष प्रथमो मे निदर्शितः।
विहरन्ति येन सत्प्रज्ञा धारेन्ता[1] सूत्रमीदृशम् ॥ १५ ॥
यदा न चरते[2] धर्मं ह्यीन उत्कृष्टमध्यमे।
संस्कृतासंस्कृते चापि भूताभूते च सर्वशः ॥ १६ ॥
स्त्रीति नाचरते धीरो पुरुषेति न कल्पयेत्[3]।
सर्वधर्म अजातत्वा[4] गवेषन्तो न पश्यति ॥ १७ ॥
आचारो हि अयं उक्तो बोधिसत्त्वान सर्वशः।
गोचरो यादृशस्तेषां तं शृणोथ प्रकाशतः ॥ १८ ॥
असन्तका[5] धर्म इमे प्रकाशिता अप्रादुर्भूता[6] अजातकाश्च[7]।
शून्या निरीहा[8] स्थित नित्यकालं[9] अयं[10] गोचरो उच्यति पण्डितानाम् ॥ १९ ॥
विपरीतसंज्ञाहि इमे विकल्पिता असन्तसन्ता हि अभूतभूततः।
अनुस्थिताश्चापि अजातधर्मा जाता अभूता विपरीतकल्पिताः ॥ २० ॥
एकाग्रचित्तो हि समाहितः सदा सुमेरुकूटो यथ सुस्थितश्च।
एवं स्थितश्चापि हि तान्निरीतेदाकाशभूतानिम सर्वधर्मान्[11] ॥ २१ ॥

1) धारेन्ता B. धारयेत् Cb. धारिता W. धारेन्ति O.

2) र्मे K. O. But the following consists of three words. One would expect ह्यीनमु.

3) All but O. यी.

4) त्वाद्‌ O.

5) तता A.

6) दुर्भूता O. दुर्भावा the others.

7) यजाते सर्वे Cb. यजात सर्वे O.

8) विहारो A. W.

9) सर्वं B. Cb. K.

10) अयं A. Cb. W. अय B. O. अयु K.

11) O. has एकाग्रचित्तः सुसमाहितः सदा सुमेरुकूटेवसुसंस्थितात्मा। एवं स्थितो चित्त (r. चापि) निरीक्षयेयमाकाशभूता इमे धर्मा. We propose to r. इमि for इम.

सदा[1] पि आकाशसमा न सारका[2] अनिञ्जिता मन्यनवर्जिताश्च[3] ।
स्थिता हि धर्मा इमि नित्यकालं अयु[4] गोचरो उच्यति पण्डितानाम् ॥ २२
ईर्यापथं यो मम रक्षमाणो भवेत भिक्षू[5] मम निर्वृतस्य ।
प्रकाशयेत्सूत्रमिदं हि लोके न चापि संलीयन तस्य काचित्[6] ॥ २३ ॥
5 कालेन चो चिन्तयमानु पण्डितः प्रविश्य लेनं[7] तथ घट्टयित्वा[8] ।
विपश्य धर्मं इमु सर्व योनिशो उत्थाय देशेत अलीनचित्तः ॥ २४ ॥
राजान तस्येह करोन्ति[9] रक्षा ये राजपुत्राश्च शृणोन्ति[10] धर्मम् ।
अन्ये ऽपि चो गृहपति ब्राह्मणाश्च परिवार्य सर्वे स्य स्थिता भवन्ति ॥ २५ ॥

पुनरपरं मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वस्तथागतस्य परिनिर्वृतस्य पश्चिमे काले 10 पश्चिमे समये पश्चिमायां[11] पञ्चाशत्यां[11] सद्धर्मविप्रलोपे वर्तमान इमं धर्मपर्यायं संप्रकाशयितुकामः सुखस्थितो भवति स सुखस्थितश्च धर्मं भाषते[12] कायगतं वा पुस्तकगतं वा । परेषां च देशयमानो नाधिमात्रमुपालम्भजातीयो[13] भवति न चान्यान्धर्मभाणकान्भिक्षून्परिवदति न चावर्णं भाषते न चावर्णं निश्चारयति न चान्येषां श्रावकयानीयानां[14] भिक्षूणां नाम गृही-

1) य A. W.

2) ऽसारका.

3) All but O. मत्येन विव, metrically impossible.

4) यं A. B. Cb. W. यु K. य O.

5) O. has भिक्षुर्म. The original r. certainly *bhikkhū*.

6) कश्चित् A. न च लीनचित्तो भवि यः कदाचित् O. काचित् suspect.

7) All but O. लयनं.

8) द्वार घट्टयेत् O.

9) रोति Cb. K. O.

10) णोति Cb. O.

11) Omitted in O.

12) ति Cb. O.

13) रम्भजातिको O. Cp. Pāli *jātika*

14) निकानां O.

त्वावर्णं भाषते न चावर्णं चारयति न च तेषामन्तिके प्रत्यर्थिकसंज्ञी भवति । तत्कस्य हेतोः । यथापीदं सुखस्थानस्थितत्वात् । स आगतागतानां धर्मश्रावणिकानामनुपरिग्रा-[1]हिका अनभ्यसूयया[2] धर्मं देशयति । अविवदमानो न च प्रश्नं पृष्टः श्रावकयानेन विसर्जय-ति । अपि तु खलु पुनस्तथा विसर्जयति यथा बुद्धज्ञानमभिसंबुध्यते ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥ 5

सुखस्थितो भोति सदा विचक्षणः सुखं निषण्णस्तथ धर्मु[3] भाषते ।
उदार प्रज्ञप्त करित्व आसनं चौक्षे मनोज्ञे पृथिवीप्रदेशे ॥ २६ ॥
चौक्षं च सो चीवर प्रावरित्वा सुरक्तरङ्गं[4] सुप्रशस्तरङ्गैः ।
आसेवकं[5] कृष्ण तथा ददित्वा महाप्रमाणं च निवासयित्वा ॥ २७ ॥
सपादपीठस्मि निषद्य आसने विचित्रदूष्येहि सुसंस्तृतस्मिन् । 10
सुधौतपादश्च[6] उपारुहित्वा स्निग्धेन शीर्षेण मुखेन चापि ॥ २८ ॥
धर्मासने चात्र[7] निषीदयाने[8] एकाग्रसत्त्वेषु समागतेषु
उपसंहरेच्चित्रकथा बहूश्च[9] भिक्षूण वा भिक्षुणियान चैव[10] ॥ २९ ॥
उपासकानां च उपासिकानां राज्ञां तथा राजसुतान चैव ।
विचित्रितार्थां मधुरां कथेया अनभ्यसूयन्तु[11] सदा स पण्डितः ॥ ३० ॥ 15

---

1) All but O. धर्मश्रव.
2) अनभ्यसूयिकया O. अनन्यसूचनया the rest. Our r. conjectural.
3) सा तथ धर्मु A. सं तथ धर्म B. सो तथ धर्म Cb. W. सस्तथ धर्म K. O.
4) ङ्गा Cb. ङ्गं K.
5) कां A. K. W. कं B. का O. Doubtful. Have we to r. आसेचनं?
6) स A. B. Cb. W. सु K.
7) तत्र B. Cb. K. W. चात्र A.
8) यानमेक A. यान एक B. K. W. याने एक Cb. यित्वा O.
9) कथां बहुविधां O. कथान्बहूंश्च the others.
10) काणश्चैव A. काण चैव W. O.
11) All but O. अनन्य.

पृष्टो ऽपि चासौ तद प्रश्न[1] तेषि अनुलोममर्थं पुनर्निर्दिशेय[2]।
तथा च देशेय तमर्थजातं यथ श्रुत्व बोधीय[3] भवेयु लाभिनः ॥ ३१ ॥
किलासितां चापि विवर्जयेत[4] न चापि उत्पादयि खेदसंज्ञाम्[5]।
अरतिं च सर्वां विजहेत पण्डितो मैत्रीबलं च परिषाय भावयेत् ॥ ३२ ॥
5 भाषेच्च[6] रात्रिंदिवमग्रधर्म दृष्टान्तकोटीनयुतैः स पण्डितः।
संहर्षयेत्पर्ष तथैव तोषयेन्न चापि किंचित्ततु[7] ज्ञातु प्रार्थयेत् ॥ ३३ ॥
खाद्यं च भोज्यं च तथान्नपानं वस्त्राणि शय्यासनचीवरं[8] वा।
गिलानभैषज्य न चिन्तयेत न विज्ञपेया[9] परिषाय किंचित् ॥ ३४ ॥
अन्यत्र चिन्तेय सदा विचक्षणो भवेय बुद्धो ऽहमिमे च सत्त्वाः।
10 एवं[10] ममसर्वसुखोपधानं सद्धर्म श्रावेमि हिताय लोके ॥ ३५ ॥
यश्चापि[11] भिक्षू मम निर्वृतस्य अनीर्षुको एवं[12] प्रकाशयेया।
न तस्य दुःखं न च अन्तरायो शोकोपयासा न भवेत्कदाचित्[13] ॥ ३६ ॥

---

1) स्नू A. स्न B. स्नू Cb. स्नु K. W. प्रश्न O.

2) निपुणं निदर्शयेत् O., which is at least metrically correct.

3) All बोधाय.

4) यित्वा in all but O.

5) संज्ञाः O. संज्ञा the rest.

6) यु A. W. च B. K. O. च्च Cb.

7) किंचि तु न A. किंचा तु न W. किञ्चित्तनु K. किंचित्ततु O.

8) All but O. शयना.

9) विज्ञापयाये Cb. विज्ञपेता O.

10) MSS. have एवं or एतत् ममसर्व. Perhaps to r. एवं इमे.

11) ये चापि A. K.

12) एष K.

13) आयासु सोको च न तस्य केचित् B. आयासु सोके न च तस्य केचित् K. आयासु लोके न च तस्य केचित् W. शोकं च शोकाश न ज्ञातु तस्य O.

न तस्य संत्रासन कश्चि कुर्यान्न[1] ताडनां नापि ग्रवर्ण भाषेत्।
न चापि निष्कासन[2] ज्ञातु तस्य[3] तथा हि सो क्षान्तिबले प्रतिष्ठितः ॥ ३७ ॥
सुखस्थितस्य[4] तद् पण्डितस्य एवं स्थितस्य यथ भाषितं मया।
गुणान कोटीशत भोन्त्यनेके न शक्यते कल्पशतैर्हि[5] वक्तुम्[6] ॥ ३८ ॥

पुनरपरं मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वस्तथागतस्य परिनिर्वृतस्य सद्धर्मक्षयान्तकाले 5 वर्तमान इदं सूत्रं धारयमाणो[7] बोधिसत्त्वो महासत्त्वो ऽनीर्षुको भवत्यशठो ऽमायावी न चान्येषां बोधिसत्त्वयानीयानां[8] पुद्गलानामवर्णं भाषते नापवदति नावसादयति। न चान्येषां भिक्षुभिक्षुण्युपासकोपासिकानां श्रावकयानीयानां[9] वा प्रत्येकबुद्धयानीयानां वा बोधिसत्त्वयानीयानां[10] वा[11] कौकृत्यमुपसंहरति। दूरे यूयं कुलपुत्रा अनुत्तरायाः सम्यक्संबोधेर्न तस्यां[12] यूयं संदृश्यघ्वे[13]। अत्यन्तप्रमाद[14]विहारिणो यूयं। न प्रतिबलास्तं ज्ञानमभिसंबोद्धुमि- 10 त्येवं न कस्यचिद्बोधिसत्त्वयानीयस्य कौकृत्यमुपसंहरति। न च धर्मविवादाभिरतो भवति न च धर्मविवादं करोति सर्वसत्त्वानां चान्तिके मैत्रीबलं[15] न विजहाति। सर्वतथागतानां

1) कश्चित्कु Cb.
2) निष्कालन O.
3) तस्यो K.
4) स्यो B.
5) ते K. तैर्हि A. तेभि O.
6) All but O. add इति.
7) प्रकाशय B. K.
8) निकानां B. Cb. K. O. नीयानां A. W.
9) का B.
10) निका B.
11) बोधि° वा left out in W.
12) तस्या A. B. तस्यां Cb. K. तस्य W.
13) घे A. W. घ्व Ca. ध्व B. Cb. K. श्रय O.
14) माद् A. Cb. K. W. मत्त O.
15) मैत्र्य K. मैत्रा O. Cp. Pāli *mettā*.

चान्तिके पितृसंज्ञामुत्पादयति सर्वबोधिसत्त्वानां चान्तिके शास्तृसंज्ञामुत्पादयति । ये च दशसु दिक्षु लोके बोधिसत्त्वा महासत्त्वास्तानभीक्ष्णमध्याशयेन गौरवेण च नमस्कुरुते । धर्मं च देशयमानो ऽनूनमनधिकं धर्मं देशयति समेन धर्मप्रेम्णा[1] न च कस्यचिद्दशो धर्मप्रेम्णाप्यधिकतरमनुग्रहं करोतीमं धर्मपर्यायं संप्रकाशयमानः ॥

5 अनेन मञ्जुश्रीस्तृतीयेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वस्तथागतस्य परिनिर्वृतस्य सद्धर्मपरिक्षयान्तकाले वर्तमान इमं धर्मपर्यायं संप्रकाशयमानः सुखस्पर्शं[2] विहरत्यविहेठितश्चेमं धर्मपर्यायं संप्रकाशयति । भवन्ति चास्य धर्मसंगीत्यां सहायका उत्पत्स्यन्ते[3] चास्य धार्मश्रावणिका ये ऽस्येमं धर्मपर्यायं श्रोष्यन्ति[4] श्रद्धास्यन्ति पत्तीयिष्यन्ति[5] धारयिष्यन्ति[6] पर्यवाप्स्यन्ति लिखिष्यन्ति लिखापयिष्यन्ति[7] पुस्तकगतं[8] च[9] कृत्वा सत्करिष्यन्ति गुरुकरिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति ॥
10

इदमवोचद्भगवानिदं वदित्वा[10] सुगतो ह्यथापरमेतदुवाच शास्ता ॥

शाठ्यं च मानं तथ कूटनां च अशेषतो उज्झिय धर्मभाणकः ।
ईर्ष्या न कुर्यात्तथ जातु पण्डितो य इच्छते सूत्रमिदं प्रकाशितुम् ॥ ३९ ॥

---

1) प्रेमेण O.
2) B. K. add सं.
3) उत् Cb. K. O. उप the rest.
4) शृण्वन्ति श्रद्दधन्ति etc. Pres. T.; श्रद्दधास्यन्ति the other MSS.
5) Left out in B. K.
6) MSS. but Cb. O. add वाचयिष्यन्ति.
7) Some MSS. add लिखित्वा.
8) तं Cb.
9) च is put in before पुस्त° in B. K.
10) विदि A. वन्दि K.

अत्रणां ज्ञातु[1] न वदेय कस्यचिद्दृष्टीविवादं च न ज्ञातु कुर्यात्।
कौकृत्यस्थानं च न ज्ञातु कुर्याम्[2] लप्स्यसे ज्ञानमनुत्तर त्वम्॥ ४० ॥
सदा च सो क्षान्तिबु मार्दवश्च दान्तश्च[3] भोती सुगतस्य पुत्रः।
धर्मं प्रकाशेतु[4] पुनः पुनश्चिमं न तस्य खेदो भवती कदाचित्॥ ४१ ॥
ये बोधिसत्त्वा दशसु दिशासु सत्त्वानुकम्पाय चरन्ति लोके। 5
ते सर्वि शास्तार[5] भवन्ति मह्यं गुरुगौरवं तेषु जनेत[6] पण्डितः॥ ४२ ॥
स्मरित्व बुद्धान्द्विपदानमुत्तमाञ्जिनेषु नित्यं पितृसंज्ञ[7] कुर्यात्।
अधिमानसंज्ञा[8] च विहाय सर्वा न तस्य भोती तद अन्तरायः॥ ४३ ॥
श्रुणित्व धर्मं इममेवरूपं स रक्षितव्यस्तद पण्डितेन[9]।
सुखं विहाराय समाहितश्च सुरक्षितो भोति च प्राणिकोटिभिः[10]॥ ४४ ॥ 10

पुनरपरं मञ्जुश्रीर्बोधिसत्त्वो महासत्त्वस्तथागतस्य परिनिर्वृतस्य सद्धर्मप्रतिक्षेपा-[11]
त्तकाले वर्तमान इमं धर्मपर्यायं धारयितुकामस्तेन भिक्षुणा गृहस्थप्रव्रजितानामन्तिका-
द्दूरेण दूरं विहर्तव्यं मैत्रीविहारेण[12] च विहर्तव्यम्।[13] ये च सत्त्वा बोधाय संप्रस्थिता

1) All but O. add सो before ज्ञातु.

2) कुर्यात् स A. W. °श्च B. °न Cb. °न संलप्स्यते K. All °प्स्यते.

3) दमी च B. K.

4) शतु A. Cb. शेतु B. K. शतुं W. शेत O.

5) रू Cb.

6) जनित्व Cb.

7) ज्ञा च Cb.

8) भि B. K.

9) पण्डितस्य Cb.

10) A. B. Ca. Cb. add इति.

11) क्षेप Cb. W. O. प्रतिक्षय probably an erroneous Sanskritisation of a Prâk. पडिक्खय, i. e. परिक्षय.

12) मैत्र्या A. W. मैत्रा O

13) B. adds अपि तु खल्वह एतामनुत्तरां सम्यक्संबोधिं, leaving out ये च °तेषां.

भवन्ति तेषां सर्वेषामन्तिके स्पृहोत्पादयितव्या।[1] एवं चानेन चित्तमुत्पादयितव्यम्। महा-
दुष्प्रज्ञजातीया बतेमे सत्त्वा ये तथागतस्योपायकौशल्यं संधाभाषितं न शृण्वन्ति न जान-
न्ति न बुध्यन्ते[2] न पृच्छन्ति न श्रद्दधन्ति नाधिमुच्यन्ते। किंचाप्येते सत्त्वा इमं धर्मपर्यायं
नावतरन्ति न बुध्यन्ते।[3] अपि तु खलु पुनरहमेतामनुत्तरां सम्यक्संबोधिमभिसंबुध्य यो
5 यस्मिन्स्थितो भविष्यति तं तस्मिन्नेवर्द्धिबलेनावर्जयिष्यामि पत्तीयापयिष्याम्यवतार-[4]
यिष्यामि परिपाचयिष्यामि॥[5]

अनेनापि[6] मञ्जुश्रीश्चतुर्थेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वस्तथागतस्य
परिनिर्वृतस्येमं धर्मपर्यायं संप्रकाशयमानो[7] ऽव्याबाधो[8] भवति सत्कृतो गुरुकृतो मानितः
पूजितो[9] भिक्षुभिक्षुण्युपासकोपासिकानां राज्ञां राजपुत्राणां राजामात्यानां राजमहामा-
10 त्राणां नैगमजानपदानां ब्राह्मणगृहपतीनामन्तरीक्षावचराश्चास्य देवताः श्राद्धाः पृष्ठतो
ऽनुबद्धा भविष्यन्ति धर्मश्रवणाय देवपुत्राश्चास्य सदानुबद्धा भविष्यन्त्यारण्यायै ग्रामगतस्य
वा[10] विहारगतस्य वोपसंक्रमिष्यन्ति रात्रिंदिवं धर्मं परिपृच्छकास्तस्य च व्याकरणेन
तुष्टा उदग्रा आत्तमनस्का भविष्यन्ति। तत्कस्य हेतोः। सर्वबुद्धाधिष्ठितो ऽयं मञ्जुश्री-
धर्मपर्यायः। अतीतानागतप्रत्युत्पन्नैर्मञ्जुश्रीस्तथागतैरर्हद्भिः सम्यक्संबुद्धैरयं धर्मपर्यायो

---

1) कृपा O.

2) न्ति A. B. Cb. W. न्ते K. O.

3) न्ति A. B. Cb. W. नावबुध्यन्ते K. नाधिमुच्यन्ति O.

4) संताप B. प्रत्ययाच K. पत्तीयापयामि O. The whole word is left out in Cb.

5) वार (for पाच) A.

6) अपि left out in B. K. O.

7) संश्रावय B. K.

8) अव्याबद्धो A. W. °वध्यो B. Cb. °बाधा K. °बाध्यो O. (r. °ध्यो). Cp. अव्यावध्य Mahāvastu, II, 259, but also Pāli *avyāpajjha* and *vyābādha*.

9) B. K. add ऽर्जितो (r. ऽर्चितो) ऽपचायितो.

10) In B. added नगरगतस्य वा.

नित्याधिष्ठितः। दुर्लभो ऽस्य मञ्जुश्रीर्धर्मपर्यायस्य बहुषु लोकधातुषु शब्दो वा घोषो वा नामश्रवो वा ॥

तद्यथापि नाम मञ्जुश्री राजा भवति बलचक्रवर्ती बलेन तं स्वकं राज्यं निर्जिनाति। ततो ऽस्य प्रत्यर्थिकाः प्रत्यमित्राः[1] प्रतिराजानस्तेन सार्धं विग्रहमापन्ना[2] भवन्ति। अथ तस्य राज्ञो बलचक्रवर्तिनो विविधा योधा भवन्ति। ते तैः शत्रुभिः सार्धं युध्यन्ते[3]। अथ स राजा तान्योधान्युध्यमानान्दृष्ट्वा तेषां योधानां प्रीतो भवत्यात्तमनस्कः। स प्रीत आत्तमनाः समानस्तेषां योधानां विविधानि दानानि ददाति। तद्यथा ग्रामं वा[4] ग्रामक्षेत्राणि वा[4] ददाति नगरं नगरक्षेत्राणि वा[5] ददाति वस्त्राणि ददाति[6] वेष्टनानि हस्ताभरणानि पादाभरणानि[7] कण्ठाभरणानि कर्णाभरणानि[8] सौवर्णसूत्राणि हारार्धहाराणि हिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवाडान्यपि ददाति हस्त्यश्वरथपत्ति[9]दासीदासानपि ददाति यानानि शिबिकाश्च ददाति। न पुनः कस्यचिच्चूडामणिं ददाति। तत्कस्य हेतोः। एक एव हि स चूडामणी[10] राज्ञो मूर्धस्थायी। यदा पुनर्मञ्जुश्री राजा तमपि चूडामणिं ददाति तदा स सर्वो राज्ञश्चतुरङ्गबलकाय आश्चर्यप्राप्तो भवत्यद्भुतप्राप्तः। एवमेव मञ्जुश्रीस्तथागतो ऽप्यर्हन्सम्यक्संबुद्धो धर्मस्वामी धर्मराजः स्वेन बाहुबलनिर्जितेन पुण्यबलनिर्जितेन त्रैधातुके धर्मेण धर्मराज्यं कारयति। तस्य मारः पापीयां[11]स्त्रैधातुकमाक्राम-

---

1) Left out in Cb. O. The word is, in fact, superfluous.

2) All but O. add विवादम्.

3) न्ति A. Cb. W. O. न्ते B. K.

4) In A. W. only. अपि for वा O.

5) In A. only.

6) Left out in Cb.

7) Left out in B. Cb.

8) This word is put in after सौ° in B. Cb. K. O.

9) पत्ती A. B. K. W. पत्ति Cb.

10) णिं A. णि B. Cb. O. णी K. णिः W.

11) पापीमां O. more original. Cp. Mahāvastu I, 42; III, 28 पापीमां; Pāli *pāpimā*.

ति। अथ खलु[1] तथागतस्याप्यार्या योधा मारेण[2] सार्धं युध्यन्ते[3]। अथ खलु मञ्जुश्रीस्तथागतो ऽप्यर्हन्सम्यक्संबुद्धो धर्मस्वामी धर्मराजा[4] तेषामार्याणां योधानां युध्यतां दृष्ट्वा विविधानि सूत्रशतसहस्राणि[5] भाषते स्म चतसृणां पर्षदां संहर्षणार्थम्[6]। निर्वाणनगरं चैषां महाधर्मनगरं ददाति निर्वृत्या चैनान्प्रलोभयति स्म न पुनरिममेवंरूपं धर्मपर्यायं भाषते स्म॥ तत्र[7] मञ्जुश्रीर्यथा स राजा बलचक्रवर्ती तेषां योधानां युध्यतां महता पुरुषकारेण विस्मापितः[8] समानः पश्चात्तं सर्वस्वभूतं पश्चिमं चूडामणिं ददाति सर्वलोकाश्रद्धेयं विस्मयभूतं[9]। यथा मञ्जुश्रीस्तस्य राज्ञः स चूडामणिश्चिररक्षितो मूर्धस्थायी। एवमेव मञ्जुश्रीस्तथागतो ऽर्हन्सम्यक्संबुद्धस्त्रैधातुके धर्मराजो[10] धर्मेण राज्यं कारयमाणो[11] यस्मिन्समये पश्यति श्रावकांश्च बोधिसत्त्वांश्च स्कन्धमारेण वा क्लेशमारेण वा सार्धं युध्यमानान् तैश्च सार्धं युध्यमानैर्यदा रागद्वेषमोहक्षयः सर्वत्रैधातुकान्निःसरणं[12] सर्वमारनिर्घातनं[12] महापुरुषकारः कृतो भवति। तदा तथागतो ऽर्हन्सम्यक्संबुद्धो ऽप्याराधितः[13] समानस्तेषामार्याणां योधानामिममेवंरूपं सर्वलोकविप्रत्यनीकं सर्वलोकाश्रद्धेयमभाषितपूर्वमनिर्दिष्टपूर्वं धर्मपर्यायं भा-

---

1) Left out in Cb. B. K.

2) O. adds पापीमता. Cp. Mahāvastu I, 270.

3) न्ति A. Cb. W. न्ते B. K. युद्धान्ति O.

4) Sic O.; राजा: the rest.

5) सूत्राणि K. सूत्रान्त O.

6) संप्रहर्ष K.

7) ततो A. ततः W.

8) विस्मितो भवति O.

9) विस्मयनीयं तद्यथा O.

10) राजा O. more original.

11) B. K. add ति. कारापयमाणो O.

12) Sic O. निःशरणाः and °तनो the rest. We suppose the original reading to have been °णो and °ने.

13) आराधितो भवति। आराधितः समा° O.

षते स्म । सर्वेषां सर्वज्ञताहारकं[1] महाचूडामणिप्रख्यं तथागतः श्रावकेभ्यो ऽनुप्रयच्छति स्म[2] । एषा हि मञ्जुश्रीस्तथागतानां परमा धर्मदेशनायं पश्चिमस्तथागतानां धर्मपर्यायः सर्वेषां धर्मपर्यायाणामयं धर्मपर्यायः सर्वगम्भीरः सर्वलोकविप्रत्यनीकः[3] । यो ऽयं मञ्जुश्रीस्तथागतेनाद्य तेनैव राज्ञा बलचक्रवर्तिना चिरपरिरक्षितश्चूडामणिरवमुच्य योधेभ्यो दत्तः । एवमेव मञ्जुश्रीस्[4]तथागतो ऽपीमं[5] धर्मगुह्यं[6] चिरानुरक्षितं सर्वधर्मपर्यायाणां मूर्धस्थायि तथागतविज्ञेयं तदिदं तथागतेनाद्य संप्रकाशितमिति[7] ॥

अथ खलु भगवानेतमेवार्थं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा अभाषत ॥

मैत्रीबलं च सद दर्शयन्तः[8] कृपायमाणाः सद सर्वसत्त्वान् ।
प्रकाशयेद्धर्ममिमे[9]वंरूपं सूत्रं विशिष्टं सुगतेहि वर्णितम् ॥ ४५ ॥

गृहस्थ ये प्रव्रजिताश्च ये स्युरथ बोधिसत्त्वास्तद कालि पश्चिमे ।
सर्वेषु मैत्रीबल सो हि दर्शयी मा हैव क्षेप्स्यन्ति श्रुणित्व[10] धर्मम् ॥ ४६ ॥

अहं तु बोधिमनुप्रापुणित्वा यदा स्थितो भोष्यि तथागतत्वे ।
ततो उपानेष्यि उपाययित्वा[11] संश्रावयिष्ये इममग्रबोधिम् ॥ ४७ ॥

---

1) भा A. Cb.

2) स्म in Cb. O. only.

3) यः Cb. °प्रत्ययनीयः O.

4) In B. O. only.

5) A. W. add धर्मपर्यायं; इमं Prākṛticism for इदं.

6) धर्मनिष्कूटं धर्मगुह्यस्थानं O.

7) इति wanting in O.

8) यन्ति A.

9) मिममे A. मिमे Cb. O. मिनमे W. इमे B. K.

10) सो होतु श्रोणा अश्रुणत्त O.

11) उपयिस्थित्वा A. K. उपस्थित्वा Cb. उपापस्थित्वा B. उपायिस्थित्वा W. उपायकोटिभिः O. All पने for पाने. One would expect उपानयित्वा.

यथापि राज्ञा बलचक्रवर्ती योधान दृष्ट्वाद्विविधं हिरण्यम्।
हस्तींश्च अश्वांश्च रथान्पदातीन्नगराणि[1] ग्रामांश्च[2] ददाति तुष्टः॥ ४८।
केषांचि हस्ताभरणानि प्रीतो ददाति रूप्यं च सुवर्णसूत्रम्।
मुक्तामणिं शङ्खशिलाप्रवाडं विविधांश्च दासान्स ददाति प्रीतः[3]॥ ४९

5 यदा तु सो उत्तमसाहसेन विस्मापितो केनचि तत्र भोति।
विज्ञाय आश्चर्यमिदं कृतं ति मुकुटं स मुञ्चित्व मणिं ददाति॥ ५०॥
तथैव बुद्धो अहु धर्मराजा क्षान्तीबलः प्रज्ञ[4]प्रभूतकोशः।
धर्मेण शासामिमु सर्वलोकं हितानुकम्पी करुणायमानः॥ ५१॥
सत्वांश्च[5] दृष्ट्वाथ विहन्यमानान्भाषामि सूत्रान्तसहस्रकोट्यः।
10 पराक्रमं ज्ञानिय तेष प्राणिनां ये शुद्धसत्वा इह क्लेशघातिनः॥ ५२।
अथ धर्मराज्ञापि[6] महाभिषक्तुः पर्यायकोटीशत भाषमाणः।
ज्ञात्वा च सत्वान्बलवन्तु ज्ञानी चूडामणिं[7] व इम सूत्र देशयी॥ ५३॥
इमु पश्चिमु लोकि वदामि सूत्रं सूत्राण[8] सर्वेष[9] ममाग्रभूतम्।
संरक्षितं मे न च ज्ञातु प्रोक्तं तं श्रावयाम्यद्य शृणोथ सर्वे॥ ५४॥
15 चत्वारि धर्मा इमि एवरूपा मयि निर्वृते ये च निषेवितव्याः।
ये चार्थिका उत्तममग्रबोधौ व्यापारणं[10] ये च करोन्ति मह्यम्॥ ५५॥

---

1) तं A. Cb. तीन् B. तों K. तिम् W. पत्तिपीठकान् O.
2) राष्ट्राणि B. राष्ट्रांश्च K. ग्रामं च O. but राष्ट्रं for तुष्टः.
3) प्रीतिं A. W. प्रीति B. प्रीतः Cb. K. O.
4) ज्ञान O.
5) सर्वा A. W.
6) All but O. राज्ञो ऽपि.
7) णिं A. W. णी the rest.
8) णि A. W.
9) सर्वेस्विम O. सर्वेऽपि the others.
10) क Cb. व्याकरणं तेष अहं करोमि O.

न तस्य शोको न पि चान्तरायो दौर्वर्णिकं[1] नापि गिलानकत्वम् ।
न च छक्त्रो कृष्णिक[2] तस्य भोति न चापि क्षीने नगरस्मि वासः ॥ ५६ ॥
प्रियदर्शनो असौ[3] सततं महर्षी तथागतो वा यथ पूज्य भोति ।
उपस्थायकास्तस्य भवन्ति नित्यं ये देवपुत्रा दहरा भवन्ति ॥ ५७ ॥
न तस्य शस्त्रं न विषं कदाचित्काये क्रमे नापि च दण्डलोष्टम् । 5
संमीलितं तस्य मुखं भवेय[4] यो तस्य आक्रोशमपि वदेया[5] ॥ ५८ ॥
सो बन्धुभूतो भवतीह प्राणिनामालोकजातो विचरन्तु मेदिनीं ।
तिमिरं हरन्तो बहुप्राणकोटिनां यो सूत्र[6] धारे इमु[7] निर्वृते मयि ॥ ५९ ॥
सुपिनांश्च[8] सो पश्यति बुद्धरूपं[9] भिक्षूंश्च[10] सो पश्यति भिक्षुणीश्च[11] ।
सिंहासनस्थं[12] च तथात्म[13]भावं[14] धर्मं प्रकाशेन्तु[15] बहुप्रकारम् ॥ ६० ॥ 10

---

1) दौवर्त्तिकं A. Cb. दौवर्षिकं B. दौवर्षिकन् K. दौवर्णिकं W. O.

2) ष्णा K.

3) सो Cb.

4) Reading conjectural; मुचिह्न सो यस्तस्य O. भवेय्यो तस्य the others.

5) आक्रोशमपीह दद्यात् A. W. वदेत कश्चित् O.

6) यः O.

7) मम Cb. इम O.

8) To r. सुपिने च?

9) पां A. Cb. K. W. पं B.

10) क्षुंश्च A. क्षूंश्च B. O. क्षूश्च Cb, K. क्षु W.

11) णी च A. णींश्च B. W. णीश्च Cb. K. णी च O.

12) स्थंश्च A. W.

13) तदा Cb.

14) भावां A. भावान् W.

15) सेत Cb. O. शेन्त K.

देवांश्च यक्षान्यथ गरुडवालिका[1] असुरांश्च नागांश्च बहुप्रकारान् ।
तेषां च सो भाषति अग्रधर्म[2] सुपिनस्मि[3] सर्वेष कृताञ्जलीनाम् ॥ ६१ ॥
तथागतं सो सुपिनस्मि पश्यति देशेन्त धर्म बहुप्राणिकोटिनाम् ।
रश्मीसहस्राणि प्रमुञ्चमानं वल्गुस्वरं काञ्चनवर्णनाथम् ॥ ६२ ॥
5 सो चा तहो[4] भोति कृताञ्जलि[5] स्थितो अभिष्टवन्तो द्विपदुत्तमं मुनिम् ।
सो चा जिनो[6] भाषति अग्रधर्म चतुर्णा[7] पर्षाण महाभिषक्कः ॥ ६३ ॥
सो च प्रहृष्टो भवती श्रुणित्वा प्रामोद्यजातश्च करोति पूजाम् ।
सुपिने च सो धारणि प्रापुणोति अविवर्तियं ज्ञान स्पृशित्व क्षिप्रम् ॥ ६४ ॥
ज्ञात्वा च सो आशयु लोकनाथस्तं व्याकरोती पुरुषर्षभत्वे ।
10 कुलपुत्र त्वं पीह अनुत्तरं शिवं स्पृशिष्यसि[8] ज्ञानमनागते ऽध्वनि ॥ ६५ ॥
तवापि क्षेत्रं विपुलं भविष्यति पर्षाश्च[9] चत्वारि यथैव मह्यम् ।
श्रोष्यन्ति धर्म विपुलं अनास्रवं[10] सगौरवा भूत्व कृताञ्जली च ॥ ६६ ॥
पुनश्च सो पश्यति[11] आत्मभावं भावेन्त[12] धर्म गिरिकन्दरेषु ।
भावित्व[13] धर्म च स्पृशित्व धर्मतां समाधि सो लब्धु जिनं च पश्यति ॥ ६७ ॥

---

1) का A. B. Cb. W. O. कान् K.
2) मान् K.
3) तस्मिंश्च B. स्वप्नस्मि O.
4) चतहो A. Cb. W. चतुर्हो B. चा तहो K. स चे तहि O.
5) ली K. better.
6) चञ्जिनो Cb. चञ्जिनो K.
7) All but O. चतस्रणां. Cf. पर्षाश्चत्वारि vs. 66.
8) से B. Cb. K.
9) पयार्य च A. पर्याय W.
10) श्र for स्र in all but O.
11) भाष Cb.
12) त्त A. B. K. त्व Cb. त्त W.
13) For भावेत्वा.

सुवर्णवर्णो शतपुण्यलक्षणो सुपिनस्मि दृष्ट्वा च शृणोति धर्मम्।
श्रुत्वा च तं पर्षदि संप्रकाशयी सुपिनो ख्वु तस्यो अयमेवरूपः[1] ॥ ६८ ॥
स्वप्ने ऽपि[2] सर्व प्रजहित्व राज्यमन्तःपुरं ज्ञातिगणं तथैव।
अभिनिष्क्रमी सर्व जहित्व कामानुपसंक्रमी येन च बोधिमण्डम् ॥ ६९ ॥
सिंहासने तत्र निषीदियानो द्रुमस्य मूले तहि बोधि अर्थिकः। 5
दिवसान सप्तान तथात्ययेन अनुप्राप्स्यते ज्ञानु[3] तथागतानाम् ॥ ७० ॥
बोधिं च प्राप्तस्ततु व्युत्थहित्वा प्रवर्तयी चक्रमनास्रवं हि[4]।
चतुर्णा[5] पर्षाणा[6] स धर्म देशयी अचिन्तिया कल्पसहस्रकोट्यः ॥ ७१ ॥
प्रकाशयित्वा तहि धर्म नास्रवं[7] निर्वापयित्वा बहुप्राणिकोट्यः[8]।
निर्वायति[9] हेतुक्षये व[10] दीपः सुपिनो अयं सो भवतेवरूपः ॥ ७२ ॥ 10

---

1) पं A. B. पः Cb. K. पो W.

2) स्वप्नति A. W. स्वप्ने हि B. K. स्वप्ने पि Cb.

3) न Cb. K. W.

4) चक्रमनुत्तरं शिवं B. K.

5) चतसृणां A. चतस्राणा B. चतसृणा Cb. चतस्र K. चतसृतोणा W. The reading of O. unknown.

6) परिषाणा W.

7) धममनाश्रवं हि A. W. धर्मणाश्रवं B. धर्ममनास्रवं शिवं Cb. K.

8) B. adds सहस्र.

9) निर्वापयी हेतुक्षेये Cb. निर्व्रायति हेतुक्षयेप K.

10) च A. W.

बहु म्रानुशंसाश्च म्रनन्तकाश्च ये मञ्जुघोषा[1] सद् तस्य भोन्ति[2] ।
यो पश्चिमे कालि इमग्रधर्म[3] सूत्रं प्रकाशेय मया[4] सुदेशितम्[5] ॥ ७३ ॥

॥ इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये सुखविहारपरिवर्तो नाम त्रयोदशमः[6] ॥

---

1) षो B.

2) सांति Cb. भोंति K.

3) इममग्रधर्म A. W. इमग्रबोधिं B. इम ग्रधर्म K. मम।ग्रधर्म Cb.

4) Left out in Cb.

5) MSS. add इति.

6) चतुर्दशमः O.

# XIV.

अथ खल्वन्यलोकधात्वागतानां बोधिसत्त्वानां महासत्त्वानामष्टौ गङ्गानदीवालुका-[1] समा बोधिसत्त्वा महासत्त्वास्तस्मिन्समये[2] ततः पर्षन्मण्डलादभ्युत्थिता अभूवन्। ते ऽञ्जलिं[3] प्रगृह्य भगवतो ऽभिमुखा[4] भगवन्तं नमस्यमाना भगवन्तमेतदूचुः। सचेद्भगवानस्माकमनुज्ञा-[5] नीयादवयमपि भगवन्निमं धर्मपर्यायं तथागतस्य परिनिर्वृतस्य तस्यां सहायां लोकधातौ संप्रकाशयेम वाचयेम लेखयेम[6] पूजयेम अस्मिंश्च धर्मपर्याये योगमापद्येमहि। तत्साधु भग- 5 वानस्माकमपीमं धर्मपर्यायमनुजानातु। अथ खलु भगवांस्तान्बोधिसत्त्वानेतदवोचत्। अलं कुलपुत्राः किं युष्माकमनेन कृत्येन। सन्ति कुलपुत्रा[7] इह ममैवास्यां सहायां लोकधातौ षष्टिगङ्गानदीवालुकासमानि[1] बोधिसत्त्वसहस्राण्येकस्य[8] बोधिसत्त्वस्य परिवारः। एवंरू- पाणां च बोधिसत्त्वानां षष्टेव[9] गङ्गानदीवालुकासमानि[1] बोधिसत्त्वसहस्राणि[8] येषामेकैकस्य बोधिसत्त्वस्येयानेव[10] परिवारो ये मम परिनिर्वृतस्य पश्चिमे काले पश्चिमे समय इमं धर्मप- 10 र्यायं धारयिष्यन्ति वाचयिष्यन्ति संप्रकाशयिष्यन्ति॥

समनन्तरभाषिता चेयं भगवता वागथेयं सहालोकधातुः समन्तात्स्फुटिता विस्फु-

1) कास B. K. वालिकास O. कोप the rest.

2) O. adds गणनावीतिवृत्तास्ते.

3) ली A. B. W. लीं K. दशनखाञ्जलिं O.

4) खाढ K.

5) स्माननु A. W.

6) लिखेमः K. B. Cb.

7) कुलपुत्रा only in O.

1) कास K. वालिकास O. कोप the rest. The reading of K. O. preferable.

8) B. K. add कोटीनियुतशत; O. कोटिनियुतशत.

9) षष्टे च W.

10) इयन्त एव Cb. स्यैतकमेव O., r. °क एव; cp. Pāli *ettaka*.

रिताभूत्तेभ्यश्च[1] स्फोटान्तरेभ्यो[2] बहूनि बोधिसत्त्वकोटीनयुतशतसहस्राण्युत्तिष्ठन्ते[3] स्म सुवर्णवर्णाः कायैर्द्वात्रिंशद्भिर्महापुरुषलक्षणैः समन्वागताः। ये ऽस्यां महापृथिव्यामधः[4] आकाशधातौ विहरन्ति स्मेमामेव सहां लोकधातुं निश्रित्य ते खल्विममेवंरूपं भगवतः शब्दं श्रुत्वा पृथिव्या अधः[5] समुत्थिताः। येषामेकैको बोधिसत्त्वः षष्टिगङ्गानदीवालुकोपमबो-[6]

5 धिसत्त्वपरिवारो गणी महागणी गणाचार्यः। तादृशानां बोधिसत्त्वानां महासत्त्वानां गणीनां[7] महागणीनां[7] गणाचार्याणां षष्टिगङ्गानदीवालुकोपमानि[8] बोधिसत्त्वकोटीनयुतशतसहस्राणि य इतः सहाया[9] लोकधातोर्धरणीविवरेभ्यः समुन्मज्जन्ते स्म। कः पुनर्वादः पञ्चाशद्गङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादश्चत्वारिंशद्गङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः

10 पुनर्वादस्त्रिंशद्गङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादो विंशतिबोधिसत्त्वपरिवाराणां[10] बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादो दशगङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादः पञ्चचतुस्त्रिद्विगङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वाद एकगङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः

15 पुनर्वादो ऽर्धगङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः

---

1) K. W. have स्फुटेभ्यो विस्फो.

2) रके A.

3) न्ति A. Cb. W. O. has उत्कसन्ति; it leaves out स्म also in the sequel.

4) हेष्टमाका O.

5) हेष्टिमं भूमितले निर्भिन्दित्वा O.

6) वालिकासमा O. वालुकोपम the rest.

7) गणीनां Prākṛtic for गणिनां.

8) लिकासम K. O. लुकोप The rest.

9) या left out in B. K. W. The whole passage from य to स्म runs thus in O.: भूमितले निर्भिन्दित्वा उत्कसन्ति.

10) In a fragment of O. विंशद्गङ्गानदीवालुकासमानां बोधिसत्त्वसहस्रप. So too in the following clauses.

पुनर्वादश्चतुर्भागषड्भागाष्टभागदशभागविंशतिभागत्रिंशद्भागचत्वारिंशद्भागपञ्चाशद्भागशत-
भागसहस्रभागशतसहस्रभागकोटीभागकोटीशतभागकोटीसहस्रभागकोटीशतसहस्रभागको-
टीनयुतशतसहस्रभागगङ्गानदीवालुकोपमबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वा-
नाम्। कः पुनर्वादो बहुबोधिसत्त्व(1)कोटीनयुतशतसहस्रपरिवाराणां बोधिसत्त्वानां महास-
त्त्वानाम्। कः पुनर्वादः कोटीपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादः शत- 5
सहस्रपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादः सहस्रपरिवाराणां बोधि-
सत्त्वानां महासत्त्वानाम्। कः पनर्वादः पञ्च(2)शतपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्।
कः पुनर्वादश्चतुःशतत्रिशतद्विशतपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वाद
एकशतपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादः पञ्चाशद्बोधिसत्त्वपरिवा-
राणां बोधिसत्त्वानां महासत्त्वानां। पेयालम्। कः पुनर्वादश्चत्वारिंशत्त्रिंशद्विंशतिदशपञ्चच- 10
तुस्त्रिद्विबोधिसत्त्वपरिवाराणां बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वाद आत्मद्वितीयानां
बोधिसत्त्वानां महासत्त्वानाम्। कः पुनर्वादो ऽपरिवाराणामेकविहारिणां बोधिसत्त्वानां
महासत्त्वानाम्। न तेषां संख्या वा गणना वोपमा(3) वोपनिषद्वोपलभ्यते य इह(4) सहायां
लोकधातौ धरणीविवरेभ्यो बोधिसत्त्वा महासत्त्वाः समुन्मज्जन्ति स्म। ते चोन्मज्ज्योन्मज्ज्य
येन स महारत्नस्तूपो वैहायसमन्तरीक्षे स्थितो यस्मिन्स भगवान्प्रभूतरत्नस्तथागतो ऽर्ह- 15
न्सम्यक्संबुद्धः परिनिर्वृतो भगवता शाक्यमुनिना तथागतेनार्हता सम्यक्संबुद्धेन सार्धं
सिंहासने निषण्णस्तेनोपसंक्रामन्ति स्म। उपसंक्रम्य चोभयोस्तथागतयोरर्हतोः सम्य-
क्संबुद्धयोः पादौ शिरोभिर्वन्दित्वा सर्वांश्च तान्भगवतः शाक्यमुनेस्तथागतस्यात्मीयान्नि-
र्मितांस्तथागतविग्रहान्ये ते समन्ततो दशसु दिक्ष्वन्योन्यासु लोकधातुषु संनिपतिता ना-

---

1) O. has टिभागो गङ्गानदीवालुकसमानां बोधिसत्वसहस्रपरिवाराणां बोधि-
सत्वानां. Throughout सम for उपम.

2) K. adds सहस्र.

3) In Cb. added वोपम्यो.

4) इतः A. K. W. इह B. Cb.

नारत्नवृक्षमूलेषु सिंहासनोपविष्टाः । तान्सर्वानभिवन्द्य नमस्कृत्य चानेकशतसहस्रकृत्वस्तांस्तथागतानर्हतः सम्यक्संबुद्धान्प्रदक्षिणीकृत्य नानाप्रकारैर्बोधिसत्त्वस्तवैरभिष्टुत्यैकान्ते तस्थुरञ्जलिं प्रगृह्य भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं भगवन्तं च प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धमभिसंमुखं नमस्कुर्वन्ति स्म ॥

5 तेन खलु पुनः समयेन तेषां बोधिसत्त्वानां महासत्त्वानां पृथिवीविवरेभ्य उन्मज्जतां[1] तथागतांश्च वन्दमानानां नानाप्रकारैर्बोधिसत्त्वस्तवैरभिष्टुवतां परिपूर्णाः पञ्चाशदन्तरकल्पा गच्छन्ति स्म । तांश्च पञ्चाशदन्तरकल्पान्स भगवाञ्शाक्यमुनिस्तथागतोऽर्हन्सम्यक्संबुद्धस्तूष्णीमभूत्ताश्चतस्रः पर्षदस्तानेव पञ्चाशदन्तरकल्पांस्तूष्णीभावेनावस्थिता अभूवन् । अथ खलु भगवांस्तथारूपमृद्ध्यभिसंस्कारमकरोद्यथारूपेणर्द्ध्यभिसंस्कारेणाभिसंस्कृतेन 10 ताश्चतस्रः पर्षदस्तमेवैकं पश्चाद्भक्तं संजानन्ते स्मेमां च सहां[2] लोकधातुं शतसहस्राकाशपरिगृहीतां बोधिसत्त्वपरिपूर्णामद्राक्षुः । तस्य खलु पुनर्महतो बोधिसत्त्वगणस्य महतो बोधिसत्त्वराशेश्चत्वारो बोधिसत्त्वा महासत्त्वा[3] ये प्रमुखा अभूवन् । तद्यथा विशिष्टचारित्रश्च नाम बोधिसत्त्वो महासत्त्वो ऽनन्तचारित्रश्च नाम बोधिसत्त्वो महासत्त्वो विशुद्धचारित्रश्च नाम बोधिसत्त्वो महासत्त्वः सुप्रतिष्ठितचारित्रश्च[4] नाम बोधिसत्त्वो महासत्त्वः । इमे चत्वारो 15 बोधिसत्त्वा महासत्त्वास्तस्य महतो बोधिसत्त्वगणस्य महतो बोधिसत्त्वराशेः प्रमुखा अभूवन् । अथ खलु चत्वारो[5] बोधिसत्त्वा महासत्त्वास्तस्य महतो बोधिसत्त्वगणस्य महतो बोधिसत्त्वराशेरग्रतः स्थित्वा[6] भगवतो ऽभिमुखमञ्जलिं[7] प्रगृह्य भगवन्तमेतदूचुः । कच्चिद्[8]भगवतो

1) उत्सर्जतां A. Cb. W. उत्सर्जतानां B. K. उत्पज्जंतानां O.

2) र B.

3) Left out in K. The following ये wanting in O.

4) सु wanting in O.

5) ते instead of चत्वारो in Cb. O.

6) ता Cb.

7) मुखा भगवन्तमवलोकयमाना दृशनखमञ्ज॰ O.

8) कश्चि A. B. Cb. कच्चि K. W. काचि O.

ऽल्पाबाधता मन्दग्लानता सुखसंस्पर्शविहारता[1] च। कच्चिद्भगवन्सत्त्वाः[2] स्वाकाराः सुविज्ञापकाः[3] सुविनेयाः[4] सुविशोधका मा हैव भगवतः खेदमुत्पादयन्ति॥

अथ खलु ते[5] चत्वारो बोधिसत्त्वा महासत्त्वा भगवन्तमाभ्यां गाथाभ्यामध्यभाषन्त॥

कच्चित्सुखं विहरसि[6] लोकनाथ प्रभंकर[7]।
आबाधविप्रमुक्तो ऽसि स्पर्शैः[8] काये तवानघ॥१॥ 5
स्वाकाराश्चैव ते सत्त्वाः सुविनेयाः सुशोधकाः।
मा हैव खेदं जनयन्ति[9] लोकनाथस्य भाषतः[10]॥२॥

अथ खलु भगवांस्तस्य महतो बोधिसत्त्वगणस्य महतो बोधिसत्त्वराशेः प्रमुखांश्चतुरो बोधिसत्त्वान्महासत्त्वानि[11]तदवोचत्। एवमेतत्कुलपुत्रा एवमेतत्। सुखसंस्पर्शविहारो ऽस्म्यल्पाबाधो मन्दग्लानः स्वाकाराश्च ममैव ते सत्त्वाः सुविज्ञापकाः[12] सुविनेयाः[13] सुविशोधका न च मे खेदं जनयन्ति विशोध्यमानाः। तत्कस्य हेतोः। ममैव ह्येते कुलपुत्राः सत्त्वाः पौर्वकेषु सम्यक्संबुद्धेषु कृतपरिकर्माणो दर्शनादेव हि कुलपुत्राः श्रवणाच्च ममाधिमु- 10

---

1) सं omitted in O.

2) कश्चिद्भगवां A. K. °गवन् B. O. °गवतो Cb. कच्चिद्भगवान् W.

3) सुविज्ञपकाराः A. K. W. सुविज्ञपका O.

4) वैनेयाः; O. cp. Pāli *veneyya*.

5) In B. O. only.

6) से O. ति the rest.

7) All रः.

8) र्शै O. र्शा the rest.

9) Thus all, evidently corrupt. We propose to r. जनयेत्, the singular being used for the plural.

10) MSS. add इति.

11) महासत्त्वान् in B. only.

12) ज्ञ A. K. W. O.

13) वैनेयाः O.

च्यन्ते बुद्धज्ञानमवतरन्त्यवगाहन्ते। यत्र ये ऽपि[1] श्रावकभूमौ वा[2] प्रत्येकबुद्धभूमौ वा कृतपरिचर्या अभूवंस्ते ऽपि मयैवैतर्हि बुद्धधर्मज्ञानमवतारिता संश्राविताश्च परमार्थम्॥

अथ खलु ते बोधिसत्त्वा महासत्त्वास्तस्यां वेलायामिमे गाथे ऽभाषन्त[2]॥

साधु साधु महावीर अनुमोदामहे वयम्।
5 स्वाकारा येन ते सत्त्वाः सुविनेयाः सुशोधकाः॥ ३॥

ये चेदं ज्ञान गम्भीरं शृण्वन्ति तव नायक।
श्रुत्वा च अधिमुच्यन्ते उत्तरन्ति[3] च[4] नायक[5]॥ ४॥

एवमुक्ते भगवांस्तस्य महतो बोधिसत्त्वगणस्य महतो बोधिसत्त्वराशेः प्रमुखेभ्य श्चतुर्भ्यो बोधिसत्त्वेभ्यो महासत्त्वेभ्यः साधुकारमदात्। साधु साधु कुलपुत्रा ये यूयं तथाग-
10 तमभिनन्दयेति॥

तेन खलु पुनः समयेन मैत्रेयस्य बोधिसत्त्वस्य महासत्त्वस्यान्येषां चाष्टानां गङ्गानदीवालुकोपमानां[6] बोधिसत्त्वकोटीनयुतशतसहस्राणामेतदभवत्। अदृष्टपूर्वो ऽयमस्माभिर्महाबोधिसत्त्वगणो महाबोधिसत्त्वराशिरश्रुतपूर्वश्च यो ऽयं पृथिवीविवरेभ्यः समुन्मज्ज्य[7] भगवतः पुरतः स्थित्वा भगवन्तं सत्कुर्वन्ति गुरूकुर्वन्ति मानयन्ति पूजयन्ति भगवन्तं च
15 प्रतिसंमोदन्ते। कुतः खल्विमे बोधिसत्त्वा महासत्त्वा आगता इति॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्व आत्मना विचिकित्सां कथंकथां विदित्वा

1) Left out in K.

2) A grammatical error for अभाषन्त; O. has गाथा बभाषु॥.

3) श्रोत B. rightly.

4) वि B.

5) Some MSS. add इति.

6) कस O.

7) समुत्पन्नत्वा O. समुत्सह्य the rest; both readings wrong.

तेषां गङ्गानदीवालुकोपमानां[1] बोधिसत्त्वकोटीनयुतशतसहस्राणां चेतसैव चेतः परिवितर्क-
माज्ञाय तस्यां वेलायामञ्जलिं[2] प्रगृह्य भगवन्तं गाथाभिगीतेनैतमेवार्थं परिपृच्छति स्म ॥

बहुसहस्रा नयुताः कोटीयो च अनन्तकाः ।
अपूर्वा बोधिसत्त्वानामाख्याहि द्विपदोत्तम ॥ ५ ॥

कुतो इमे कथं वापि आगच्छन्ति महर्द्धिकाः । 5
महात्मभावा रूपेण कुत एतेष[3] आगमः[4] ॥ ६ ॥

धृतिमन्तास्त्विमे सर्वे स्मृतिमन्तो महर्षयः ।
प्रियदर्शनाश्च रूपेण कुत एतेष आगमः[5] ॥ ७ ॥

एकैकस्य च लोकेन्द्र बोधिसत्त्वस्य विज्ञिनः ।
अप्रमेयपरिवारो यथा गङ्गाय वालिकाः[6] ॥ ८ ॥ 10

गङ्गावालिक[7]समा षष्टि परिपूर्णा यशस्विनः ।
परिवारो बोधिसत्त्वस्य सर्वे बोधाय प्रस्थिताः ॥ ९ ॥

एवंरूपाण वीराणां पर्षवन्तान तायिनाम् ।
षष्टिरेव प्रमाणेन गङ्गावालिकया[8] इमे[9] ॥ १० ॥

---

1) काम A. K. W. O.

2) ली in all MSS. but O., which has लि.

3) All but O. एतेषु.

4) All गताः.

5) Sic O.; एतेषु आगताः the rest.

6) का A. B. K. W. काः Cb.

7) क A. Cb. K. W. का B.

8) का A. W.

9) Read समा. Differently in O. षष्टिमेव परिवारो प्रमाणं गङ्गवालिका.

अतो बहुतराश्चान्ये[1] परिवारैरनन्तकैः ।
पञ्चाशतीय गङ्गाय चत्वारिंशच्च त्रिंशति[2] ॥ ११ ॥
समो विंशतिगङ्गाया परिवारः समन्ततः[3] ।
अतो बहुतराश्चान्ये येषां दश च पञ्च च ॥ १२ ॥
5 एकैकस्य परीवारो बुद्धपुत्रस्य तायिनः ।
कुतो ऽयमीदृशी पर्षदागताश्च[4] विनायक ॥ १३ ॥
चत्वारि त्रीणि द्वे चापि गङ्गावालिकया समाः[5] ।
एकैकस्य परीवारा ये ऽनुशिष्टा[6]समकायकाः ॥ १४ ॥
अतो बहुतराश्चान्ये[7] गणाना येष तत्तिका[8] ।
10 कल्पकोटीसहस्रेषु[9] उपमेतुं न शक्नुयात्[10] ॥ १५ ॥
अर्धगङ्गा त्रिभागश्च दशविंशतिभागिकः[11] ।
परिवारो ऽथ वीराणां बोधिसत्त्वान तायिनाम् ॥ १६ ॥

---

1) न्यो A. K. W. ये च O.

2) All but O. त्रिंशच्च; r. °श च.

3) समंततो A. W. षतात्तको B. Cb. समत्तको K. चारो येष एतकाः O.

4) पर्षदागता ये A. पर्षा श्रागताश्च B. पर्षो श्रागताश्चे Cb. पर्षागता ये K. W. तादृशा वीरा श्रागच्छन्ति O.

5) समे A. समाः B. Cb. समा K. W. Differently in O.

6) अनुशिष्टाः O. येनशिष्टा (?) the rest.

7) तरो चान्ये A. K. W. तरश्चान्ये B. Cb. But see vr. 17 below.

8) तातिकाः O.

9) भि A. O. षु B. Cb. ह्नि K. W. preferable.

10) न शक्यं सर्वि पण्डितुम् O.

11) काः A. कः B. K. W. नः Cb.

अतो बहुतराश्चान्ये[1] प्रमाणेषां[2] न विद्यते ।
एकैकं गणयत्तेन कल्पकोटीशतैरपि ॥ १७ ॥
अतो बहुतराश्चान्ये परिवारैरनन्तकैः[4] ।
कोटी कोटी च कोटी च अर्धकोटी तथैव च ॥ १८ ।
गणनाव्यतिवृत्ताश्च[5] अन्ये भूयो महर्षिणाम् ।
बोधिसत्त्वा महाप्रज्ञाः स्थिताः सर्वे सगौरवाः ॥ १९ ॥
परिवारसहस्रं च शतपञ्चाशदेव च ।
गणना नास्ति एतेषां कल्पकोटीशतैरपि ॥ २० ॥
विंशतिर्दश[6] पञ्चाथ[7] चत्वारि त्रीणि द्वे तथा ।
परिवारो ऽथ वीराणां गणनैषां[8] न विद्यते ॥ २१ ॥
चरन्त्येकात्मका ये च[9] शान्तिं विदन्ति चैककाः ।
गणना तेष[10] नैवास्ति ये इहाद्य समागताः[11] ॥ २२ ॥
गङ्गावालिकासमान्[12]कल्पान्गणयेत यदी नरः ।
शलाकां गृह्य हस्तेन[13] पर्यन्तं नैव सो लभेत् ॥ २३ ॥

---

1) रा चान्ये A. W. राश्चान्ये B. रश्चान्ये Cb. रो चान्ये K.
2) णो Cb.
3) राश्चान्ये A. B. W. रश्चान्ये Cb. रो चान्ये K.
4) नल्प B. Cb.
5) ता च Cb.
6) All but O. तिदृश.
7) पञ्चपट् A. K. W. पंचामच् B. पंचास Cb. Our reading conjectural.
8) ने K.
9) का अन्ये O. better.
10) स्ते A. K. W. ते B. Cb. All but O. चेहाद्य.
11) ताः Cb. O. ता A. B. K. W.
12) लु B.
13) हस्ति गृह्णित्वा O.

महात्मनां च सर्वेषां वीर्यवन्तान तायिनाम् ।
बोधिसत्त्वान वीराणां कुत एतेष संभवः ॥ २४ ॥
केनैषां देशितो धर्मः केन बोधीय[1] स्थापिताः ।
रोचन्ति शासनं कस्य कस्य[2] शासनधारकाः ॥ २५ ॥
5 भित्त्वा हि पृथिवीं सर्वां समन्तेन चतुर्दिशम् ।
उत्पद्यन्ति महाप्रज्ञा ऋद्धिमन्ता विचक्षणाः ॥ २६ ॥
जर्जरा लोकधा[3]तुरियं समन्तेन कृता मुने ।
उन्मज्जमाने[4]रेतेर्हि बोधिसत्त्वैर्विशारदैः ॥ २७ ॥
न ह्येते जातु अस्माभिर्दृष्टपूर्वाः कदाचन ।
10 आख्याहि नो तस्य नाम लोकधातोर्वि[5]नायक ॥ २८ ॥
दिशादिशा हि अस्माभिरन्विचतायो पुनः[6] पुनः ।
न च दृष्टा इमे ऽस्माभिर्बोधिसत्त्वाः कदाचन ॥ २९ ॥
दृष्टो न जातुरस्माभिरेको ऽपि तनयस्तव[7] ।
इमे ऽद्य सहसा दृष्टा[8] आख्याहि चरितं मुने ॥ ३० ॥
15 बोधिसत्त्वसहस्राणि शतानि नयुतानि च ।
सर्वे कौतूहलप्राप्ताः पश्यन्ति द्विपदोत्तमम् ॥ ३१ ॥

---

1) All बोधाय.

2) कस्ये म A. W. कस्य स B. कस्येमे K.

3) त्वे in all MSS.

4) O. has उत्पन्नतेभिरेतेभिर्.

5) नामं तत्रस्य लोकवि K. नो omitted in O.; further तस्य तेत्रस्य नाम लोकवि.

6) दिंमे दिशा यो B. दिशो दशो अस्माभिरचिताये Cb. O. has दिशादिशामु हि अस्मे अपियन्ता (r. अपिवता or अपिठता) स्म.

7) तरयस्तव K. In O. a break.

8) दृष्ट्वा K.

व्याकुरुष महावीर अप्रमेय निरोपधे[1]।
कुत एति इमे शूरा बोधिसत्त्वा विशारदाः[2] ॥ ३२ ॥

तेन खलु पुनः समयेन ये ते तथागता अर्हन्तः सम्यक्संबुद्धा अन्येभ्यो लोकधातु-कोटीनयुतशतसहस्रेभ्यो ऽभ्यागता भगवतः शाक्यमुनेस्तथागतस्य निर्मिता ये ऽन्येषु[3] लोकधातुषु सत्त्वानां धर्मं देशयन्ति स्म ये भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्सं- 5 बुद्धस्य समन्तादष्टभ्यो दिग्भ्यो[4] रत्नवृक्षमूलेषु महारत्नसिंहासनेषूपविष्टाः पर्यङ्कबद्धाः[5]। तेषां तथागतानामर्हतां सम्यक्संबुद्धानां ये स्वकस्वका उपस्थायकास्ते ऽपि तं महान्तं बोधिसत्त्वगणं बोधिसत्त्वराशिं दृष्ट्वा समन्तात्पृथिवीविवरेभ्य उन्मज्जन्तमाकाशधातुप्रति-[6] ष्ठितं ते ऽप्याश्चर्यप्राप्तास्तान्स्वान्स्वांस्तथागतानेतदूचुः। कुतो भगवन्नियन्तो[7] बोधिसत्त्वा महासत्त्वा आगच्छन्त्यप्रमेया असंख्येयाः[8]। एवमुक्तास्ते तथागता अर्हन्तः सम्यक्संबुद्धा- 10 स्तान्स्वान्स्वानुपस्थायकानेतदूचुः। आगमयध्वं यूयं कुलपुत्रा मुहूर्तम्। एष मैत्रेयो नाम[9] बोधिसत्त्वो महासत्त्वो भगवतः शाक्यमुनेरनन्तरं व्याकृतो ऽनुत्तरायां सम्यक्संबोधौ। स एतं[10] भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धमेतमर्थं[11] परिपृच्छत्येष च भगवाञ्शा-क्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धो व्याकरिष्यति। ततो यूयं श्रोष्यथेति[12] ॥

---

1) निरोपधेः K. निरापधेः A. निरापधे B. निरोपधे Cb. W. O. More usual is अनूपधि.

2) All but O. add इति.

3) अन्यासु O., but inconsistently °धातुकोटिनयुतशतसहस्रेषु.

4) ष्टादिन्तु Cb.

5) पर्यङ्केन O. पर्यङ्कवध्वाः in the other MSS.

6) उन्मज्जन्त आ° O.

7) इमे एतका O.

8) O. adds अतुल्या अगणयनीयाः Cp. below p. 309, l. 3.

9) Left out in K.

10) एवं A. एतं B. Cb. W. एवं तं K.

11) तथागतमेतमर्थं K.

12) तं शृणुथ O.

अथ खलु भगवान्मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म । साधु साध्वजित । उदारमेतदजित स्थानं य[1]त्त्वं मा परिपृच्छसि । अथ खलु भगवान्सर्वावन्तं बोधिसत्त्वगणमामन्त्रयते स्म । तेन हि कुलपुत्राः सर्व एव प्रयता भवध्वं सुसंनद्धा दृढस्थामाश्च भवध्वं सर्वश्चायं बोधिसत्त्वगणः । तथागतज्ञानदर्शनं कुलपुत्रास्तथागतोऽर्हन्सम्यक्संबुद्धः सांप्रतं संप्रकाशयति तथागत[2]वृषभितं तथागतकर्म तथागतविक्रीडितं तथागतविजृम्भितं तथागतपराक्रममिति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

प्रयता भवध्वं कुलपुत्र सर्वे इमां प्रमुञ्चामि गिरामनन्यथाम् ।
मा खू [3]विषादं कुरुथेह पण्डिता अचिन्तियं [4]ज्ञानु तथागतानाम् ॥ ३३ ॥
धृतिमन्त भूत्वा स्मृतिमन्त सर्वे समाहिताः सर्वि स्थिता भवध्वम् ।
अपूर्व[5]धर्मा श्रुणितव्यु[6] अद्य आश्चर्यभूतो हि तथागतानाम् ॥ ३४ ॥
विचिकित्स मा जातु कुरुध सर्वे अहं हि [7]युष्मान्परिसंस्थपेमि ।
अनन्यथावादिरहं विनायको ज्ञानं च मे यस्य न काचि संख्या ॥ ३५ ॥
गम्भीरधर्माः सुगतेन बुद्धा अतर्किया येष प्रमाणु नास्ति ।
ता[8]नद्य हं [9]धर्म प्रकाशयिष्ये शृणोथ मे यादृशका यथा च ते ॥ ३६ ॥

---

1) यथा O. यस्त्वं the rest.

2) MSS. give भितां and भिनं.

3) विषादं A. W. O. विसादं B. विवादं Cb. रिष्यदं K.

4) न B. Cb. W. O.

5) र्म A K. W. Better, because the lengthening is not necessary.

6) व्य A. B. वा W. व्यमद्य O. with *m* to avoid hiatus.

7) यूयं A. B. W. युष्मां Cb. K.

8) येषामहं A. K. O. तामहं W.

9) Rather धर्मि (Skr. धर्मान्) or to r. with O. तेषामहं.

अथ खलु भगवानिमा गाथा भाषित्वा तस्यां[1] वेलायां[1] मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म । आरोचयामि ते ऽजित प्रतिवेदयामि । य इमे ऽजित बोधिसत्त्वा अप्रमेया असंख्येया अचिन्त्या अतुल्या अगणनीया ये युष्माभिरदृष्टपूर्वा य एतर्हि पृथिवीविवरेभ्यो निष्क्रान्ताः ।[2] मयैते ऽजित सर्वे बोधिसत्त्वा महासत्त्वा अस्यां सहायां[3] लोकधातावनुत्तरां सम्यक्संबोधिमभिसंबुध्य समादापिताः समुत्तेजिताः संप्रहर्षिता अनुत्तरायां सम्यक्संबोधौ परिणामिताः । मया चैते कुलपुत्रा अस्मिन्बोधिसत्त्वधर्मे परिपाचिताः प्रतिष्ठापिता निवेशिताः परिसंस्थापिता अवतारिताः[4] परिबोधिताः[5] परिशोधिताः । एते चाजित बोधिसत्त्वा महासत्त्वा अस्यां सहायां लोकधाता अधस्तादाकाशधातुपरिच्छेदे[6] प्रतिवसन्ति । स्वाध्यायोद्देशचिन्ता योनिशो मनसिकारप्रवृत्ता[7] एते कुलपुत्रा असङ्गणिकारामा असंसर्गाभिरता अनिक्षिप्तधुरा[8] आरब्धवीर्याः । एते ऽजित कुलपुत्रा विवेकारामा विवेकाभिरताः । नैते कुलपुत्रा देवमनुष्यानुपनिश्राय[9] विहरन्त्यसंसर्गचर्याभिरताः । एते कुलपुत्रा धर्मारामाभिरता बुद्धज्ञाने ऽभियुक्ताः ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

ये बोधिसत्त्वा इमि अप्रमेया अचिन्तिया येष प्रमाणु[10] नास्ति ।
ऋद्धीय प्रज्ञाय श्रुतेनुपेता बहुकल्पकोटीचरिताश्च ज्ञाने ॥ ३७ ॥

---

1) Left out in K. O.

2) Cb. K. W. add च.

3) O has generally the masc. form सह; here इह सहे.

4) In Cb. O. only.

5) Left out in B. Cb.

6) रुहिमा O.

7) प्रयत्ता O.

8) All but O. वि.

9) देवानां मनुष्याणां वा.

10) णा O.

परिपाचिताः सर्वि मयेति बोधये ममैव क्षेत्रस्मि वसन्ति चैते ।
परिपाचिताः सर्वि मयेव एते ममैव पुत्राश्चिमि बोधिसत्त्वाः ॥ ३८ ॥
सर्वे ति आरण्यधुताभियुक्ताः[1] संसर्गभूमिं सद वर्जयन्ति ।
असङ्गचारी च ममेति पुत्रा ममोत्तमां चर्यनुशिक्षमाणाः ॥ ३९ ॥
वसन्ति आकाशपरिग्रहस्मिन्क्षेत्रस्य क्रेष्टा[2]परिभोगि[3] वीराः ।
समुदानयन्ता इममग्रबोधिं उद्युक्त रात्रिं दिवमप्रमत्ताः ॥ ४० ॥
आरब्धवीर्या स्मृतिमन्त सर्वे प्रज्ञाबलस्मिन्स्थित अप्रमेये ।
विशारदा धर्मु कथेन्ति चैते प्रभास्वरा पुत्र ममेति सर्वे ॥ ४१ ॥
मया च प्राप्य[4] इममग्रबोधिं नगरे गयायां द्रुममूलि तत्र ।
10 अनुत्तरं वर्तिय धर्मचक्रं परिपाचिताः[5] सर्वि इहाग्रबोधौ ॥ ४२ ॥
अनास्रवा भूत इयं[6] मि वाचा शृणित्व सर्वे मम श्रद्दधर्ध्यम्[7] ।
एवं चिरं प्राप्त मयाग्रबोधि परिपाचिताश्चेति मयेव सर्वे ॥ ४३ ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वस्तानि च संबहुलानि बोधिसत्त्वकोटीनयुतशतसहस्राण्याश्चर्यप्राप्तान्यभूवन्नद्भुतप्राप्तानि[8] विस्मयप्राप्तानि । कथं नाम भगवतानेन 15 क्षणविहारेणा[9]ल्पेन[10] कालान्तरेणामी एतावन्तो बोधिसत्त्वा महासत्त्वा असंख्येयाः समादा-

1) धिमुक्ताः O.
2) क्रेष्ट A. W. क्रेष्ठ B. क्रष्टे Cb. K. क्रेष्ठ W. क्रेष्टिन O.
3) गु A. B. Cb. W. ग K. गि our conjecture. Differently in O. इमस्य पण्डिताः.
4) प्रध्या A. अध्या B. प्राध्या Cb. प्राप्य B. W. प्राप्तेनिम O
5) पामिताः O.
6) इमा O. इमं A. B. K. इयं Ca. Cb. इये W.
7) पत्तियाथ O.
8) अद्भुतप्राप्तानि left out in K. O.
9) वीति for वि O, certainly the original reading; cp. Mahāvastu III, 425,16.
10) रेणाल्पेन K. A. W. रेणानेन B. Cb. रेण एवपरितेन (i. e. एवंपरीत्तेन) O.

पिताः परिपाचिताश्चानुत्तरायां सम्यक्संबोधौ ॥ अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । कथमिदानीं भगवंस्तथागतेन कुमारभूतेन कपिलवस्तुनः शाक्यनगरान्निष्क्रम्य गयानगराान्नातिदूरे बोधिमण्डवराग्रगतेनानुत्तरा सम्यक्संबोधिरभिसंबुद्धा । तस्याश्च भगवन्कालस्य सातिरेकाणि चत्वारिंशद्वर्षाणि । तत्कथं भगवंस्तथागतेनेयता कालान्तरेणेदमपरिमितं तथागतकृत्यं कृतं तथागतेन तथागतवृषभिता तथागतपराक्रमः कृतः । यो ऽयं बोधिसत्त्वगणो बोधिसत्त्वराशिरियता भगवन्कालान्तरेणानुत्तरायां सम्यक्संबोधौ समादापितः परिपाचितश्चास्य भगवन्बोधिसत्त्वगणस्य बोधिसत्त्वराशेर्गण्यमानस्य कल्पकोटीनयुतशतसहस्रैरप्यन्तो नोपलभ्यते । एवमप्रमेया भगवन्निमे बोधिसत्त्वा महासत्त्वा एवमसंख्येयाश्चिरचरितब्रह्मचर्या बहुबुद्धशतसहस्रावरोपितकुशलमूला बहुकल्पशतसहस्रपरिनिष्पन्नाः ॥

तद्यथापि नाम भगवन्कश्चिदेव पुरुषो नवो दहरः शिशुः कृष्णकेशः प्रथमेन वयसा समन्वागतः पञ्चविंशतिवर्षो जात्या भवेत् । स वर्षशतिकान्पुत्रानादर्शयेदेवं च वदेत् । एते कुलपुत्रा मम पुत्रा इति । ते च वर्षशतिकाः पुरुषा एवं च वदेयुः । एषो ऽस्माकं पिता जनक इति । तस्य च पुरुषस्य भगवंस्तद्वचनमश्रद्धेयं भवेल्लोकस्य दुःश्रद्धेयम् । एवमेव भगवन्नचिराभिसंबुद्धो ऽनुत्तरां सम्यक्संबोधिमिमे च बोधिसत्त्वा महासत्त्वा बहुप्रमेया

(Footnote markers in the original: (1) शाक्या-, (2) -नगरान्ना-, (3) -क्संबो-, (4) -बुद्धा, (5) -भिता, (6) -पितः, (7) -लभ्यते, (8) दहरः … कृष्ण-, (9) -दर्शये-, (10) -भिसंबुद्धो, (11) बहु-. Line numbers 5, 10, 15 in margin.)

1) शाक्यानां न O.
2) नगरस्य ना A. K. W. नगरे प्रति O.
3) All रां and धिम.
4) द्धा O. द्धस्त the others.
5) भितं O. भिता the rest.
6) ताश्च A. B. K. W. ताः Cb. दपितः O.
7) भ्यंते A. B. K. W. भ्यते Cb. न लभ्यते O.
8) दहरस्तरुणः काड O.
9) पुत्रां दर्श A. K.
10) B. Cb. have द्धस्तथागतो ऽर्हत्सम्यक्संबुद्धो
11) Rather बहवो.

बहुकल्पकोटीनयुतशतसहस्रचोर्णचरितब्रह्मचर्या[1] दीर्घरात्रं हि कृतनिश्चया बुद्धज्ञाने समाधिमुखशतसहस्रसमापद्यनव्युत्थानकुशला[2] महाभिज्ञापरिकर्मनिर्याता महाभिज्ञाकृ-[3] तपरिकर्माणः पण्डिता बुद्धभूमौ संगीतिकुशलास्तथागतधर्माणामाश्चर्याद्भुता[4] लोकस्य महावीर्यबलस्थामप्राप्ताः । तांश्च भगवानेवं वदति । मयैत आदित एव समादापिताः

5 समुत्तेजिताः परिपाचिताः परिणामिताश्चास्यां बोधिसत्त्वभूमाविति । अनुत्तरां सम्यक्सं-बोधिमभिसंबुद्धेन मयैष सर्ववीर्यपराक्रमः कृत इति । किं चापि वयं भगवंस्तथागतस्य वचनं श्रद्धया गमिष्यामः । अनन्यथावादी तथागत इति । तथागत एवैतमर्थं जानीयात् । नवयानसंप्रस्थिताः खलु पुनर्भगवन्बोधिसत्त्वा महासत्त्वा विचिकित्सामापद्यन्ते । अत्र स्थाने परिनिर्वृते तथागत इमं धर्मपर्यायं श्रुत्वा न पत्तीयिष्यन्ति न श्रद्धास्यन्ति[5] नाधिमो-

10 क्ष्यन्ति । ततस्ते भगवन्धर्मव्यसनसंवर्तनीयेन कर्माभिसंस्कारेण समन्वागता भविष्यन्ति । तत्साधु भगवन्नेतमेवार्थं देशय[6] यद्वयं निःसंशया अस्मिन्धर्मे[7] भवेम अनागते ऽध्वनि बोधि-सत्त्वयानीयाः कुलपुत्रा वा कुलदुहितरो वा श्रुत्वा न विचिकित्सामापद्येरन्निति[8] ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां भगवन्तमाभिर्गाथाभिरध्य-भाषत ॥

15 यदासि जातो कपिलाह्वयस्मिञ्शाक्याधिवासे अभिनिष्क्रमित्वा ।
प्राप्तो ऽसि बोधिं नगरे गयाह्वये कालो ऽयमल्पो ऽत्र तु[9] लोकनाथ ॥ ४४ ॥

---

1) चरित, Cb. चरिता redundant. Some lines illegible in O.

2) Some words wanting in O.

3) A various reading adds ज्ञान.

4) प्रश्नेषु for धर्माणाम् O.

5) श्रद्दधास्यन्ति O.

6) देशोहि यथा O.

7) Left out in K. अत्र धर्मेषु O.

8) इति wanting in O.

9) कालेन स्वल्पेन तु K. कालो ह्ययमल्पको O.

इमे च ते ग्रार्यविशारदा बहू ये कल्पकोटीचरिता महागणो ।
अद्दोबले च स्थित अप्रकम्पिताः[1] सुशिक्षिताः प्रज्ञबले गतिंगताः ॥ ४५ ॥
अनुपलिप्ताः पद्मं व वारिणा भित्वा महीं ये इह अद्य आगताः ।
कृताञ्जली सर्वि स्थिताः सगौरवाः स्मृतिमन्त लोकाधिपतिस्य पुत्राः ॥ ४६ ॥
कथं इमं अद्भुतमीदृशं ते तं श्रद्दधिष्यन्तिाम बोधिसत्त्वाः ।
विचिकित्सनिर्घातनहेतु भाष तं[2] त्वं चैव देशेहि यथैव अर्थः[3] ॥ ४७ ॥
यथा हि[4] पुरुषो इह कश्चिदेव दहरो भवेया शिशु कृष्णकेशः ।
जात्या च सो विंशतिवर्षको वा दर्शेति पुत्राञ्शतवर्षजातान् ॥ ४८ ॥
वलीहि पलितेहि च ते उपेता एषो च नो देहकरो ति ब्रूयुः ।
दुःश्रद्दधं तद्भवि लोकनाथ दहरस्य पुत्रा इमि एवरूपाः ॥ ४९ ॥ 10
एमेव[5] भगवंश्च न बोधयेम इमे च विज्ञा बहुबोधिसत्त्वाः ।
स्मृतिमन्त प्रज्ञाय विशारदाश्च सुशिक्षिताः कल्पसहस्रकोटिषु ॥ ५० ॥
धृतिमन्त प्रज्ञाय विचक्षणाश्च प्रसादिका दर्शनियाश्च सर्वे ।
विशारदा धर्मविनिश्चयेषु परिसंस्तुता लोकविनायकेहि[6] ॥ ५१ ॥
असङ्गचारीव वने वसन्ति आकाशधातौ सततं अनिश्रिताः । 15
जानन्ति वीर्यं सुगतस्य पुत्राः पर्येषमाणा इम बुद्धभूमिम्[7] ॥ ५२ ॥

---

1) कंपिये B. K. मेये O.

2) भाष A. B. K. भाषत Cb. भाषते W. तं for तत्.

3) अर्थो A. Ca. W. अथे B. अर्था Cb. आर्थो W. अर्थः O.

4) All but O. पि.

5) All but O. एवमेव.

6) न A. B. K. W. हि Cb. O.

7) बोधिं A. B. K. W. O. भूमिं Cb.

कथं नु श्रद्धेयमिदं भवेया[1] परिनिर्वृते लोकविनायकस्मिन्।
विचिकित्स अस्माक न काचिदस्ति[2] शृणोमथा[3] संमुख लोकनाथ[4] ॥ ५३ ॥
विचिकित्स कृत्वान इमस्मि स्थाने गच्छेयु मा दुर्गति बोधिसत्त्वाः।
[5]त्वं व्याकुरुष्व भगवन्यथावत्कथ[6] बोधिसत्त्वाः परिपाचिता इमे ॥ ५४ ॥

॥ इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये बोधिसत्त्वपृथिवीविवरसमुद्गमपरिवर्तो नाम चतुर्दशमः[7] ॥

---

1) भवेत O.

2) अस्माकं कदा A. B. K. अस्माक न का Cb. अस्माक कदा W. O.

3) शृण्वानथा A. शृणोमथा B. शृणोम यं O. शृणामथा Cb. शृण्वानमर्था K शृश्मानथा W.

4) था A. K. थः B. थ Cb. W. पकस्य O.

5) तद् B. Cb तं O.

6) थं A. K. W.

7) पृथिवीसमुद्गतबोधिसत्त्वप° — पञ्चदशमः O.

# XV.

अथ खलु भगवान्सर्वावन्तं बोधिसत्त्वगणामामन्त्रयते स्म[1]। अवकल्पयध्वं मे कुलपुत्रा
अभिश्रद्दधध्वं तथागतस्य भूतां वाचं व्याहरतः। द्वितीयकमपि[2] भगवांस्तान्बोधिसत्त्वा-
नामन्त्रयते स्म[3]। अवकल्पयध्वं मे कुलपुत्रा अभिश्रद्दधध्वं तथागतस्य भूतां वाचं व्याहरतः[4]।
तृतीयकमपि भगवांस्तान्बोधिसत्त्वानामन्त्रयते स्म। अवकल्पयध्वं मे कुलपुत्रा अभिश्रद्दधध्वं
तथागतस्य भूतां वाचं व्याहरतः। अथ खलु स[5] सर्वावान्बोधिसत्त्वगणो मैत्रेयं बोधिसत्त्वं 5
महासत्त्वमग्रतः स्थापयित्वाञ्जलिं[6] प्रगृह्य[7] भगवन्तमेतदवोचत्। भाषतु भगवानेतमेवार्थं
भाषतु सुगतो वयं तथागतस्य भाषितमभिश्रद्धास्यामः। द्वितीयकमपि[8] स सर्वावान्बोधि-
सत्त्वगणो भगवन्तमेतदवोचत्[9]। भाषतु भगवानेतमेवार्थं भाषतु सुगतो वयं तथागतस्य भा-
षितमभिश्रद्धास्यामः। तृतीयकमपि[10] स सर्वावान्बोधिसत्त्वगणो भगवन्तमेतदवोचत्[9]। भा-
षतु भगवानेतमेवार्थं भाषतु सुगतो वयं तथागतस्य भाषितमभिश्रद्धास्याम इति॥ 10

अथ खलु भगवांस्तेषां बोधिसत्त्वानां यावत्तृतीयकमप्यध्येषणां विदित्वा तान्बो-

---

1) यामास A. K. W. यति स्म O.

2) द्वितीयकमपि यावत्तृतीयकमपि K. A. W.

3) यामास A. Cb. यति स्म O. K. W.

4) The whole paragraph is left out in K. W. A.

5) Left out in B. K.

6) स्थाप्या Ca. Cb.

7) प्रणाम्य Ca. Cb.

8) द्वि A. K.

9) तद्वचुः A. K. W. तदवोचुः O.

10) त्रै A. Cb. K. W.

11) त्रै A. Cb.

धिसत्त्वानामन्त्रयते स्म[1]। तेन हि कुलपुत्राः शृणुधमिदमेवंरूपं ममाधिष्ठानबलाधानं यदयं[2] कुलपुत्राः सदेवमानुषासुरो लोक एवं संजानीते। सांप्रतं भगवता शाक्यमुनिना[3] तथागतेन[4] शाक्यकुलादभिनिष्क्रम्य[5] गयाह्वये महानगरे[6] बोधिमण्डवराग्रगतेनानुत्तरां सम्यक्संबोधिमभिसंबुद्ध[7] इति। नैवं द्रष्टव्यम्। अपि तु खलु पुनः कुलपुत्रा बहूनि मम कल्पकोटी-
5 नयुतशतसहस्राण्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य। तद्यथापि नाम कुलपुत्राः पञ्चाशत्सु लोकधातुकोटीनयुतशतसहस्रेषु ये पृथिवीधातुपरमाणवः। अथ खलु कश्चिदेव पुरुष उत्पद्यते स एकं परमाणुरजं[8] गृहीत्वा पूर्वस्यां दिशि पञ्चाशल्लोकधात्वसंख्येयशतसहस्राण्यतिक्रम्य तदेकं परमाणुरजः समुपनिक्षिपेत्[9]। अनेन पर्यायेण कल्पकोटीनयुतशतसहस्राणि स पुरुषः सर्वांस्ताँल्लोकधातून्व्यपगतपृथिवीधातून्[10] कुर्यात्[11]सर्वाणि च
10 तानि पृथिवीधातुपरमाणुरजांस्यनेन पर्यायेणानेन च लक्षनिक्षेपेण पूर्वस्यां दिश्युपनिक्षिपेत्। तत्किं मन्यध्वे कुलपुत्राः शक्यं ते लोकधातवः केनचिच्चिन्तयितुं वा गणयितुं वा तुलयितुं वोपलक्षयितुं वा। एवमुक्ते मैत्रेयो बोधिसत्त्वो महासत्त्वः स च सर्वावान्बोधिसत्त्वगणो बोधिसत्त्वराशिर्भगवन्तमेतदवोचत्। असंख्येयास्ते[12] भगवँल्लोकधातवो ऽगण-

---

1) यामास A. Cb. K. W. यति स्म O.

2) All but O. यो ऽयं.

3) शाक्याभिराजेन O.

4) In B. Cb. only.

5) Left out in K.

6) गजायां नगरे O.

7) The construction shows a confusion between the instrumental and the nominative case. But perhaps to r. °ण °धिरभिसंबुद्धेति.

8) This Prākṛticism in all MSS. and उद्गृहीत्वा O.

9) रजमुप O. the more original reading.

10) व्यपगत B. K. अपगत O. व्यपग the rest.

11) वीपरमाणुरजं A. वीपरमाणुं K. W. वीधातुं O.

12) A. K. W. read तावद् for ते.

नीयाश्चित्तभूमिसमतिक्रान्ताः । सर्वश्रावकप्रत्येकबुद्धैरपि भगवन्नार्येण ज्ञानेन न शक्यं चिन्तयितुं वा गणयितुं वा तुलयितुं वोपलक्षयितुं वा । अस्माकमपि तावद्भगवन्नवैवर्त्य-भूमि[1]स्थितानां बोधिसत्त्वानां महासत्त्वानामस्मिन्स्थाने चित्तगोचरो न प्रवर्तते । तावद्-प्रमेया भगवंस्ते लोकधातवो भवेयुरिति[2] ॥

एवमुक्ते भगवांस्तान्बोधिसत्त्वान्महासत्त्वानेतदवोचत् । आरोचयामि वः कुलपुत्राः 5 प्रतिवेदयामि वो यावन्तः कुलपुत्रास्ते लोकधातवो येषु तेन पुरुषेण तानि परमाणुरजां-स्युपनिक्षिप्तानि येषु च[3] नोपनिक्षिप्तानि सर्वेषु[4] तेषु कुलपुत्रा लोकधातुकोटीनयुतशतस-हस्रेषु न तावन्ति परमाणुरजांसि संविद्यन्ते यावन्ति मम कल्पकोटीनयुतशतसहस्राण्यनु-त्तरां सम्यक्संबोधिमभिसंबुद्धस्य । यतः प्रभृत्यहं[5] कुलपुत्रा अस्यां सहायां लोकधातौ सत्त्वानां धर्मं देशयाम्यन्येषु च लोकधातुकोटीनयुतशतसहस्रेषु ये च मया कुलपुत्रा अत्रा- 10 न्तरा[6] तथागता अर्हन्तः सम्यक्संबुद्धाः परिकीर्तिता दीपंकरतथागतप्रभृतयस्तेषां च तथागतानामर्हतां सम्यक्संबुद्धानां परिनिर्वाणाय[7] मयैव तानि कुलपुत्रा उपायकौश-ल्यधर्मदेशनाभिनिर्हारनि[8]र्मितानि । अपि तु खलु पुनः कुलपुत्रास्तथागत आगतागता-[9]नां सत्त्वानामिन्द्रियपरापरज्ञतां वीर्यारब्धिमात्रतां व्यवलोक्य[10] तस्मिन्नात्मनो नाम व्या-हरति[11] तस्मिंस्तस्मिंश्चात्मनः परिनिर्वाणं व्याहरति तथा तथा च सत्त्वान्परितोषयति 15

---

1) वर्तिकबोधिसत्वभूमौ O.
2) इति wanting in O.
3) वा B. Cb.
4) B. Cb. add च.
5) प्रतिभ्यहं A. प्रभृतयः Cb.
6) रे K. O.
7) णानि K. णा O.
8) रार्थमभिनि O.
9) गता left out in B.
10) लोकयित्वा A. K. W. O. लोक Cb. लोक्य B.
11) A. adds स्म. नामानि करोति O.

नानाविधैर्धर्मपर्यायैः। तत्र कुलपुत्रास्तथागतो नानाधिमुक्तानां सत्वानामल्पकुशलमूलानां बहूपक्लेशानामेवं वदति[1]। दहरो ऽहमस्मि भिक्षवो जात्याभिनिष्क्रान्तो ऽचिराभिसंबुद्धो ऽस्मि भिक्षवो ऽनुत्तरां सम्यक्संबोधिम्। यत्खलु पुनः कुलपुत्रास्तथागत एवं चिराभिसंबुद्ध एवं व्याहरत्यचिराभिसंबुद्धो ऽहमस्मीति नान्यत्र सत्वानां परिपाचनार्थमवतारणा-
5 र्थमेते धर्मपर्याया भाषिताः। सर्वे च ते कुलपुत्रा धर्मपर्यायास्तथागतेन सत्वानां विनयार्थाय भाषिताः। यां[2] च कुलपुत्रास्तथागतः सत्वानां विनयार्थवाचं[3] भाषते[4] आत्मोपदर्शनेन वात्मारम्बणेन वापरारम्बणेन वा यत्किंचित्तथागतो व्याहरति सर्वे ते धर्मपर्यायाः सत्यास्तथागतेन भाषिता नास्त्यत्र तथागतस्य मृषावादः। तत्कस्य हेतोः। दृष्टं हि तथागतेन त्रैधातुकं यथाभूतं न जायते न म्रियते न च्यवते नोपपद्यते न संसरति न परिनिर्वाति[5]
10 न भूतं नाभूतं न सन्तं नासन्तं न तथा नान्यथा न वितथा नावितथा नान्यथा[6] न तथा। त्रैधातुकं तथागतेन दृष्टं यथा बालपृथग्जना न पश्यन्ति[7] प्रत्यक्षधर्मा[8] तथागतः खल्वस्मिन्स्थाने ऽसंप्रमोषधर्मा[9]। तत्र तथागतो यां कांचिद्वाचं व्याहरति सर्वं तत्सत्यं न मृषा नान्यथा। अपि तु खलु पुनः सत्वानां नानाचरितानां नानाभिप्रायाणां संज्ञाविकल्पचरितानां कुशलमूलसंजननार्थं[10] विविधान्धर्मपर्यायान्विविधैरारम्बणैर्व्याहरति। यद्धि
15 कुलपुत्रास्तथागतेन कर्तव्यं तत्तथागतः करोति। तावच्चिराभिसंबुद्धो ऽपरिमितायुष्प्र-

---

1) A. K. W. add स्म.

2) याः A. W. यां B. K. ये Cb. यां यामेव O.

3) ताः A. K. W. ता B. तः Cb. त्ते B. K. त्य O.

4) त्ते B. K. त्य O.

5) वायति O. वपयति K.

6) From न वितथा till नान्यथा left out in B. Cb. न सत्यं नासत्यं added in O.

7) त्ति A. B. Cb. K. O. ति W.

8) All मात्त.

9) मास्तथागतो O. माः the rest

10) जनार्थं Cb.

माणं तथागतः सदा स्थितः । अपरिनिर्वृतस्तथागतः परिनिर्वाणमादर्शयति वैनेयवशेन[1] । न च तावन्मे कुलपुत्रा अद्यापि पौर्विकी[2] बोधिसत्त्वचर्यापरिनिष्पादितायुष्प्रमाणमप्य-परिपूर्णम् । अपि तु खलु पुनः कुलपुत्रा अद्यापि तद्द्विगुणेन मे कल्पकोटीनयुतशतसहस्राणि भविष्यन्त्यायुष्प्रमाणस्यापरिपूर्णत्वात्[3] । इदानीं खलु पुनरहं कुलपुत्रा अपरिनिर्वायमाण एव परिनिर्वाणमारोचयामि । तत्कस्य हेतोः । सत्त्वानहं कुलपुत्रा अनेन पर्यायेण परिपाचयामि मा हैव मे[4] ऽतिचिरं तिष्ठतो ऽभीक्ष्णदर्शनेनाकृतकुशलमूलाः सत्त्वाः पुण्यविरहिता दरिद्रभूताः कामलोलुपा[5] अन्धा दृष्टिजालसंछन्नास्तिष्ठति तथागत इति विदित्वा किलीकृतसंज्ञा[6] भवेयुर्[7] [8] न च तथागते[9] दुर्लभसंज्ञामुत्पादयेयुरासन्ना वयं तथागतस्येति वीर्यं नारभेयुस्त्रैधातुकान्निःसरणार्थं न च तथागते दुर्लभसंज्ञामुत्पादयेयुः । ततः कुलपुत्रास्तथागत उपायकौशल्येन तेषां सत्त्वानां दुर्लभप्रादुर्भावो[10] भिक्षवस्तथागत इति वाचं व्याहरति स्म । तत्कस्य हेतोः । तथा हि तेषां सत्त्वानां बहुभिः कल्पकोटीनयुतशतसहस्रैरपि तथागतदर्शनं भवति वा न वा । ततः खल्वहं कुलपुत्रास्तदारम्बणं कृत्वैवं वदामि । दुर्लभप्रादुर्भावा हि भिक्षवस्तथागता इति । ते भूयस्या मात्रया दुर्लभ-

---

1) सात् Cb. K. O.

2) पूर्विका B. पर्वका Cb. पूर्विका O.

3) स्य परिपूर्णता K. स्य परिपूरणतायाः O.

4) Left out in Cb. O.

5) लुपाया A. B. लुपा K. लुपा W. लुपा सत्त्वदृष्टि Cb. लुपा आत्माद्यन्-सिता O.

6) गाढा O.

7) अभूवन् न A. W.

8) त A. ते W. from ते till युर् left out in Cb., while K. reads भवेयुः । त्रैधातुकान्निस्सरणार्थन्न च तथागते.

9) From त till °येयुः left out in O.

10) भाः Cb.

प्रादुर्भावांस्तथागतान्विदित्वाश्चर्यसंज्ञामुत्पादयिष्यन्ति शोक[1]संज्ञामुत्पादयिष्यन्ति[2] अपश्य-
न्तश्च तथागतानर्हतः सम्यक्संबुद्धान् तृषिता भविष्यन्ति[3] तथागतदर्शनाय[4]। तेषां तानि
तथागतारम्बणमनस्कारकुशलमूलानि दीर्घरात्रमर्थाय हिताय सुखाय च भविष्यन्त्य[5]येतमर्थं
विदित्वा तथागतोऽपरिनिर्वायन्नेव[6] परिनिर्वाणमारोचयति सत्त्वानां वैनेयवशमुपादाय।
5 तथागतस्यैष कुलपुत्रा देशनापर्यायो[7] यदेवं व्याहरति नास्त्यत्र तथागतस्य मृषावादः॥

तद्यथापि नाम कुलपुत्राः कश्चिदेव वैद्यपुरुषो[8] भवेत्पण्डितो व्यक्तो मेधावी सुकु-
शलः सर्वव्याधिप्रशमनाय। तस्य च पुरुषस्य बहवः पुत्रा भवेयुर्दश वा विंशतिर्वा त्रिं-
शद्वा चत्वारिंशद्वा पञ्चाशद्वा शतं[9] वा। स च वैद्यः प्रवासगतो भवेत् ते चास्य सर्वे पुत्रा
गरपीडा वा विषपीडा वा भवेयुः। तेन गरेण वा विषेण वा दुःखाभिर्वेदनाभिरभितूर्णा[10]
10 भवेयुः। ते तेन गरेण वा विषेण वा दह्यमानाः[11] पृथिव्यां प्रपतेयुः[12]। अथ स तेषां वैद्यः[13]
पिता प्रवासादागच्छेत् ते चास्य पुत्रास्तेन गरेण वा विषेण वा दुःखाभिर्वेदनाभिरार्ताः।
केचिद्विपरीतसंज्ञिनो भवेयुः केचिदविपरीतसंज्ञिनो भवेयुः[14]। सर्वे च ते तेनैव दुःखेनार्तास्तं

---

1) सोभन Cb.

2) In Cb. K. O. only.

3) A. B. K. W. add सदेवके लोके.

4) ये A. B. Cb.

5) ष्यन्तीति। एत K.

6) वायमाणश्चैव O. र्वापयन्नेव K. left out in W.

7) धर्मपर्यायो A. K. W. O.

8) वैद्यः K. left out in Cb.

9) All but K. O. have शतसहस्रं वा.

10) Sic O. °ज्ञाता A. B. अविज्ञाता W. अभिरीर्णा Cb. °भिस्तुन्ना K. Cp. Pāṇini VI, 4, 21.

11) दह्यंतः A. B. K. W.

12) प्रवेष्ट्युः K.

13) वैद्यपिता A. B. W.

14) Left out in Cb. K.

पितरं दृष्ट्वाभिनन्देयुरेवं चैनं वदेयुः । दिष्ट्यासि तात क्षेमस्वस्तिभ्यामागतः[1] । तदस्माद्-आत्मनो ऽपरोधाद्गराद्वा विषाद्वा परिमोचयस्व ददस्व नस्तात जीवितमिति । अथ खलु स वैद्यस्तान्पुत्रान्दुःखार्तान्दृष्ट्वा वेदनाभिभूतान्[2]दह्यतः[3] पृथिव्यां परिवेष्टमानान् ततो महा-भैषज्यं समुदानयित्वा वर्णसंपन्नं गन्धसंपन्नं रससंपन्नं च शिलायां पिष्ट्वा[4] तेषां पुत्राणां पानाय दद्यादेवं चैनान्वदेत् । पिबथ पुत्रा इदं महाभैषज्यं वर्णसंपन्नं गन्धसंपन्नं रससंपन्नम् । 5
इदं[5] यूयं पुत्रा महाभैषज्यं पीत्वा क्षिप्रमेवास्माद्गराद्वा विषाद्वा परिमोक्ष्यध्वे[6] स्वस्था भविष्य-थारोगाश्च । तत्र ये तस्य वैद्यस्य पुत्रा अविपरीतसंज्ञिनस्ते भैषज्यस्य वर्णं च दृष्ट्वा गन्धं चाघ्राय रसं चास्वाद्य क्षिप्रमेवाभ्यवहरेयुः । ते चाभ्यवहरन्तस्तस्मादाबाधात्सर्वेण[7] सर्वं विमुक्ता[8] भवेयुः । ये पुनस्तस्य पुत्रा विपरीतसंज्ञिनस्ते तं पितरमभिनन्देयुरेवं चैनं वदेयुः । दिष्ट्यासि[9] तात क्षेमस्वस्तिभ्यामागतो यस्त्वमस्माकं चिकित्सक[10] इति । ते चैवं वाचं भा- 10
षेरन्[11] तच्च भैषज्यमुपनामितं न पिबेयुः । तत्कस्य हेतोः । तथा हि तेषां तया विपरीत-संज्ञया तद्भैषज्यमुपनामितं[12] वर्णेनापि न रोचते गन्धेनापि रसेनापि न रोचते । अथ खलु स वैद्यपुरुष एवं चिन्तयेत् । इमे मम पुत्रा अनेन गरेण वा विषेण वा विपरीतसंज्ञिनः । ते

1) Cb. adds ऽसीति, K. adds इति.

2) भितूर्णा O. Cp. above, p. 320, l. 9.

3) Left out in Cb. K. O.

4) पोषापयित्वा O.

5) K. adds हि.

6) स्व Cb. थ K. O.

7) चाभ्यवहरंतन् in Cb. तं महाभैषज्यमभ्यवहरित्वा O. चावह° the rest.

8) Cb. K. add प्र. O. has परिमुच्येयुः.

9) दृष्ट्वा A. B. W. दृष्टो Cb.

10) चिकित्सित A. B. विचिकित्सक Cb. चिकित्सिक K. W.

11) भाषेरन् A. W. भाषेयुः K. O. भाषन्ते the others. भाषेयुः the more original reading.

12) Left out in Cb. K. W.

खल्विदं महा[1]भैषज्यं न पिबन्ति मां चाभिनन्दन्ति[2]। यन्न्वहमिमान्पुत्रानुपायकौशल्येनेदं भैषज्यं पाययेयमिति[3]। अथ खलु स वैद्यस्तान्पुत्राननुपायकौशल्येन तद्भैषज्यं पाययितुकाम एवं वदेत्। जीर्णो ऽहमस्मि कुलपुत्रा वृद्धो महल्लकः कालक्रिया च मे प्रत्युपस्थिता। मा च यूयं पुत्राः शोचिष्ट मा च क्लम[4]मापद्यध्वम्। इदं वो मया महा[5]भैषज्यमुपनीतं। सचेदा-
5 काङ्क्षध्वे तदेवं[6] भैषज्यं पिबध्वम्[7]। स एवं तान्पुत्राननुपायकौशल्येनानुशिष्यान्यतरं जनपद-प्रदेशं प्रक्रान्तः। तत्र गत्वा कालगतमात्मानं तेषां ग्लानानां पुत्राणामारोचयेत्। ते तस्मिन्समये ऽतीव शोचेयुरतीव परिदेवेयुः। यो ह्यस्माकं पिता नाथो जनको ऽनुकम्पकः सो ऽपि नामैकः कालगतस्ते ऽद्य वयमनाथाः संवृत्ताः। ते खल्वनाथभूतमात्मानं समनु-पश्यन्तो ऽशरणमात्मानं समनुपश्यन्तो ऽभीक्ष्णं शोकार्ता भवेयुस्तेषां च तयाभीक्ष्णं शोका-
10 र्ततया सा विपरीतसंज्ञाविपरीतसंज्ञा[8] भवेत्। यच्च तद्भैषज्यं वर्णगन्धरसोपेतं तद्वर्णगन्ध-रसोपेतमेवं[9] संजानीयुः[10]। ततस्तस्मिन्समये तद्भैषज्यमभ्यवहरेयुस्ते चाभ्यवहरन्तस्तस्मा-दाबाधात्परिमुक्ता भवेयुः[11]। अथ खलु स वैद्यस्तान्पुत्रानाबाधविमुक्तान्विदित्वा पुनरेवा-त्मानमुपदर्शयेत्। तत्किं मन्यध्वे कुलपुत्रा मा हैव तस्य वैद्यस्य तदुपायकौशल्यं कुर्वतः

---

1) महा in Cb. W. O. only.

2) Sic O. च नाभिनन्दन्ति the other MSS. contrary to what is said above.

3) पिबापयेत् O. and पिबापयेतु.

4) क्लाश A. B. W. क्लमा Cb. क्लाम K. O.

5) Left out in Cb. K.

6) तद् A. B. W. तदेव Cb. तदेतद् K.

7) थ Cb. पिबेयात O.

8) अविपरीतसंज्ञा left out in Cb. K.

9) तद्वर्णगन्धरसोपेतम् left out in Cb.

10) नीरन् A. W.

11) इति added in most MSS.

कश्चिन्मृषावादेन [1] संचोदयेत्। म्राह्कः [2]। नो हीदं भगवन्नो हीदं सुगत। म्राह। एवमेव कुलपुत्रा म्रहमप्य [3] प्रमेयासंख्येयकल्पकोटीनयुतशतसहस्राभिसंबुद्ध [4] इमामनुत्तरां सम्यक्संबोधिमपि तु खलु पुनः कुलपुत्रा म्रहमन्तरान्तर [5] मेवंरूपाण्युपायकौशल्यानि सत्त्वानामुपदर्शयामि विनयार्थं न च मे कश्चिदत्र स्थाने मृषावादो भवति॥

म्रथ खलु भगवानिमामेवार्थगतिं भूयस्या मात्रया संदर्शयमानस्तस्यां वेलायामिमा गाथा म्रभाषत॥ 5

म्रचिन्तिया कल्पसहस्रकोट्यो यासां प्रमाणं न कदाचि विद्यते।
प्राप्ता मया एष [6] तदाग्रबोधिर्धर्मं [7] च देशेम्यहु नित्यकालम्॥ १॥
समादपेमी [8] बहुबोधिसत्त्वान्बौधस्मि ज्ञानस्मि स्थपेमि चैव।
सत्त्वान कोटीनयुताननेकान्परि [9] पाचयामी बहुकल्पकोट्यः॥ २॥ 10
निर्वाणभूमिं चुपदर्शयामि विनयार्थ सत्त्वान वदाम्युपायम्।
न चापि निर्वाम्यहु तस्मि काले इहेव चो धर्मु प्रकाशयामि॥ ३॥
तत्रापि चात्मानमधिष्ठहामि [10] सर्वांश्च सत्त्वान तथैव [11] चाहम्।
विपरीतबुद्धी च नरा विमूढाः तत्रैव तिष्ठन्तु न पश्यिषू [12] माम्॥ ४॥

---

1) सं left out in A. W.
2) ह K.
3) प्य left out in K.
4) स्राणि सं A. W. स्राभिसं Cb. K.
5) रा A. Cb. W. र K.
6) एषा मया प्राप्त K.
7) र्धि धर्म A. Cb. W. र्धिः धर्म K.
8) The lengthening of मि not necessary.
9) युतान नित्यं A. W.
10) धिष्ठिहामि Cb. K.
11) सर्वांस्तथैव K.
12) तिष्ठन्न च पश्यषू K.

परिनिर्वृतं दृष्ट्व[1] ममात्मभावं धातूषु पूजां विविधां करोन्ति ।
मां च[2] अपश्यन्ति जनेन्ति तृष्णां ततोर्जुकं[3] चित्त प्रभोति[4] तेषाम् ॥ ५ ॥
ऋजू यदा ते मृदु मार्दवाश्च उत्सृष्टकामाश्च भवन्ति सत्त्वाः ।
ततो अहं श्रावकसंघ कृत्वा आत्मान[5] दर्शेम्यहु गृध्रकूटे ॥ ६ ॥
एवं च हं तेष वदामि पश्चात् इहैव नाहं तद आसि निर्वृतः[6] ।
उपायकौशल्य ममेति भिक्षवः पुनः पुनो भोम्यहु जीवलोके[7] ॥ ७ ॥
अन्येहि सत्त्वेहि पुरस्कृतो ऽहं तेषां प्रकाशेमि ममाग्रबोधिम् ।
यूयं च शब्दं न शृणोथ मह्यं अन्यत्र सो निर्वृतु लोकनाथः ॥ ८ ॥
पश्याम्यहं सत्त्व विहन्यमानां न चाहु दर्शेमि तदात्मभावम् ।
स्पृहेन्तु तावन्मम दर्शनस्य तृषितान[8] सद्धर्मु प्रकाशयिष्ये ॥ ९ ॥
सदाधिष्ठानं मम एतदीदृशं अचिन्तिया कल्पसहस्रकोट्यः ।
न च च्यवामी इतु गृध्रकूटात् अन्यासु शय्यासनकोटिभिश्च[9] ॥ १० ॥
यदापि सत्त्वा इम लोकधातुं पश्यन्ति कल्पेन्ति च दह्यमानम्[10] ।
तदापि चेदं मम बुद्धक्षेत्रं परिपूर्ण भोती[11] [12]मरुमानुषाणाम्[13] ॥ ११ ॥

---

1) दृष्ट्वा A. W. दृष्ट Cb. K.
2) च A. K. W. मा Cb. We conjecture चा अपश्यन्त (Nom. pl.).
3) तत्रो in all but K. W.
4) प्रभोन्ति A. W.
5) न A. B. Cb. W. नु K.
6) This quarter in left out in Cb.
7) जीर्ण Cb.
8) नु A. B. W. म Cb. न K.
9) कोटिषू च Cb.
10) नां A. नं Cb. ना K. W.
11) The lengthening not necessary.
12) नरु A. Cb. K. नर W.
13) षाणां Cb. K. षाभिः the rest, meant षेभिः.

क्रीडा रती तेष विचित्र भोति उद्यानप्रासादविमानकोट्यः ।
प्रतिमण्डितं रत्नमयेश्च पर्वतैः द्रुमैस्तथा पुष्पफलेरुपेतैः[1] ॥ १२ ॥
उपरिं[2] च देवा ऽभिहनन्ति तूर्यान् मन्दार[3]वर्षं च विसर्जयन्ति ।
ममैव अभ्योकिरि श्रावकांश्च ये चान्य बोधाविह प्रार्थयन्ता विदू[4] ॥ १३ ॥
एवं च मे क्षेत्रमिदं सदा स्थितं अन्ये च कल्पेन्तिमं[5] दह्यमानम् । 5
सुभैरवं पश्यिषु लोकधातुं उपद्रुतं[6] शोककताभिकीर्णम्[7] ॥ १४ ॥
न चापि मे नाम[8] शृणोन्ति जातु तथागतानां बहुकल्पकोटिभिः ।
धर्मस्य वा मह्य गणस्य चापि पापस्य कर्मस्य फलेवरूपम्[9] ॥ १५ ॥
यदा तु सत्त्वा मृदु मार्दवाश्च उत्पन्न[10] भोन्तीह मनुष्यलोके ।
उत्पन्नमात्राश्च शुभेन कर्मणा पश्यन्ति मां धर्मु प्रकाशयन्तम् ॥ १६ ॥ 10
न चाहु भाषामि कदाचि तेषां इमां क्रियामीदृशिकीमनन्ताम् ।
तेनो[11] अहं दृष्ट चिरस्य भोमि ततो पि[12] भाषामि सुदुर्लभा जिनाः ॥ १७ ॥

---

1) लेरुपेता A. W. लोपमेयैः Cb. लोपेतैः K.

2) रिं W.

3) मा A. W.

4) दु A.

5) मम A. W. स Cb. म K. i. e. Skr. कल्पयन्ति + इदं.

6) तां Cb. ता K.

7) र्णा K.

8) न चान्य ने स्मि A. न चान्ये न स्मि W. न चापि नामं Cb. न चापि नामं पि K.

9) मद्दे A. फले W. फले Cb. K.

10) उपपन्न A. W.

11) तेन W.

12) ऽस्य Cb. K.

एतादृशं ज्ञानबलं ममेदं प्रभास्वरं यस्य न कश्चिदन्तः ।
आयुश्च मे दीर्घमनन्तकल्पं[1] समुपार्जितं[2] पूर्व चरित्व चर्याम् ॥ १८ ॥
मा संशयं अत्र कुरुध पण्डिता विचिकित्सितं च जहथा अशेषम् ।
भूतां प्रभाषाम्यहमेत[3] वाचं मृषा मम[4] नैव कदाचि वाग्भवेत् ॥ १९ ॥
5 यथा हि[5] सो वैद्य उपायशिक्षितो विपरीतसंज्ञीन सुतान हेतोः ।
जीवन्तमात्मान मृतेति ब्रूयात् तं वैद्यु[6] विज्ञो न मृषेण चोदयेत् ॥ २० ॥
एमेव[7] हं लोकपिता स्वयंभूः चिकित्सकः सर्वप्रजान नाथः ।
विपरीतमूढांश्च विदित्व बालान् अनिर्वृतो निर्वृत दर्शयामि ॥ २१ ॥
किं कारणं मह्यमभीक्ष्णदर्शनात् विश्रब्ध भोन्ती अबुधा अजानकाः ।
10 विश्वस्त कामेषु प्रमत्त भोन्ती[8] प्रमादहेतोः प्रपतन्ति दुर्गतिम् ॥ २२ ॥
चरिं चरिं जानिय नित्यकालं वदामि सत्त्वान तथा तथाहम्[9] ।
कथं नु बोधावुपनामयेयं कथं[10] बुद्धधर्माण भवेयु लाभिनः[11] ॥ २३ ॥
॥ इत्यार्यसद्धर्मपुण्डरीके धर्मपर्याये तथागतायुष्प्रमाणपरिवर्तो नाम पञ्चदशमः[12] ॥

---

1) कल्पान् Cb. कल्पा K.
2) तं A. W. त Cb. तः K.
3) हु A. Cb. W. ह K.
4) ममो A. W. ममा Cb. मम K.
5) पि Cb.
6) द्य A. K. द्यु W.
7) एमेवाहं A. Cb. एवमेवाहं W.
8) The lengthening not necessary.
9) तथागतो हं A. W.
10) कथं A. Cb. W. कथ K.
11) MSS add इति.
12) षोडशमः Cb.

# XVI.

अस्मिन्खलु पुनस्तथागतायुष्प्रमाणनिर्देशे निर्दिश्यमाने ऽप्रमेयाणामसंख्येयानां सत्त्वानामर्थः कृतो ऽभूत्। अथ खलु भगवान्मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म। अस्मिन्खलु पुनरजित तथागतायुष्प्रमाणनिर्देशधर्मपर्याये[1] निर्दिश्यमाने ऽष्टषष्टिगङ्गानदीवालुकासमानां[2] बोधिसत्त्वकोटीनयुतशतसहस्राणामनुत्पत्तिकधर्मक्षान्तिरुत्पन्ना[3]। एभ्यः सहस्रगुणेन[4] येषां बोधिसत्त्वानां महासत्त्वानां धारणीप्रतिलम्भो ऽभूत्। अन्येषां च साहस्रिकलोकधातुपरमाणुरजःसमानां बोधिसत्त्वानां महासत्त्वानामिमं धर्मपर्यायं श्रुत्वासङ्गप्रतिभानताप्रतिलम्भो[5] ऽभूत्। अन्येषां च द्विसाहस्रिकलोकधातुपरमाणुरजःसमानां[6] बोधिसत्त्वानां महासत्त्वानां कोटीनयुतशतसहस्रपरिवर्ताया[7] [8] धारण्याः[9] प्रतिलम्भो ऽभूत्। अन्ये च त्रिसाहस्रिकलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वाविवर्त्यधर्मचक्रं प्रवर्तयामासुः। अन्ये च मध्यमलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वा विमलनिर्भासचक्रं प्रवर्तयामासुः। अन्ये च क्षुद्रकलोकधा-[10]

1) यो A. °ये Cb. K. °य W.

2) षष्टीनां K.

2) कोपमा A. W.

3) मुत्पन्ना A. रुत्पन्नः Cb. रुत्पन्ना W. ति उत्पन्नाः K.

4) स्र left out in A. W.

5) ता left out in K.

6) द्विसाहस्रिक in K. only, that agrees with Kumārajîva's version.

7) A. adds परिवार.

8) वर्तया W. वर्ताया K.

9) रण्या K.

10) क्षुडिका A. Cb. W. ड्रिक K. r. क्षुद्रक.

तुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वाष्ट[1]जातिबद्धा अभूवन्ननुत्तरायां सम्यक्संबोधौ । अन्ये चतुर्द्वीपकलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वा चतुर्जातिप्रतिबद्धा अभूवन्ननुत्तरायां सम्यक्संबोधौ । अन्ये च त्रिचतु[2]र्द्वीप[2]कलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वा त्रिजातिप्र-
5 तिबद्धा अभूवन्ननुत्तरायां सम्यक्संबोधौ । अन्ये च द्विचतु[2]र्द्वीप[3]कलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वा द्विजातिप्रतिबद्धा अभूवन्ननुत्तरायां सम्यक्संबोधौ । अन्ये चैकचतु[2]र्द्वीपकलोकधातुपरमाणुरजःसमा बोधिसत्त्वा महासत्त्वा इमं धर्मपर्यायं श्रुत्वैकजातिप्रतिबद्धा अभूवन्ननुत्तरायां सम्यक्संबोधौ । अष्टत्रिसाहस्रमहासाहस्रलोक-धातुपरमाणुरजःसमैश्च बोधिसत्त्वैर्महासत्त्वैरिमं धर्मपर्यायं श्रुत्वानुत्तरायां सम्यक्संबोधौ
10 चित्तान्युत्पादितानि ॥

अथ[4] समनन्तरनिर्दिष्टे भगवतै[5]षां बोधिसत्त्वानां महासत्त्वानां धर्माभिसमये प्रतिष्ठाने अथ तावदेवोपरिविहायसादन्तरीक्षान्मान्दारवमहामान्दारवाणां पुष्पाणां पुष्पवर्षमभिप्रवृष्टं तेषु च लोकधातुकोटीनयुतशतसहस्रेषु यानि तानि बुद्धकोटीनयुतशतसहस्रा-ण्यागत्य[6] रत्नवृक्षमूलेषु सिंहासनोपविष्टानि तानि[7] सर्वाणि चावकिरन्ति स्माभ्यवकिर-
15 न्ति स्माभिप्रकिरन्ति स्म । भगवन्तं च शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं तं च भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं परिनिर्वृतं सिंहासनोपविष्टमवकिरन्ति स्माभ्यवकिरन्ति स्माभिप्रकिरन्ति स्म । तं च सर्वावन्तं बोधिसत्त्वगणं तांश्चतस्रः पर्षदो ऽव-

1) त्रि for अष्ट in A. W.

2) चा A. W.

3) पि K.

4) K. adds खलु.

5) इमेषां Cb.

6) गत्वा Cb.

7) Left out in Cb.

किरन्ति स्माभ्यवकिरन्ति स्माभिप्रकिरन्ति स्म। दिव्यानि च[1] चन्दनागरुचूर्णान्यन्तरीक्षात्प्रवर्षन्ति स्मोपरिष्टाच्चान्तरीक्षे वैहायसं[2] महादुन्दुभयो ऽघट्टिताः प्रणेदुर्मनोज्ञमधुरगम्भीरनिर्घोषाः। दिव्यानि च[1] दूष्ययुगशतसहस्राण्युपरिष्टादन्तरीक्षात्प्रपतन्ति स्म। हारार्धहारमुक्ताहारमणिरत्नमहारत्नानि चोपरिष्टाद्वैहायसमन्तरीक्षे समन्तात्सर्वासु दिक्षु प्रलम्बन्ति स्म। समन्ताच्चानर्घप्राप्तस्य धूपस्य घटिकासहस्राणि रत्नमयानि स्वयमेव प्रविचरन्ति स्म। एकैकस्य च[1] तथागतस्य रत्नमयीं[3] छत्रावलीं[4] यावद्ब्रह्मलोकादुपरिवैहायसमन्तरीक्षे बोधिसत्त्वा महासत्त्वा धारयामासुः। अनेन पर्यायेण सर्वेषां तेषामप्रमेयाणामसंख्येयानां[5] बुद्धकोटीनयुतशतसहस्राणां ते बोधिसत्त्वा महासत्त्वा[6] रत्नमयीं छत्रावलीं यावद्ब्रह्मलोकादुपरिवैहायसमन्तरीक्षे धारयामासुः। पृथक्पृथग्गाथाभिनिर्हारैर्भूतैर्बुद्धस्तवैस्तांस्तथागतानभिष्टुवन्ति[8] स्म॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायामिमा गाथा अभाषत॥

आश्चर्य धर्मः[9] सुगतेन श्रावितो[10] न जातु अस्माभिः श्रुतश्च पूर्वम्।
महात्मता यादृशि नायकानां आयुष्प्रमाणं च यथा अनन्तम्॥१॥

---

1) Left out in Cb. K.

2) MSS °से.

3) नर्घयं प्राप्तस्य A. W. नर्घप्राप्तस्य Cb. नर्घयं प्राप्तस्य K.

4) यी ली Cb.

5) तेषां असंख्येयानां left out in A. W.

6) From रत्न° till °रीक्षे left out in Cb. K.

7) थक्केगा K.

8) भिसंस्तवन्ति K.

9) आश्चर्यप्राप्तो A.

10) देशितो Cb.

एवं च धर्मं श्रुणियान अद्य विभज्यमानं सुगतेन संमुखम्।
प्रीतिस्फुटाः[1] प्राणसहस्रकोट्यो[2] य श्रोरसा लोकविनायकस्य ॥ २ ॥
अविवर्तिया[3] केचि स्थिताग्रबोधौ केचि स्थिता धारणिये धरायाम्।
असङ्गप्रतिभाणि स्थिता केचित्[4] कोटीसहस्राय च धारणीये ॥ ३ ॥
5 परमाणु क्षेत्रस्य तथैव चान्ये ये प्रस्थिता उत्तमबुद्धज्ञाने।
केचिच्च ज्ञातीभि तथैव चाष्टभि जिना भविष्यन्ति अनन्तदर्शिनः ॥ ४ ॥
केचित्तु चत्वारि अतिक्रमित्वा केचित्त्रिभिश्चैव द्विभिश्च अन्ये।
लप्स्यन्ति बोधिं परमार्थदर्शिनः श्रुणित्व धर्मं इमु[5] नायकस्य ॥ ५ ॥
केचापि[6] एकाय स्थिताहित्व ज्ञात्या सर्वज्ञ भोष्यन्ति भवान्तरेण।
10 श्रुणित्व आयु इमु[7] नायकस्य एतादृशं लब्धु[8] फलं अनास्रवम् ॥ ६ ॥
अष्टान क्षेत्राण यथा रजो भवेत् एवाप्रमाणा गणनाय तत्तकाः[9]।
याः[10] सत्त्वकोट्यो हि श्रुणित्व धर्मं उत्पादयित्वा वरबोधिचित्तम् ॥ ७ ॥
एतादृशं कर्म कृतं महर्षिणा प्रकाशयन्तेनिम बुद्धभूमिम्[11]।
अनन्तकं यस्य[12] प्रमाणु नास्ति आकाशधातू च यथा ऽप्रमेयः ॥ ८ ॥

---

1) स्फुटः A.

2) प्राण K. प्राणि the rest.

3) या in K. only.

4) This *pāda* wholly corrupt. We propose to read स्थिता असङ्गप्रतिभानि (Loc. sing.) केचित्.

5) इम K.

6) चात्र Cb. K.

7) आयु इमु A. धर्म इम Cb. आयु इमि K. आयुं इमु W.

8) लब्धु A. i. e. लब्धा; लब्ध the rest.

9) तात्तथाः A. तातकाः W.

10) या in all MSS.

11) निममयबोधिं A. W. निम बुद्धभूमिं Cb. मिम बुद्धभूमिं K.

12) अनन्तकल्पस्य A. W.

मान्दारवाणां[1] च प्रवर्षि वर्ष बहुदेवपुत्राण सहस्रकोत्यः ।
शक्राश्च ब्रह्मा यथ गङ्गवालिका ये[2] आगता तेत्रसहस्रकोटिभिः ॥ ९ ॥
सुगन्धचूर्णानि च चन्दनस्य अगरुस्य चूर्णानि च मुञ्चमानाः[3] ।
चरन्ति आकाशि यथैव पक्षी अभ्योकिरन्ता विधिवज्जिनेन्द्रान् ॥ १० ॥
उपरिं च[4] वैहायसु[5] दुन्दुभीयो निनादयन्तो मधुरा अघट्टिताः । 5
दिव्यान दूष्याण[6] सहस्रकोत्यः क्षिपन्ति भ्रामेन्ति[7] च नायकानाम् ॥ ११ ॥
अनर्घमूल्यस्य च धूपनस्य रत्नामयी घटिकसहस्रकोत्यः ।
स्वयं समन्तेन विचेरु तत्र पूजार्थ लोकाधिपतिस्य तायिनः ॥ १२ ॥
उच्चान्महन्तान्[8] रतनामयांश्च[9] छत्राण कोटीनयुताननन्तान्[10] ।
धारन्तिमे पण्डित बोधिसत्त्वाः अवतंसकान्यावत ब्रह्मलोकात् ॥ १३ ॥ 10
सवैजयन्तांश्च सुदर्शनीयान् ध्वजांश्च ओरापयि नायकानाम्[11] ।
गाथासहस्रैश्च अभिष्टुवन्ति[12] प्रहृष्टचित्ताः सुगतस्य पुत्राः ॥ १४ ॥

---

1) म K.
2) ये in all MSS.
3) ना A. W
4) उपरि च A. W. उपरि Cb. उपरिंश्च K
5) स A. W. मु Cb. सि K.
6) पष्याण Cb.
7) म्य A. म Cb. मे K. ने W.
8) MSS. महान्ता.
9) यान्तं A.
10) तां A. तान् Cb K. W.
11) ध्वजस्य आरोपित नायकेभ्यः Cb.
12) अभिस्तवन्ति K. more original.

एतादृशाश्चर्यविशिष्ट श्रद्भुता विचित्र दर्शयित्तमि श्रद्य नायको:[1]।
श्रायुष्प्रमाणस्य निदर्शनेन प्रामोद्यलब्धा इमि सर्वसत्त्वाः[2]॥ १५॥
विपुलो ऽद्य श्रर्थो दशसू दिशासु घोषश्च श्रभ्युद्गतु नायकानाम्।
संतर्पिताः प्राण[3]सहस्रकोट्यः कुशलेन बोधाय समन्विताश्च[4]॥ १६॥

5 श्रथ खलु भगवान्मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म।

यैरजितास्मिंस्तथागतायुष्प्रमाणनिर्देश[5]धर्मपर्याये निर्दिश्यमाने[6] सत्त्वै[7]रेकचित्तोत्पा-
दिकाप्य[8]धिमुक्तिरुत्पादिताभिश्रद्दधानता[9] वा कृता कियत्ते कुलपुत्रा वा कुलदुहितरो
वा पुण्यं प्रसवन्तीति[10]। तच्छृणु साधु च सुष्ठु च मनसिकुरु। भाषिष्ये ऽहं[11] यावत्पुण्यं[12]
प्रसवन्तीति। तद्यथापि नामाजित कश्चिदेव कुलपुत्रो वा कुलदुहिता वानुत्तरां सम्य-
10 क्संबोधिमभिकाङ्क्षमाणः पञ्चसु पारमितास्वष्टौ कल्पकोटीनयुतशतसहस्राणि चरेत्।
तद्यथा दानपारमितायां शीलपारमितायां क्षान्तिपारमितायां वीर्यपारमितायां ध्यानपार-

1) का K.

2) बोधिसत्त्वाः Cb.

3) प्राण K प्राणि the other.

4) MSS. add इति.

5) शे Cb. K.

6) भाष्यमाने Cb.

7) सर्वे A. W.

8) दिताप्य A. दिकोव्य Cb. दकोप्य K. दिकाप्य W.

9) ता वा left out in Cb.

10) प्रशविष्यन्तीति K.

11) भाषिष्ये ऽहं in Cb. only.

12) यावंत A यावत् Cb. यावत्तत् K. यावं W. Here the break in O at an end.

मितायां विरहितः[1] प्रज्ञापारमितया[2]। येन चाजित[3] कुलपुत्रेण वा कुलदुहित्रा वेमं तथा-[4]
गताग्गुणप्रमाणनिर्देशं धर्मपर्यायं श्रुत्वैकचित्तोत्पादिकाप्यधिमुक्तिरुत्पादिताभिश्रद्दधानता[5]
वा कृता। अस्य पुण्याभिसंस्कारस्य कुशलाभिसंस्कारस्यासौ[6] पौर्वकः[7] पुण्याभिसंस्कारः
कुशलाभिसंस्कारः पञ्चपारमिताप्रतिसंयुक्तो ऽष्टकल्पकोटीनयुतशतसहस्रपरिनिष्पन्नः
शततमीमपि[8] कलां नोपयाति[9] सहस्रतमीमपि[8] शतसहस्रतमीमपि[10] कोटीशतसहस्रतमीमपि[8] 5
कोटीनयुतसहस्रतमीमपि[11] कोटीनयुतशतसहस्रतमीमपि[12] कलां[13] नोपयाति संख्यामपि
कलामपि[14] गणनामप्युपमामप्युपनिषामपि[15] न क्षमते। एवंरूपेणाजित पुण्याभिसंस्कारेण
समन्वागतः कुलपुत्रो वा कुलदुहिता वा विवर्तते ऽनुत्तरायाः सम्यक्संबोधेरिति
नैतत्स्थानं विद्यते॥

---

1) पारमिविरहितः Cb.

2) तायां A. Cb. W तया K.

3) च left out in K.

4) ताय वा इ O.

5) दृढना O.

6) कुशलमूला Cb.

7) पू K. O.

8) मा K. रिमा O.

9) नोपैति Cb. K. O.

10) From शत° till नोपयाति left out in Cb. and from कोटी till नोपाति in O.

11) नयुत left out in W.

12) This compound left out in K.

13) In K. W. only.

14) कलान्नोपैति O. left out in W.

15) उपनिशमपि K. left out in Cb. उपनिषामपि नोपैति O. Other MSS उपनिषदमपि. One MSS. has उपनिसामपि उपनिषदमपि.

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

पञ्च पारमिता[1] पञ्च समादापेह वर्तते ।
[2]इदं ज्ञानं गवेषन्तो बुद्धज्ञानमनुत्तरम् ॥ १७ ॥
कल्पकोटीसहस्राणि[3] अष्टौ पूर्णानि युज्यते ।
5 दानं ददन्तो बुद्धेभ्यः श्रावकेभ्यः पुनः पुनः ॥ १८ ॥
प्रत्येकबुद्धांस्तर्पेन्तो बोधिसत्त्वान कोटियः ।
खाद्यभोज्यान्नपानेहि[4] वस्त्रशय्यासनेहि[4] च ॥ १९ ॥
प्रतिश्रयान्विहारांश्च चन्दनस्येह[5] कारणात् ।
आरामान्रमणीयांश्च चङ्क्रमस्थानशोभितान् ॥ २० ॥
10 [6]एतादृशं ददित्वान[7] दानं चित्रं बहुविधम् ।
कल्पकोटीसहस्राणि[8] दत्त्वा बोधाय नामयेत् ॥ २१ ॥
पुनश्च शीलं रक्षेत शुद्धं संबुद्धवर्णितम् ।
अखण्डं संस्तुतं विज्ञैर्बुद्धज्ञानस्य[9] कारणात्[10] ॥ २२ ॥
पुनश्च क्षान्तिं भावेत[11] दान्तभूमौ प्रतिष्ठितः ।
15 धृतिमान्स्मृतिमांश्चैव परिभाषाः क्षमे बहूः ॥ २३ ॥

---

1) ता A. W.
2) मं Cb. K.
3) टि K.
4) नेन Cb. K. O.
5) All चन्द्.
6) The 21-st and 22-nd verses are left out in A.
7) त्वेह W.
8) टि W. O.
9) विज्ञ K. W. विज्ञै Cb विज्ञैर्बु O.
10) कारणम् W. O.
11) वेया O.

ये चोपलम्भिकाः सत्त्वा अधिमाने प्रतिष्ठिताः ।
कृत्स्नं च सर्वेतेषां बुद्धज्ञानस्य कारणात्[1] ॥ २४ ॥
नित्योद्युक्तश्च वीर्यस्मिन् अभियुक्तो दृढस्मृतिः ।
अनन्यमनसंकल्पो[2] भवेया कल्पकोटियः[3] ॥ २५ ॥
अरण्यवासि[4] तिष्ठन्तो[5] चङ्क्रमे अभिरुह्य च ।
स्त्यान[6] मिद्धं च वर्जित्वा कल्पकोट्यो हि[7] यश्चरेत् ॥ २६ ॥ 5
यश्च ध्यायी महाध्यायी ध्यानारामः[8] समाहितः ।
कल्पकोट्यः स्थितो ध्यायेत्सहस्राण्यष्टनूनकाः[8] ॥ २७ ॥
तेन ध्यानेन सो वीरः[9] प्रार्थयेद्बोधिमुत्तमाम् ।
अहं स्यामिति सर्वज्ञो[10] ध्यानपारमितां[11] गतः ॥ २८ ॥ 10
यच्च पुण्यं भवेत्तेषां निषेवित्वा[12] इमां क्रियाम् ।
कल्पकोटीसहस्राणि ये पूर्वं परिकीर्तिताः ॥ २९ ॥

---

1) कारणाम् O.

2) ल्पा A. ल्पो Cb. K W.

3) यो A. Cb. यः K. या W. भिः O.

4) से Cb. K. O.

5) न्तु O.

6) स्तान O.

7) टीय O.

8) All but O. स्थान and कान्.

9) वीरो A. K. W. धीरो Cb.

10) सर्वज्ञो विप्र सो अस्या O.

11) ता A. Cb. W. तां K.

12) All but O. निश्रयि.

आयुं च मम यो श्रुत्वा[1] स्त्री वापि पुरुषो ऽपि वा।
एकक्षणं पि श्रद्दाति[2] इदं पुण्यमनन्तकम् ॥ ३० ॥
विचिकित्सां च वर्जित्वा इञ्जिता मन्यितानि[3] च।
अधिमुच्येन्मुहूर्तं पि फलं तस्येदमीदृशम् ॥ ३१ ॥
5 बोधिसत्त्वाश्च ये भोन्ति चरिताः कल्पकोटियः।
न ते त्रसन्ति श्रुत्वेदं[4] मम आयुरचिन्तियम्[5] ॥ ३२ ॥
मूर्धेन च नमस्यन्ति अहमप्येदृशो भवेत्।
अनागतस्मिन्नध्वानि[6] तारेयं[7] प्राणिकोटियः ॥ ३३ ॥
यथा शाक्यमुनिर्नाथः शाक्यसिंहो महामुनिः[8]।
10 बोधिमण्डे निषीदित्वा[9] सिंहनादमिदं[10] नदेत् ॥ ३४ ॥
अहमप्यनागते ऽध्वानि[11] सत्कृतः सर्वदेहिनाम्।
बोधिमण्डे निषीदित्वा[12] आयुं[13] देशेष्यमीदृशम्[14] ॥ ३५ ॥

---

1) आयुं च श्रुत्वा च मे A. आयुषं गत्वा मम Cb. आयुश्च मम यो श्रुत्वा K. आयुश्च श्रुत्वा W.

2) ति A. W.

3) इङ्गीतानिपितानि A. इंञ्जितामन्यितानि Cb. इञ्जितान्मन्यितानि K. इञ्जितान्यपितानि W.

4) श्रुत्वेदं A. W. श्रत्वेमं Cb. O. श्रुत्वेमां K.

5) आयुम A. K. W. आयुर Cb.

6) °स्मि अध्याने O.

7) All but O. तारयेत्.

8) नरोत्तमः Cb.

9) सी Cb. W.

10) Rather इमं. O. has दं नदी इमम् preferable, नदी is appropriate, नदेत् is not.

11) ने Cb. K.

12) सी A. Cb. W.

13) यु A. Cb. W. O. युं K.

14) निर्देशयमो O.

अध्याशयेन संपन्नाः श्रुताधाराश्च ये नराः ।
संधाभाष्यं विजानन्ति काङ्क्षा[1] तेषां न विद्यते ॥ ३६ ॥

पुनरपरमजित य[2] इमं तथागतायुष्प्रमाणनिर्देशं धर्मपर्यायं श्रुत्वावतरेद[3]धिमुच्येता[4]वगाहेतावबुध्येत सो ऽस्मादप्रमेयतरं पुण्याभिसंस्कारं प्रसवेद्बुद्धज्ञानसंवर्तनीयम् । कः पुनर्वादो य इममेवंरूपं धर्मपर्यायं शृणुयाच्छ्रावयेद्वाचयेद्धारयेद्वा[5] लिखेद्वा लिखापयेद्वा[6] पुस्तकगतं वा सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेत्सत्कारयेद्वा[7] पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तैलप्रदीपैर्वा[8] घृतप्रदीपैर्वा[8] गन्धतैलप्रदीपैर्वा[9] बहुतरं पुण्याभिसंस्कारं प्रसवेद्बुद्धज्ञानसंवर्तनीयम् ॥

यदा चाजित स कुलपुत्रो वा कुलदुहिता वेमं तथागतायुष्प्रमाणनिर्देशं धर्मपर्यायं श्रुत्वाध्याशयेनाधिमुच्यते[10] तदा तस्येदमध्याशयलक्षणं वेदितव्यं यदुत[11] गृध्रकूटपर्वतगतं[12] मां धर्मं निर्देशयन्तं[13] द्रक्ष्यति बोधिसत्त्वगणपरिवृतं बोधिसत्त्वगणपुरस्कृतं श्रावकसंघमध्यगतम् । इदं च मे बुद्धक्षेत्रं सहां लोकधातुं वैडूर्यमयीं समप्रस्तरां द्रक्ष्यति सुवर्णसूत्राष्टापदविनद्धां रत्नवृक्षैर्विचित्रिताम् । कूटागारपरिभोगेषु[14] चात्र बोधिसत्त्वान्निवसतो द्रक्ष्यति ।

1) कान्ता A. कांक्षे Cb. काङ्क्ष O. कान्ता K. कांक्षान् W.
2) Left out in K.
3) अवतरेत् left out in A.
4) अधिमुच्येत left out in K. O.
5) द्धारये left out in K. Added धारापयेद्वा in O.
6) Left out in Cb.
7) O. has सत्कारापयेद्वा.
8) प्रद्योते Cb.
9) प्रदीपैभिर्वा O. left out in Cb.
10) धिमोक्षते Cb. धिमोद्यते K. धिमुच्यति O.
11) यदिदं Cb. K. O.
12) पर्वत left out in A. W.
13) Sic O. मानं the others.
14) भोगेषु Cb. K. O. चात्र left out in Cb. K. but चेह सहे लोकधातौ O.

इदमजिताध्याशयेनाधिमुक्तस्य कुलपुत्रस्य वा कुलदुहितुर्वाध्याशयलक्षणं वेदितव्यम्[1]। अपि तु खलु पुनरजित तानप्यहमध्याशयाधिमुक्तान्कुलपुत्रान्वदामि ये[2] तथागतस्य परिनिर्वृतस्येमं धर्मपर्यायं श्रुत्वा न प्रतिक्षेप्स्यन्त्युत्तरि चाभ्यनुमोदयिष्यन्ति[3]। कः पुनर्वादो ये धारयिष्यन्ति वाचयिष्यन्ति[4]। [5]ततस्तथागतं सो ऽंसेन परिहरति[6] य इमं धर्मपर्यायं पुस्तकगतं कृत्वांसेन परिहरति[6]। न मे तेनाजित कुलपुत्रेण वा कुलदुहित्रा वा स्तूपाः कर्तव्या न विहाराः कर्तव्या न भिक्षुसंघाय ग्लानप्रत्ययभैषज्यपरिष्कारास्तेनानुप्रदेया[7] भवन्ति। [8]तत्कस्य हेतोः। कृता मे तेनाजित[9] कुलपुत्रेण वा कुलदुहित्रा वा[10] शरीरेषु शरीरपूजा सप्तरत्नमयाश्च स्तूपाः कारिता यावद्ब्रह्मलोकमुच्चैस्त्वेनानुपूर्वपरिणाहेन सच्छत्रपरिग्रहाः सवैजयन्तीका घण्टासमुद्रानुरताः[11] तेषां च शरीरस्तूपानां विविधाः सत्काराः कृता नानाविधैर्[12]दिव्यैर्मानुष्यकैः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीभिर्विविधमधुरमनोज्ञपटुपटहदुन्दुभिमहादुन्दुभि[13]भिर्वाद्यताडनिनादनिर्घोषशब्दैर्नानाविधैश्च गीतनृत्यलास्यप्रकारैर्बहुभिरपरिमितैर्बहुप्रमेयाणि कल्पकोटीनयुतशतसहस्राणि सत्कारः कृतो भवति। इमं धर्मपर्यायं मम परिनिर्वृतस्य धारयित्वा वाचयित्वा

---

1) संजानीयात् K. संजानेयासि O.

2) यस्त K.

3) प्रतिनिक्षिपेदुत्तरि चाभ्यनुमोदेत् K.

4) यो धारयेद्वाचयेद्वा K.

5) From तत° till कृत्वा left out in Cb., leaving तथागतं.

6) परिवहति K.

7) A. W. add सत्कारायां.

8) From तत्कस्य till सत्कारा left out in A. W.

9) अजित तेन K.

10) All but O. रे.  The text in O. here more prolix.

11) O. has छत्रध्वजपताकावैजयन्तीशतसहस्रैभिः समलंकृता सघंटासमुद्रारणिताानि. A verb अनुरणति occurs Mahāvastu II, 272.

12) विधिभिर्दि A. W. विधेभिर्दि O.

13) महादुन्दुभि left out in A. Cb. The reading in O. very different.

लिखित्वा प्रकाशयित्वा विहारा अपि तेनाजित कृता भवन्ति विपुला विस्तीर्णाः प्रगृही-[1]
ताश्च लोहितचन्दनमया द्वात्रिंशत्प्रासादा अष्टतला भिक्षुसहस्रावासा आरामपुष्पोपशो-
भिताश्चङ्क्रमवनोपेताः शयनासनोपस्तब्धाः[2] खाद्यभोज्यान्नपानग्लानप्रत्ययभैषज्यपरिष्कारप-
रिपूर्णाः सर्वसुखोपधानप्रतिमण्डिताः। ते च बहुप्रमेया यदुत[3] शतं वा सहस्रं वा शतस-
हस्रं वा कोटी वा[4] कोटीशतं वा कोटीसहस्रं वा कोटीशतसहस्रं वा कोटीनयुतशतसहस्रं 5
वा[4]। ते च[5] मम संमुखं श्रावकसंघस्य निर्यातितास्ते च मया परिभुक्ता वेदितव्याः। य इमं
धर्मपर्यायं तथागतस्य परिनिर्वृतस्य धारयेद्वा वाचयेद्वा देशयेद्वा लिखेद्वा लेखयेद्वा तदनेना-
हमजित पर्यायेणैवं वदामि। न मे तेन परिनिर्वृतस्य धातुस्तूपाः कारयितव्या न संघपू-
जा। कः पुनर्वादो ऽजित य इमं धर्मपर्यायं धारयन्दानेन वा संपादयेच्छीलेन वा क्षान्त्या वा
वीर्येण वा ध्यानेन वा प्रज्ञया वा संपादयेद्बहुतरं पुण्याभिसंस्कारं स कुलपुत्रो वा कुल- 10
दुहिता वा प्रसवेद्बुद्धज्ञानसंवर्तनीयमप्रमेयमसंख्येयमपर्यन्तम्। तद्यथापि नामाजिताका-
शधातुरपर्यन्तः पूर्वदक्षिणपश्चिमोत्तराधरोर्ध्वासु दिक्षु विदिक्ष्वेवमप्रमेयासंख्येयान्स कुलपु-
त्रो वा कुलदुहिता वा पुण्याभिसंस्कारान्प्रसवेद्बुद्धज्ञानसंवर्तनीयान्य इमं धर्मपर्यायं
धारयेद्वा वाचयेद्वा देशयेद्वा[6] लिखेद्वा लिखापयेद्वा। तथागतचैत्यसत्कारार्थं चाभियुक्तो
भवेत्तथागतश्रावकाणां च वर्णं भाषेत[7] बोधिसत्त्वानां च महासत्त्वानां गुणकोटीनयुतशत- 15
सहस्राणि परिकीर्तयेत्परेषां च संप्रकाशयेत्क्षान्त्या च संपादयेच्छीलवांश्च भवेत्कल्याण-
धर्मः सुखसंवासः क्षान्तश्च भवेद्दान्तश्च भवेदनभ्यसूयकश्चापगतक्रोधमनस्कारो ऽव्यापन्नम-

---

1) प्रति A. W.

2) शय्या O.

3) Left out in Cb. O.

4) कोटीर्वा Cb. कोटिर्वा K. कोट्यो वा O., with the other numbers also in plural.

5) O. adds विहारा.

6) Left out in Cb. K.

7) भाषेद्वा K.

नस्कारः स्मृतिमांश्च स्थामवांश्च भवेद्धीर्यवांश्च[1] नित्याभियुक्तश्च भवेद्बुद्धधर्मपर्येष्टा[2] ध्यायी च भवेत्प्रतिसंलयनगुरुकः[3] प्रतिसंलयनबहुलश्च[4] प्रश्नप्रभेदकुशलश्च भवेत्प्रश्नकोटीनयुतशतसहस्राणां विसर्जयिता । यस्य कस्यचिदजित बोधिसत्त्वस्य महासत्त्वस्येमं धर्मपर्यायं तथागतस्य परिनिर्वृतस्य धारयत इमे[5] एवंरूपा गुणा भवेयुर्ये मया परिकीर्तिताः । सो 5 ऽजित कुलपुत्रो वा कुलदुहिता वैवं वेदितव्यो बोधिमण्डसंप्रस्थितो ऽयं कुलपुत्रो वा कुलदुहिता वा बोधिमभिसंबोद्धुं[6] बोधिवृक्षमूलं गच्छति । यत्र चाजित स कुलपुत्रो वा कुलदुहिता वा तिष्ठेद्वा निषीदेद्वा चङ्क्रमेद्वा तत्राजित तथागतमुद्दिश्य चैत्यं कर्तव्यं तथागतस्तूपो ऽयमिति च स[7] वक्तव्यः सदेवकेन लोकेनेति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

10 पुण्यस्कन्धो अपर्यन्तो वर्णितो मे पुनः पुनः ।
य इदं[8] धारयेत्सूत्रं निर्वृते नरनायके ॥ ३७ ॥
पूजाश्च मे कृतास्तेन धातुस्तूपाश्च[9] कारिताः ।
रत्नामया[10] विचित्राश्च दर्शनीयाः सुशोभनाः ॥ ३८ ॥
ब्रह्मलोकसमा उच्चा[11] छत्रावडिभिरन्विताः[12] ।
15 परिणाहवन्तः श्रीमन्तो वैजयन्तीसमन्विताः[13] ॥ ३९ ॥

---

1) K. adds भवेन्.
2) ष्टी A. Cb. ष्ट K. ष्टां W.
3) संलयन Cb. Other MSS have संलीन; the reading of O. unknown.
4) संलीन K.
5) इममेवंरूपा A. Cb. W. इमेवंरूपा K.
6) संबुध्यनाय Cb. संबुध्यमानाय K. The reading of Cb. preferable.
7) सं K.
8) मं Cb. K.
9) तु K.
10) त्न A. W.
11) For उच्चाः.
12) वडि A. W. मंडि Cb. वडिसमन्विताः K.
13) न्ति Cb. K.

पट्टघण्टारणात्तश्च[1] पट्टामोपशोभिताः ।
वातेरितास्तथा घण्टा शोभन्ति[2] जिनधातुषु ॥ ४० ॥
पूजा च विपुला तेषां पुष्पगन्धविलेपनैः ।
कृता वाद्यैश्च वस्त्रैश्च दुन्दुभीभिः पुनः पुनः ॥ ४१ ॥
मधुरा वाद्यभाण्डा च वादिता तेषु धातुषु । 5
गन्धतैलप्रदीपाश्च[3] दत्तास्ते पि[4] समन्ततः ॥ ४२ ॥
य[5] इदं धारयेत्सूत्रं नयकालि[6] च देशयेत् ।
ईदृशी मे कृता तेन विविधा पूजनन्तिका[7] ॥ ४३ ॥
यथा विहारकोट्यो पि[8] बहुवश्चन्दनाकारिताः[9] ।
द्वात्रिंशती च प्रासादा उच्चैस्त्वेनाष्टवत्तलाः ॥ ४४ ॥ 10
शय्यासनै[10]रुपस्तब्धाः खाद्यभोज्यैः समन्विताः ।
प्रवेणी[11] प्रणीत प्रज्ञप्ता[11] आवासाश्च सक्रमशः ॥ ४५ ॥
आरामाश्चङ्क्रमा दत्ताः पुष्पारामोपशोभिताः ।
बहुउच्छ्रद[12]काश्चैव बहुरूपविचित्रि[13]ताः ॥ ४६ ॥

---

1) रणात्तर A. रणातश्च Cb. रणात्तो च K. W.
2) न्ते Cb.
3) पैश्च Cb.
4) MSS त्कि.
5) मं A. K. W. मां Cb.
6) ल Cb. ले K.
7) ज्ञा Cb.
8) MSS. त्कि.
9) Corrupt; probably to r. चन्दनामयाः or चन्दनाकृताः
10) MSS. शयना. प्रज्ञ A.
11) प्रवणा A. W. पवना Cb. K.
12) का A.
13) बहुवोच्छेदका A. W. बहुउच्छेदना Cb.

संघस्य विविधा पूजा कृता मे तेन[1] समुखम्।
य इदं[2] धारयेत्सूत्रं निर्वृतस्मिन्विनायके[3] ॥ ४७ ॥
यधिमुक्तिसारो यो स्याद्[4]तो बक्कतरं किं मः।
पुण्यं लभेत यो एतत्[5] सूत्रं वाचेल्लिखेत वा ॥ ४८ ॥
5 लिखापयेन्नरः[6] कश्चित्सुनिरुक्तं च पुस्तके।
पुस्तकं पूजयेत्तञ्च[7] गन्धमाल्यविलेपनैः ॥ ४९ ॥
दीपं च दद्याद्यो नित्यं[8] गन्धतैलस्य पूरितम्[9]।
जात्युत्पलातिमुक्तैश्च[10] प्रकरैश्चम्पकस्य च ॥ ५० ॥
कुर्यादेतादृशीं[11] पूजां पुस्तकेषु च यो नरः[12]।
10 बहु प्रसवते पुण्यं प्रमाणं यस्य नो भवेत् ॥ ५१ ॥
यथैवाकाशधातौ हि प्रमाणं नोपलभ्यते।
दिशासु दशसु[13] नित्यं पुण्यस्कन्धो ऽयमीदृशः ॥ ५२ ॥

---

1) MSS. तेहि.
2) मं A. K. W. See vs 56 and 57. मां Cb.
3) स्मि वि A. Cb. W. स्मिन्वि K.
4) यः स्याद्त्तो A. यो च स्यात् यत्तो Cb. यो चा स्याद्तो K.
5) एतत् Cb. एतं the rest.
6) लेखयेद्वा नरः A. W.
7) पूजयेतं च A. W. °येत्तञ्च Cb. °येत्तश्च K.
8) दीपं च नित्यं यो दद्या A. W. °यो दद्याङ्ग° K.
9) तां A. W.
10) त्पलैश्च मु° A. K. W. त्पलात्मु° Cb.
11) कुर्याञ्च एता Cb.
12) यो ततः A. Cb.
13) मु A. W.

कः पुनर्वादो यश्च स्यात्क्षान्तो दान्तः समाहितः ।
शीलवांश्चैव ध्यायी च प्रतिसंलानगोचरः[1] ॥ ५३ ॥
अक्रोधनो अपिशुनश्चैत्यस्मिन्गौरवे[2] स्थितः ।
भिक्षूणां प्रणतो नित्यं नाभिमानी न चालसः ॥ ५४ ॥
प्रज्ञावांश्चैव धीरश्च प्रश्नं पृष्टो न कुप्यति । 5
अनुलोमं[3] च देशेति कृपाबुद्धी[4] च प्राणिषु[5] ॥ ५५ ॥
य[6] ईदृशो भवेत्कश्चिन्मः सूत्रं धारयेदिदम्[7] ।
न तस्य पुण्यस्कन्धस्य प्रमाणमुपलभ्यते ॥ ५६ ॥
यदि कश्चिन्नरः पश्येदीदृशं धर्मभाणकम् ।
धारयन्तमिदं सूत्रं कुर्याद्धितस्य सत्क्रियाम्[8] ॥ ५७ ॥ 10
दिव्यैश्च पुष्पैस्तथ ओकिरेत दिव्यैश्च वस्त्रैरभिच्छादयेत ।
मूर्धेन वन्दित्व च तस्य पादौ तथागतो अयं जनयेत संज्ञाम् ॥ ५८ ॥
दृष्ट्वा च तं चिन्तयि तस्मि[9] काले गमिष्यते[10] एष द्रुमस्य मूलम्[11] ।
बुध्यिष्यते[12] बोधिमनुत्तरां शिवां हिताय लोकस्य सदेवकस्य ॥ ५९ ॥

---

1) MSS. लो. Cp. Pāli *patisallāna.*
2) नश्चेत्येस्मिं A. Cb. W. नो चैत्यस्मिं K.
3) मश्च K.
4) कृपा A. K. W. कृता Cb.
5) प्री A. Cb. W. प्रा K.
6) यदी Cb. K. W.
7) दिदं A. Cb. W. दिमं K.
8) सं क्रि A. Cb. सन्क्रि K. स क्रि W.
9) तस्मिं K.
10) तो Cb. Better ति.
11) लं Cb. ले the others.
12) बुद्धिस्य A. W.

यस्मिंश्च सो चङ्क्रमि तादृशो विदु[1]: तिष्ठेत वा यत्र निषीदयेद्वा ।

शय्यां च कल्पेय[2] कर्हिचि धीरो भाषत्तु गाथां पि तु एक सूत्रात्[3] ॥ ६० ॥

यस्मिंश्च स्तूपं[4] पुरुषोत्तमस्य कारापयेच्चित्र सुदर्शनीयम् ।

उद्दिश्य बुद्धं भगवन्त नायकं पूजां च चित्रां तहि कारयेत्तथा ॥ ६१ ॥

5 मया स भुक्तः पृथिवीप्रदेशो मया स्वयं चङ्क्रमितं च तत्र ।

तत्रोपविष्टो ग्रहमेव चास्यां[5] यत्र स्थितः सो[6] भवि बुद्धपुत्रः[7] ॥ ६२ ॥

॥ इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये पुण्यपर्यायपरिवर्तो नाम षोडशमः[8] ॥

---

1) दू A. K. W. डुः Cb.

2) थं K.

3) सूत्रां A. W. सूत्रं K.

4) तस्मिंश्च स्तूपां A. K. W.

5) च स्यां A. W. चास्य Cb. च स्याद् K.

6) वे A. W.

7) °त्र इति MSS.

8) सप्तदशमः Cb.

—

# XVII.

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। यो भगवन्निमं धर्मपर्यायं देश्यमानं श्रुत्वानुमोदेत्[1]कुलपुत्रो वा कुलदुहिता वा कियत्तं[2] स भगवन्कुलपुत्रो वा कुलदुहिता वा पुण्यं प्रसवेदिति[3]॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायामिमां गाथामभाषत॥

यो निर्वृते महावीरे शृणुयात्सूत्रमीदृशम्। 5

श्रुत्वा चाभ्यनुमोदेया कियत्तं कुशलं भवेत्[5]॥ १॥

अथ खलु भगवान्मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्। यः कश्चिदजित कुलपुत्रो वा कुलदुहिता वा तथागतस्य परिनिर्वृतस्येमं धर्मपर्यायं देश्यमानं संप्रकाश्यमानं शृणुयाद्भिक्षुर्वा भिक्षुणी वोपासको वोपासिका वा विज्ञपुरुषो वा कुमारको वा कुमारिका वा श्रुत्वा चाभ्यनुमोदेत्[6]। स चेत्ततो[7] धर्मश्रवणादुत्थाय प्रक्रामेत्स च विहारगतो वा गृहगतो वारण्यगतो वा वीथीगतो वा ग्रामगतो वा जनपदगतो वा तान्हेतूंस्तानि कारणानि तं धर्मं यथाश्रुतं[8] यथोद्गृहीतं यथाबलमपरस्य सत्त्वस्याचक्षीत[10] मातुर्वा पितुर्वा 10

---

1) मोदयेत Cb.

2) Erroneously for कियत्.

3) प्रसवतीति Cb प्रसविष्यतीति K.

4) MSS. देयात्.

5) भवेदिति Cb. K.

6) मोदयेत् Cb. मोदेत् K.

7) स च ततो Cb. K.

8) Left out in Cb.

9) MSS. but K. श्रुत.

10) क्षेत् K.

ज्ञातेर्वा संमोदितस्य[1] वान्यस्य वा संस्तुतस्य[2] कस्यचित्सो ऽपि यदि सुबानुमोदेत्[3] अनुमोद्य च पुनरन्यस्मा[4] आचक्षीत[5]। सो ऽपि यदि[6] सुबानुमोदेत अनुमोद्य[7] च सो ऽप्यपरस्मा[4] आचक्षीत[5]। सो ऽपि तं सुबानुमोदेत्[8]। इत्यनेन पर्यायेण यावत्पञ्चाशत्परंपरया। अथ खल्वजित यो ऽसौ पञ्चाशत्तमः पुरुषो भवेत्परंपरा स चानुमोदकस्तस्यापि[9] तावदहमजित

5 कुलपुत्रस्य वा कुलदुहितुर्वानुमोदनासहगतं[10] पुण्याभिसंस्कारमभिनिर्देक्ष्यामि। तं शृणु साधु च सुष्ठु च मनसिकुरु। भाषिष्ये ऽहं ते॥

तद्यथापि नामाजित चतुर्षु लोकधातुष्वसंख्येयशतसहस्रेषु ये सत्त्वाः सत्तः[11] संविद्यमानाः षट्सु गतिषूपपन्ना अण्डजा वा जरायुजा वा संस्वेदजा वौपपादुका वा रूपिणो वारूपिणो वा संज्ञिनो वासंज्ञिनो वो नैव संज्ञिनो वा नासंज्ञिनो वापदा वा द्विपदा वा

10 चतुष्पदा वा बहुपदा वा यावदेव सत्त्वाः सत्त्वधातौ संग्रहसमवसरणं[12] गच्छन्ति। अथ[13] कश्चिदेव पुरुषः समुत्पद्येत[14] पुण्यकामो हितकामस्तस्य सत्त्वकायस्य[15] सर्वकामक्रीडारति-

---

1) कस्य Cb. K.

2) MSS. add वासंस्तुतस्य.

3) देत्। अनु K. The others have देता.

4) स्मै A. Cb. K W.

5) त् K.

6) पि तं A. K.

7) देत् A. W. देदनु K.

8) देत A. देत् K. W. दयेत् Cb.

9) भवेत् परं वा ऽनु Cb.

10) र्वा अन्यतमा अनु A. W.

11) समत्तः W.

12) सत्त्वसंग्रहं Cb.

13) K. adds खलु.

14) द्यतः A. W. द्येत् K.

15) कामः। यस्य तस्य सत्वस्य काम Cb. कामो यस्तस्य °काम K.

परिभोगानिष्टान्कान्तान्प्रियान्मनापान्दद्यात्[1]। एकैकस्य सत्त्वस्य[2] जम्बुद्वीपं परिपूर्णं दद्यात्कामक्रीडारतिपरिभोगाय हिरण्यसुवर्णरूप्य[3]मणिमुक्तावैडूर्यशङ्खशिलाप्रवाडानश्वरथगो-[4]रथहस्तिरथान्दद्यात्प्रासादान्कूटागारान्। अनेन पर्यायेणाजित स पुरुषो दानपतिर्महादानपतिः परिपूर्णान्यशीतिं वर्षाणि दानं दद्यात्। अथ खल्वजित स पुरुषो दानपतिर्महादानपतिरेवं चिन्तयेत्। इमे खलु सत्त्वाः सर्वे मया क्रीडापिता रमापिताः[5] सुखं जीवापिताः[6]। इमे च ते भवन्तः सत्त्वा वलिनाः पलितशिरसो जीर्णवृद्धा महल्लका अशीतिवर्षिका[7] जात्याभ्याशीभूताश्चैते कालक्रियायाः। यन्न्वहमेतांस्तथागतप्रवेदिते धर्मविनयेऽवतारयेयमनुशासयेयम्। अथ खल्वजित स पुरुषस्तान्सर्वसत्त्वान्समादापयेत्समादापयित्वा च[8] तथागतप्रवेदिते[9] धर्मविनयेऽवतारयेद्ग्राहयेत्। तस्य ते सत्त्वास्तं च धर्मं शृणुयुः श्रुत्वा चैकक्षणेनैकमुहूर्तेनैकलवेन[10] सर्वे स्रोतआपन्नाः स्युः सकृदागामिनोऽनागामिनो[11]ऽनागामिफलं प्राप्नुयुर्यावदर्हन्तो भवेयुः क्षीणास्रवा ध्यायिनो महाध्यायिनोऽष्टविमोक्षध्यायिनः। तत्किं मन्यसेऽजित अपि नु[12] स पुरुषो दानपतिर्महादानपतिस्ततोनिदानं बहु[13] पुण्यं प्रसवेदप्रमेयमसंख्येयम्[14]। एवमुक्ते मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। एव-

---

1) मनापादं Cb.
2) Cb. adds च.
3) रूप्य left out in Cb. K.
4) गोणरथ K. left out in W
5) All but K. क्रीडिता रमिताः.
6) जीविता.
7) र्ष Cb. K.
8) Left out in K.
9) त A. W.
10) Cb. K. put लव before मुहूर्त, while A. leaves out एकक्षण.
11) Left out in Cb. K.
12) बहु instead of अपि नु in Cb. K.
13) Left out in Cb. K., while W. reads बहुतरं.
14) इति added in all but Cb. K.

मेतद्भगवन्नेवमेतत्सुगत। अनेनैव तावद्भगवन्कारणेन स पुरुषो दानपतिर्महादानपतिर्बहु पुण्यं प्रसवेद्यस्तावतां सत्त्वानां सर्वसुखोपधानं[1] दद्यात्कः पुनर्वादो यदुत्तर्यर्हत्त्वे[2] प्रतिष्ठापयेत्॥

एवमुक्ते भगवानजितं बोधिसत्त्वं महासत्त्वमेतदवोचत्। आरोचयामि ते ऽजित
5 प्रतिवेदयामि यश्च स दानपतिर्महादानपतिः पुरुषश्चतुर्षु लोकधातुष्वसंख्येयशतसहस्रेषु सर्वसत्त्वानां सर्वसुखोपधानैः परिपूर्णार्हत्त्वे[3] प्रतिष्ठाप्य पुण्यं प्रसवेत्[4] यश्च[5] पञ्चाशत्तमः[6] पुरुषः परंपराश्रवानुगतः श्रवणेनेतो धर्मपर्यायादेकामपि गाथामेकपदमपि श्रुत्वानुमोदेत[7]। यच्चै[8]-तस्य पुरुषस्यानुमोदनासहगतं पुण्यक्रियावस्तु यच्च[9] तस्य पुरुषस्य दानपतेर्महादानप-तेर्दानसहगतमर्हत्त्व[10] प्रतिष्ठापनासहगतपुण्यक्रियावस्त्विदमेव ततो बहुतरं यो ऽयं पुरुषः
10 पञ्चाशत्तमस्ततः पुरुषः परंपरात इतो धर्मपर्यायादेकामपि गाथामेकपदमपि श्रुत्वानुमोदेत्[11]। अस्या[12]नुमोदनासहगतस्याजित पुण्याभिसंस्कारस्य कुशलमूलाभिसंस्कारस्यानुमोदनासह-गतस्यायतः असौ पौर्विको दानसहगतश्चार्हत्त्वप्रतिष्ठापना[13]सहगतश्च पुण्याभिसंस्कारः

---

1) धानानि Cb.

2) त्तर अर्हत्वे A. त्तर्यर्हत्वे Cb. K. त्तरे अर्हत्वे W. Perhaps the true reading is य उत्तर्यर्हत्त्वे.

3) च K.

4) प्रसवति Cb. K

5) यच्च A. W.

6) शतिमः Cb. K.

7) दयेत् Cb. मेत् K.

8) यश्चै Cb.

9) यश्च Cb

10) महादानपतेर् and सहगतमर्हत्त्वं प्रतिष्ठापना left out in Cb. K.

11) दयेत् Cb.

12) म्या W.

13) ष्ठाप्य Cb.

शततमीमपि[1] कलां नोपयाति[2] सहस्रतमीमपि शतसहस्रतमीमपि कोटीतमीमपि कोटी-
शततमीमपि कोटीसहस्रतमीमपि कोटीशतसहस्रतमीमपि कोटीनयुतशतसहस्रतमीमपि
कलां नोपयाति[3] संख्यामपि कलनामपि गणनामप्युपमामप्युपनिषदमपि[4] न क्षमते। एव-
मप्रमेयमसंख्येयमजित सो ऽपि तावत्पश्चाशत्तमः[5] परंपराश्रवेण पुरुष इतो धर्मपर्यायादन्तश
एकगाथामप्येकपदमप्यनुमोद्य च पुण्यं प्रसवति[6]। कः पुनर्वादो ऽजित यो ऽयं[7] मम संमुख- 5
मिमं धर्मपर्यायं शृणुयाच्छ्रुत्वा चाभ्यनुमोदेत्[8]। अप्रमेयतरमसंख्येयतरं तस्याहमजित तं
पुण्याभिसंस्कारं वदामि॥

यः खलु पुनरजितास्य धर्मपर्यायस्य श्रवणार्थं कुलपुत्रो वो कुलदुहिता वा स्व-
गृहान्निष्क्रम्य विहारं गच्छेत्। स च गत्वा तस्मिन्निमं धर्मपर्यायं मुहूर्तकमपि शृणुया-
त्स्थितो वा निषण्णो वा स सत्त्वस्तन्मात्रेण पुण्याभिसंस्कारेण कृतेनोपचितेन जातिवि- 10
निवृत्तो द्वितीये समुच्छ्रये द्वितीय आत्मभावप्रतिलम्भे[9] गोरथानां लाभी भविष्यत्यश्वर-
थानां[10] हस्तिरथानां[10] शिविकानां गोयानानामृषभयानानां[11] दिव्यानां च विमानानां लाभी
भविष्यति। सचेत्पुनस्तत्र धर्मश्रवणे मुहूर्तमात्रमपि निषद्येमं धर्मपर्यायं शृणुयात्परं वा
निषादयेदासनसंविभागं[12] वा कुर्यादपरस्य सत्त्वस्य तेन स पुण्याभिसंस्कारेण लाभी भवि-

---

1) मा K. the same in similar words below.

2) नोपैति Cb.

3) पयेति Cb.

4) Cp. p. 333, footnote 15.

5) उपनिषाम् etc. From पश्चा till श्रवेण left out in K. Preferable.

6) प्रसूयते A. W.

7) Left out in K.

8) द्येत् Cb.

9) प्रतिसंलोभे गोणरथानां K.

10) Cb. adds लाभी भविष्यति.

11) शिविकाना यानानां नावां यानानाम् A. शिविकायानानां गोयानानां Cb. शिविकायानानां नौयनानां K. शिविकानां यानानां नावानां W.

12) निषोदापयेत् आसन K. a more original reading.

[1]ष्यति शक्रासनानां ब्रह्मासनानां चक्रवर्तिसिंहासनानाम् । सचेत्पुनरजित कश्चिदेव कुलपुत्रो वा कुलदुहिता वापरं पुरुषमेवं वदेदागच्छ त्वं भोः पुरुष सद्धर्मपुण्डरीकं नाम धर्मपर्यायं शृणुष्व स च पुरुषस्तस्य तां प्रोत्साहनामागम्य यदि मुहूर्तमात्रमपि शृणुयात्स सत्त्वस्तेन प्रोत्साहनेन कुशलमूलेनाभिसंस्कृतेन धारणीप्रतिलब्धैर्बोधिसत्त्वैः सार्धं समवधानं प्रतिलभते । अशठश्च भवति तीक्ष्णेन्द्रियः प्रज्ञावान्न तस्य जातिशतसहस्रैरपि पूतिमुखं भवति न दुर्गन्धि । नाप्यस्य जिह्वारोगो भवति न मुखरोगो भवति । न च श्यामदन्तो भवति न विषमदन्तो भवति न पीतदन्तो भवति न दुःसंस्थितदन्तो न खण्डदन्तो न पतितदन्तो न वक्रदन्तो न लम्बोष्ठो भवति नाभ्यन्तरोष्ठो[3] न प्रतारितोष्ठो न खण्डोष्ठो न वङ्कोष्ठो न कृष्णोष्ठो न बीभत्सोष्ठो भवति । न चिपिटनासो भवति न वक्रनासो भवति । न दीर्घमुखो भवति न वङ्कमुखो भवति न कृष्णमुखो भवति नाप्रियदर्शनमुखः । अपि तु खल्वजित सूक्ष्मसुजातजिह्वादन्तोष्ठो भवत्यायतनासः प्र[4]णीतमुखमण्डलः सुभ्रूः सुपरिनिर्मितललाटो भवति । सुपरिपूर्णपुरुषव्यञ्जनप्रतिलाभी च भवति । तथागतं [5]चाववादानुशासकं प्रतिलभते क्षिप्रं च बुद्धैर्भगवद्भिः सह समवधानं प्रतिलभते । प[6]श्याजितैकसत्त्वमपि नामोत्साहयित्वेयत्[7]पुण्यं प्रसवति[8] । कः पुनर्वादो यः सत्कृत्य शृणुयात्सत्कृत्य वाचयेत्सत्कृत्य देशयेत्सत्कृत्य प्रकाशयेदिति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

---

1) भवति K.

2) त्य A. Cb. K. W. ष्य B.

3) प्रतिसारित K.

4) प्राणित K. var. readings are प्रणीत, and प्रोण. The true r. doubtful.

5) तथा Cb.

6) पास्या A. Cb. W. पश्या K.

7) इयत् K. इयत्तं (a Prakrt form) the rest.

8) प्रसूयते B.

यश्चा[1]शिमो यश्च परं[2]परायां सूत्रस्यिमस्य[3] शृणुतेकगाथाम्।
अनुमोदयित्वा[4] च प्रसन्नचित्तः[5] शृणुष्व पुण्यं भवि यत्तकं[6] तत्॥ २॥
स चैव पुरुषो भवि दानदाता सत्त्वान कोटीनयुतेषु नित्यम्।
ये पूर्वमौपम्यकृता मया वै तान्सर्वि तर्पेय अशीतिवर्षान्[7]॥ ३॥
सो दृष्ट्व तेषां च जरामुपस्थितां वली च खण्डी[8] च शिरश्च पाण्डुरम्।
हाहाधिमुच्यन्ति हि[9] सर्वसत्त्वा यन्नून धर्मेण हु ओवदेयम्॥ ४॥
सो तेष धर्मं वदतीह पश्चान्निर्वाणभूमिं च प्रकाशयेत।
सर्वे भवाः फेनमरीचिकल्पा निर्विद्यथा सर्व[10]भवेषु क्षिप्रम्॥ ५॥
ते सर्व[11]सत्त्वाश्च श्रुणित्व धर्मं तस्यैव दातुः पुरुषस्य अन्तिकात्।
अर्हन्तभूता भवि एककाले क्षीणास्रवा अन्तिमदेहधारिणः॥ ६॥ 10
पुण्यं ततो[12] बहुतरु तस्य हि स्यात्परंपरातः[13] श्रुणि[14] एकगाथाम्।
अनुमोदि वा यत्तकु तस्य पुण्यं कल[15] पुण्यस्कन्धः पुरिमो न भोति॥ ७॥

---

1) मि A. B. Cb. W. शि K.
2) यं K.
3) सूत्रश्यिमस्य K. सूत्राणि तस्य W.
4) अनुमोदि श्रुत्वा B. Cb. K.
5) त्तोः A. त्तः C. त्ताः Cb. त्तो K.
6) भत्र या B. भविष्य K.
7) वर्षं A. W.
8) MSS. खली.
9) धिमुच्यन्ति मि K.
10) सर्वि A. W.
11) सर्वि A. Cb. W. सर्व B. K.
12) अतो K. W.
13) पराच्चो A. W.
14) Read श्रुणिपेक?
15) काला A. W.

एवं बहु तस्य भवेत पुण्यं अनन्तकं यस्य प्रमाणु नास्ति ।
गाथां पि श्रुत्वैक परंपराय किं वा पुनः संमुख यो शृणोया ॥ ८ ॥

यश्चैकसत्वं पि वदेय तत्र प्रोत्साहये गच्छ शृणुष्व धर्मम् ।
सुदुर्लभं सूत्रमिदं हि भोति कल्पान कोटीनयुतैरनेकैः ॥ ९ ॥

स चापि प्रोत्साहितु तेन सत्वः शृणोय सूत्रेमं[1] मुहूर्तकं पि ।
तस्यापि धर्मस्य फलं शृणोहि मुखरोग तस्य[2] न कदाचि भोति ॥ १० ॥

जिह्वापि तस्य[3] न कदाचि दुःखति[4] न तस्य दन्ता पतिता भवन्ति ।
श्यामाथ पीता विषमा च जातु बीभत्सितोष्ठो न च जातु भोति ॥ ११ ॥

कुटिलं च शुष्कं च न जातु दीर्घं मुखं न छधं स्य[5] कदाचि भोति ।
सुसंस्थिता नास तथा ललाटं दन्ता च श्रोष्ठो मुखमण्डलश्च ॥ १२ ॥

प्रियदर्शनो भोति सदा नराणां पूतिं च वक्त्रं न कदाचि भोति ।
यथोत्पलस्येह सदा सुगन्धिः प्रवायते[6] तस्य मुखस्य[7] गन्धः ॥ १३ ॥

गृहाद्विहारं हि व्रजित्व धीरो गच्छेत सूत्रं श्रवणाय एतत् ।
गत्वा च सो तत्र शृणोन्मुहूर्तं[8] प्रसन्नचित्तस्य फलं शृणोथ ॥ १४ ॥

---

1) तु A. W. य B. षु Cb. म K. (i. e. सत्रूमिमं).

2) तस्ये A. तस्यो B. तस्या Cb. तस्य K. W.

3) तस्यो B.

4) ते K. तः W.

5) च्छुत्वं स A. च्छिद्धं स्य B. च्छिद्रवति Cb. च्छिधं सि K. च्छिन्न स्य W. We cannot guess what is meant.

6) प्रवाय A. K. प्रवयते B. प्रवायते Cb. प्रदाय W.

7) वदनस्य A. K. W. मुखस्य B. Cb.

8) शृणो मु A. शृणोन्मु B. शृणोञ्च म Cb. शृणोत्मु K. शृणोत मु W.

सुगौरु तस्य[1] भवतेत्मभावः[2] परियाति च[3] अश्वरथेहि धीरः।
हस्तोरथांश्च अभिरुह्य उच्चाव्रतनेहि चित्राननुचङ्क्रमेया[4] ॥ १५ ॥
विभूषितां सो शिविकां लभेत नरैरनेकैरिह वाह्यमानाम्।
गत्वापि धर्मं श्रवणाय तस्य फलं शुभं भोति च एवरूपम् ॥ १६ ॥
निषद्य चासौ परिषाय तत्र मुहूर्तकेन कर्मणा कृतेन तेन। 5
शक्रासनानां भवते स लाभो ब्रह्मासनानां च नृपासनानाम्[5] ॥ १७ ॥

॥ इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये ऽनुमोदनापुण्यनिर्देशपरिवर्तो नाम सप्तदशमः[6] ॥

---

1) तस्यो A. B. W.
2) त्म for आत्म.
3) चो A. W.
4) तु A. B. Cb. W. नु K.
5) MSS. add इति.
6) वर्तो ऽष्टादशमः Cb.

# XVIII.

अथ खलु भगवान्सततसमिताभियुक्तं बोधिसत्त्वं महासत्त्वमामन्त्रयामास[1]। यः कश्चि-
त्कुलपुत्र[2] इमं धर्मपर्यायं धारयिष्यति वाचयिष्यति[3] वा देशयिष्यति वा लिखिष्यति वा।
स कुलपुत्रो वा कुलदुहिता वाष्टौ[4] चक्षुर्गुणशतानि प्रतिलप्स्यते द्वादश श्रोत्रगुणशतानि
प्रतिलप्स्यते अष्टौ घ्राणगुणशतानि प्रतिलप्स्यते द्वादश जिह्वागुणशतानि प्रतिलप्स्यते
5 अष्टौ कायगुणशतानि प्रतिलप्स्यते द्वादश मनोगुणशतानि प्रतिलप्स्यते। तस्येभिर्बहु-
भिर्गुणशतैः षडिन्द्रियग्रामः परिशुद्धः सुपरिशुद्धो भविष्यति[5]। स एवं परिशुद्धेन चक्षुरि-
न्द्रियेण प्राकृतेन मांसचक्षुषा मातापितृसंभवेन त्रिसाहस्रमहासाहस्रीं[6] लोकधातुं सान्तर्ब-
हिः सशैलवनषण्डामधो[7] यावदवीचिं महानिरयमुपादायोपरि च यावद्भवाग्रम्। तत्सर्वं
द्रक्ष्यति प्राकृतेन मांसचक्षुषा ये[8] च तस्मिन्सत्त्वा उपपन्नास्तान्सर्वान्द्रक्ष्यति कर्मविपाकं च
10 तेषां ज्ञास्यतीति॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

यो इमं सूत्र भाषेत पर्षासु च विशारदः[9]।
अनोलीनः प्रकाशेया गुणांस्तस्य[10] शृणुष्व मे॥ १॥

---

1) यामास A. Ca. Cb. K. यते स्म B. W

2) त्रो Cb.

3) Left out in Cb.

4) कुलदुहिता वा left out in B. Cb. वा कुल° त्रा left out in K.

5) भवति Cb.

6) स्रां A. W. स्रं B. Cb. स्रीं K.

7) षण्डां अधः K. षण्डम the others.

8) B. adds स.

9) सा A. B. Ca. W. षा Cb. शा K.

10) गुणास्तस्य A. B. Ca. Cb. W. गुणानस्य K.

अष्टौ गुणाशतास्तस्य चक्षुषो भोन्ति सर्वशः ।
येनास्य विमलं[1] भोति शुद्धं चक्षुरनाविलम् ॥ २ ॥
स मांसचक्षुषा तेन मातापितृकसंभुना ।
पश्यते लोकधात्विमां सशैलवनकाननाम्[2] ॥ ३ ॥
मेरुं सुमेरुं[3] सर्वां[4] च चक्रवाडा स पश्यति । 5
ये चान्ये पर्वताः खण्डाः[5] समुद्रांश्चापि पश्यति ॥ ४ ॥
यावानवीचि क्रेष्टेन भवाग्रं चोपरिष्टतः[6] ।
सर्वं स पश्यते[7] वीरो मांसचक्षु स्य[8] ईदृशम् ॥ ५ ॥
न ताव दिव्यचक्षु स्य[9] भोति नो चापि ज्ञायते[10] ।
विषयो मांसचक्षुष्य[11] भवेत्तस्यायमीदृशः[12] ॥ ६ ॥ 10

पुनरपरं सततसमिताभियुक्त स कुलपुत्रो वा कुलदुहिता वेमं धर्मपर्यायं संप्रकाशयमानः परेषां च संश्रावयमानस्तैर्[13]द्वादशभिः श्रोत्रगुणाशतैः समन्वागतः । ये त्रिसाहस्रम-

---

1) विमतिं A. विमलं B. K. W. विमान Cb.

2) सर्वान्मात्तरवान्हिरा K.

3) सुमेरुं A. .B. Cb. W. सुमेरुं मेरु K.

4) सर्वाश्च in all MSS. but चक्रवाल is of the neuter gender.

5) पृष्टाः B. पर्वताघुष्णाः K.

6) ष्ठितां A. B. ष्ठितम् the rest.

7) धी B.

8) स्य Cb. K.

9) स्य A. Cb K. W.

10) स्य A. B. W. ज्ञानति K.

11) स्य A. K.

12) शम् Cb. All add इति.

13) वयन्ते B. K.

क्षामाक्लमायां[1] लोकधातौ विविधाः शब्दा निश्चरन्ति यावदवीचिर्महानिरयो यावञ्च भवाग्रं सान्तर्बहिः। तद्यथा हस्तिशब्दा[2] १ वाश्वशब्दा २ वोष्ट्र[3]शब्दा[4] ३ वा गोशब्दा ४ वा-जशब्दा[5] ५ वा जनपदशब्दा[6] ६ वा[6] रथशब्दा ७ वा रुदितशब्दा[7] ८ वा शोकशब्दा ९ वा भैरवशब्दा १० वा शङ्खशब्दा[8] ११ वा[8] घण्टाशब्दा १२ वा पटहशब्दा[9] १३ वा[9] भेरीशब्दा १४ वा क्रीडाशब्दा १५ वा गीतशब्दा १६ वा नृत्यशब्दा[10] १७ वा तूर्यशब्दा[11] १८ वा[11] वाद्य-शब्दा १९ वा स्त्रीशब्दा २० वा पुरुषशब्दा २१ वा दारकशब्दा २२ वा दारिकाशब्दा २३ वा धर्मशब्दा २४ वाधर्मशब्दा २५ वा सुखशब्दा २६ वा दुःखशब्दा[12] २७ वा[12] बालशब्दा[13] २८ वार्यशब्दा २९ वा मनोज्ञशब्दा ३० वामनोज्ञशब्दा[14] ३१ वा[14] देवशब्दा ३२ वा नागशब्दा ३३ वा यक्षशब्दा ३४ वा राक्षसशब्दा[15] ३५ वा[15] गन्धर्वशब्दा ३६ वासुरशब्दा ३७ वा गरुडश-ब्दा ३८ वा किंनरशब्दा ३९ वा महोरगशब्दा ४० वा मनुष्यशब्दा ४१ वामनुष्यशब्दा ४२

---

1) स्रे B. Cb.

2) Left out in B. Cb.

3) वा हस्ति instead of वोष्ट्र in B. Cb.

4) Left out in K.

5) Put after जन° in B.

6) Left out in Cb W. पद् left out in K.

7) दि left out in Cb.

8) Left out in K.

9) In B. Cb. K.

10) उष्ट्र B. Cb. K.

11) Left out in B. Cb. K.

12) Left out in Cb.

13) बान Cb.

14) Left out in Cb. W.

15) B. Cb. K. W.

वाग्निशब्दा ४३ वा(1) वायुशब्दा ४४(2) वोदकशब्दा ४५ वा(3) ग्रामशब्दा ४६ वा नगरशब्दा ४७ वा भिक्षुशब्दा(4) ४८ वा श्रावकशब्दा ४९ वा प्रत्येकबुद्धशब्दा ५० वा बोधिसत्त्वशब्दा ५१ वा तथागतशब्दा ५२ वा। यावन्तः केचित्त्रिसाहस्रमहासाहस्रायां(5) लोकधातौ सत्त्वबहिः शब्दा निश्चरन्ति। तान्शब्दांस्तेन(6) प्राकृतेन परिशुद्धेन(7) श्रोत्रेन्द्रियेण शृणोति। न च तावद्दिव्यं श्रोत्रमभिनिर्हरति तेषां(8) तेषां च सत्त्वानां रुतान्यवबुध्यते(9) विभावयति विभ- 5 जति तेन च प्राकृतेन श्रोत्रेन्द्रियेण तेषां तेषां च(10) सत्त्वानां रुतानि शृण्वतस्तस्य(11) तैः सर्वशब्दैः श्रोत्रेन्द्रियं नाभिभूयते। एवंरूपः सततसमिताभियुक्त तस्य बोधिसत्त्वस्य महा- सत्त्वस्य श्रोत्रेन्द्रियप्रतिलम्भो(12) भवति न च तावद्दिव्यं श्रोत्रमभिनिर्हरति॥

इदमवोचद्भगवानिदं वदित्वा(13) सुगतो ह्यथापरमेतदुवाच शास्ता॥

श्रोत्रेन्द्रियं तस्य विशुद्ध भोति अनाविलं प्राकृतकं च तावत्। 10

विविधान्हि(14) शृणोति(15) शब्दानिह लोकधातौ हि अशेषतो ये॥ ७॥

---

1) अग्नि Cb.

2) वायु is put after उदक in B. Cb. K.

3) महासमुद्रवेशशब्दा वा ग्रा O.

4) जनपदशब्दा वा उपासिकाशब्दा वा श्रा° O.

5) स्रे B. स्र Cb.

6) तां सर्वास्तेन K. O.

7) Left out in B. Cb. K.

8) K. adds च, Cb. leaves तेषां out.

9) K. adds तेषाञ्च तेषाञ्च सत्त्वानां रुतानि.

10) तेषां च left out in K.

11) शृण्वंति॥ तस्य A. शृण्वंतस्तस्या B. शृण्वंतेस्तस्य Cb. शृण्वतिः तस्य W. शृण्वतो न तस्य O.

12) सं for प्रति in K.

13) वि A. W.

14) धां हि A. B. K. W. धा हि Cb.

15) शृणो A. शृणोथ K. The verse faultive; by reading नानाविधान्हि स शृणोति one may restore the metre, but such a reading is but a makeshift. O. has,

हस्तीन अश्वान शृणोति शब्दान्रथान[1] गोणान[2] अजैडकानाम्[3] ।
भेरीमृदङ्गान सुघोषकानां वीणान वेणूनथ वल्लकीनाम् ॥ ८ ॥
गीतं मनोज्ञं मधुरं शृणोति न चापि सो सज्जति तत्र धीरः ।
मनुष्यकोटीन शृणोति शब्दान्भाषन्ति यं यं च यहिं यहिं ते ॥ ९ ॥

5 देवान चो नित्य शृणोति शब्दान्गीतस्वरां[4] च मधुरां मनोज्ञाम् ।
पुरुषाण इस्त्रीण रुतानि चापि तथ दारकाणामथ दारिकाणाम् ॥ १० ॥
ये पर्वतेष्वेव गुहानिवासी कलविङ्कका कोकिलबर्हिणाश्च[5] ।
पक्षीण ये जीवकजीवका हि तेषां च वल्गू शृणुते हि शब्दान् ॥ ११ ॥
नरकेषु ये वेदन[6] वेदयन्ति सुदारुणांश्चापि करोन्ति शब्दान् ।

10 आकारदुःखेरवपीडितानां यान्प्रेत कुर्वन्ति तथैव शब्दान् ॥ १२ ॥
असुराश्च ये सागरमध्यवासिनो मुच्यन्ति[7] घोषांस्तथ चान्यमन्यान् ।
सर्वानिहस्थो स हि धर्मभाणकः शृणोति शब्दान्न च श्रोतरोपति[8] ॥ १३ ॥
तिर्याण योनीषु रुतानि यानि अन्योन्यसंभाषणतां[9] करोन्ति ।
इह स्थितस्तानपि सो शृणोति विविधानि शब्दानि बहुविधानि ॥ १४ ॥

---

equally faultive विविधं च येन शृणोतीह (original text शुणोतीह) शब्दानिह लोकधातुष हि अशेषतो य (r. ये).

1) ना W.

2) अजेड A. B. Cb अजड W. गजड K.

3) चो A. W.

4) क्रोशमोरा: O.

5) न B. Cb. K.

6) शृणोति A. W.

7) Read मुञ्चन्ति.

8) A mistake for श्रोत्रशोपति.

9) Read तः or तो, Abl. c.

ये ब्रह्मलोके निवसन्ति देवा अकनिष्ठ आभास्वर ये च देवाः[1]।
ये चान्यमन्यस्य करोन्ति घोषान् शृणोति तत्सर्वमशेषतो ऽसौ ॥ १५ ॥
स्वाध्याय कुर्वन्तिह ये च भिक्षवः सुगतानिह शासनि प्रव्रजित्वा।
पर्षासु[2] ये देशयते च[3] धर्म तेषां पि[4] शब्दं शृणुते स नित्यम् ॥ १६ ॥
ये बोधिसत्वाश्चिह लोकधातौ स्वाध्याय कुर्वन्ति परस्परेण। 5
संगीति धर्मेषु च[5] ये करोन्ति शृणोति शब्दान्विविधांश्च तेषाम् ॥ १७ ॥
भगवान्पि बुद्धो नरदम्यसारथिः पर्षासु धर्म ब्रुवते यमग्रम्[6]।
तं चापि सो शृणवति[7] एककाले यो बोधिसत्वो इमु सूत्र धारयेत्[8] ॥ १८ ॥
सर्वे त्रिसाहस्रि इमस्मि क्षेत्रे ये सत्त्व कुर्वन्ति बहूं पि शब्दान्।
अभ्यन्तरेणापि च[9] बाहिरेण अवीचिपर्यन्त भवाग्रमूर्धम् ॥ १९ ॥ 10
सर्वेष सत्त्वान शृणोति शब्दांश्च चापि श्रोत्रं उपरुध्यते ऽस्य।
षडिन्द्रियो जानति[10] स्थानस्थानं श्रोतेन्द्रियं प्राकृतकं[11] हि तावत् ॥ २० ॥
न च ताव दिव्यस्मि करोति यत्नं प्रकृत्य[12] संतिष्ठति श्रोत्रमेतत्।
सूत्रं हि यो धारयते विशारदो गुणा स्य एतादृशका भवन्ति[13] ॥ २१

1) This quarter is left out in A.
2) पारिषासयं K. पर्षासुप others.
3) Left out in K.
4) पि K. च the rest.
5) चा यो Cb.
6) द् K.
7) णो A.
8) ब्रूयात् K.
9) श्च K.
10) य Cb. K.
11) ति A. Cb.
12) ति A.
13) MSS. add इति.

पुनरपरं सततसमिताभियुक्तास्य[1] बोधिसत्त्वस्य महासत्त्वस्येमं धर्मपर्यायं धारयतः प्रकाशयतः स्वाध्यायतो लिखतो ऽष्टाभिर्गुणशतैः समन्वागतं घ्राणेन्द्रियं परिशुद्धं भवति। स तेन परिशुद्धेन घ्राणेन्द्रियेण ये त्रिसाहस्रमहासाहस्रायां[3] लोकधातौ सान्तर्बहिर्विविधगन्धाः संविद्यन्ते। तद्यथा पूतिगन्धा वा मनोज्ञगन्धा वा नानाप्रकाराणां सुम-
5 नसां गन्धाः। तद्यथा जातिकमल्लिकाचम्पकपाटलगन्धास्तान्गन्धान्घ्रायति[4]। जलजानामपि पुष्पाणां विविधान्गन्धान्घ्रायति। तद्यथोत्पलपद्मकुमुदपुण्डरीकाणां[5] गन्धान्घ्रायति। विविधानां पुष्पफलवृक्षाणां पुष्पफलगन्धान्घ्रायति। तद्यथा चन्दनतमालपत्रतगरागरुसुरभिगन्धान्घ्रायति। नानाविकाराणि गन्धविकृतिशतसहस्राणि यान्येकस्थानस्थितः सर्वाणि घ्रायति[6]। सत्त्वानामपि विविधान्गन्धान्घ्रायति। तद्यथा हस्त्यश्वगते-
10 डकपशुगन्धान्घ्रायति[7]। विविधानां च[8] तिर्यग्योनिगतानां प्राणिनामात्मभावगन्धान्घ्रायति। स्त्रीपुरुषात्मभावगन्धान्घ्रायति। दारकदारिकात्मभावगन्धान्घ्रायति। दूरस्थानामपि तृणगुल्मौषधिवनस्पतीनां गन्धान्घ्रायति। भूतान्गन्धान्विन्दति[9] न च तैर्गन्धैः संह्रियते न संमुह्यति। स इह स्थित एवं देवानामपि गन्धान्घ्रायति। तद्यथा पारिजातकस्य[10] कोविदारस्य[11] मान्दारवमहामान्दारवमञ्जूषकमहामञ्जूषकाणां[12] दिव्यानां पुष्पाणां

---

1) हास्य A. हस्य B. Cb. W. ह तस्य K.
2) ष्ट K.
3) स्रे Cb.
4) जातिमालिका K. जातीमालिका B.
5) A. W. add सौगन्धिक.
6) All but O. add सर्वाणि च विन्दति.
7) गवाज A. K. W. गवेडक B. Cb.
8) Left out in K.
9) A. W. add सतां गंधां विंदति.
10) पारिपात्र A. W.
11) B. Cb. adds गंधान्घ्रायति.
12) म Cb. K.

गन्धान्घ्रायति । दिव्यानामगरुचूर्णचन्दनचूर्णानां गन्धान्घ्रायति । दिव्यानां च नानाविधानां पुष्पविकृतिशतसहस्राणां[1] गन्धान्घ्रायति । नामानि चैषां[2] संजानीते । देवपुत्रात्म-[3]भावगन्धान्घ्रायति । तद्यथा शक्रस्य देवानामिन्द्रस्यात्मभावगन्धं घ्रायति । तं च जानीते यदि वा वैजयन्ते प्रासादे क्रीडन्तं रमन्तं[4] परिचारयन्तं यदि वा सुधर्मायां देवसभायां देवानां त्रायस्त्रिंशानां[5] धर्मं देशयन्तं यदि वोद्यानभूमौ निर्यान्तं क्रीडनाय । अन्येषां च देवपुत्राणां 5
पृथक्पृथगात्मभावगन्धान्घ्रायति । देवकन्यानामपि देववधूनामप्यात्मभावगन्धान्घ्रायति । देवकुमाराणामप्यात्मभावगन्धान्घ्रायति । देवकुमारिकाणामप्यात्मभावगन्धान्घ्रायति[6][7] । न च तैर्गन्धैः संह्रियते । अनेन पर्यायेण यावद्भवाग्रोपपन्नानामपि सत्त्वानामात्मभावगन्धान्घ्रायति । ब्रह्मकायिकानामपि देवपुत्राणां महाब्रह्मणामपि[8] चात्मभावगन्धान्घ्रायति । अनेन पर्यायेण सर्वदेवनिकायानामप्यात्मभावगन्धान्घ्रायति[9] । श्रावकप्रत्येकबुद्धबोधि- 10
सत्त्वतथागतात्मभावगन्धान्घ्रायति । तथागतासनानामपि गन्धान्घ्रायति । यस्मिंश्च (स्थाने) ते तथागता अर्हन्तः सम्यक्संबुद्धा विहरन्ति तच्च प्रजानाति । न चास्य तद्घ्राणेन्द्रियं[10] तैस्तैर्विविधैर्गन्धैः प्रतिहन्यते नोपहन्यते न संपीड्यत आकाङ्क्षमाणश्च तांस्तान्गन्धान्परेषामपि व्याकरोति न चास्य स्मृतिरुपहन्यते ॥

---

1) पुष्पाणां K.

2) नामापि तेषां Cb.

3) देवपुत्रस्या A. W.

4) रममाणां B. Cb. W.

5) त्र Cb. K. W.

6) कुमारीणा K.

7) This sentence in left out in A. W.

8) ह्मा K.

9) प्य in K. only.

10) तं घ्रा A. Cb. K. W. तत्र घ्रा B.

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

घ्राणेन्द्रियं तस्य विशुद्ध भोति विविधांश्च गन्धान्बहु घ्रायते ऽसौ ।
ये लोकधातौ हि इमस्मि सर्वे सुगन्धदुर्गन्ध भवन्ति केचित् ॥ २२ ॥
जातीय गन्धो अथ मल्लिकाया[(1)] तमालपत्रस्य च चन्दनस्य ।
5 तगरस्य गन्धो अगरूस्य[(2)] चापि विविधान पुष्पाण फलान चापि ॥ २३ ॥
सत्त्वान गन्धान्पि तथैव जानति नराण नारीण च दूरत स्थितः ।
कुमारकाणां च कुमारिकाणां गन्धेन सो जानति तेष स्थानं ॥ २४ ॥
राज्ञां पि सो जानति चक्रवर्तिनां बलचक्रवर्तीनथ[(3)] मण्डलीनाम् ।
कुमारकामात्य तथैव तेषां गन्धेन चान्तःपुर सर्व जानति ॥ २५ ॥
10 परिभोगरत्नानि बहूविधानि कुप्यानि भूमौ निहितानि[(4)] यानि ।
स्त्रीरत्नभूतानि[(5)] भवन्ति यापि गन्धेन सो जानति बोधिसत्त्वः ॥ २६ ॥
तेषां च यो[(6)] आभरणा भवन्ति कायस्मि आमुक्त[(6)] विचित्ररूपा[(6)] ।
वस्त्रं च माल्यं च विलेपनं च गन्धेन सो जानति बोधिसत्त्वः ॥ २७ ॥
स्थितां निषण्णां शयितां तथैव क्रीडारतिं ऋद्धिबलं च सर्वम् ।
15 सो जानती[(7)] घ्राणबलेन धीरो यो धारयेत्सूत्रमिदं वरिष्ठम् ॥ २८ ॥

---

1) मालि B. K.

2) स्य A.

3) Skr. र्तिनामथ.

4) हि स्थितानि C. A. गतानि भूमीय स्थितानि O.

5) हि B. K. W. अन्ये रतनानि चापि O. ये हि for यापि is the reading of the other MSS.

6) ये स्या and आबद्ध O. ये आ, and आमुक्ति and पा: the rest.

7) ति A. ते O. The lengthening not necessary.

सुगन्धतैलान तथैव गन्धान्नानाविधान्पुष्पफलान गन्धान् ।
सकृत्स्थितो ज्ञानति घायते च अमुकस्मि देशस्मि इमस्मि गन्धान्[1] ॥ २९ ॥
ये पर्वतानां विवरान्तरेषु बकु चन्दना पुष्पित तत्र सन्ति ।
ये चापि तस्मिं[2] निवसन्ति सत्त्वाः सर्वेष गन्धेन विदुर्विजानति[3] ॥ ३० ॥
ये चक्रवाडस्य भवन्ति पार्श्वे ये सागरस्य निवसन्ति मध्ये ।　　5
पृथिवीय ये मध्यि[4] वसन्ति सत्त्वाः सर्वान्स गन्धेन विदुर्विजानाति[3] ॥ ३१ ॥
सुरांश्च ज्ञानाति तथासुरांश्च असुराण कन्याश्च विजानते असौ[5] ।
असुराण क्रीडाश्च रतिं च ज्ञानति[3] घ्राणस्य तस्येदृशकं बलं हि ॥ ३२ ॥
अटवीषु ये कोचि चतुष्पदास्ति सिंहाश्च व्याघ्रास्तथ हस्तिनागाः ।
महिषा गवा ये गवयश्च तत्र[6] घ्राणेन सो ज्ञानति तेष वासम् ॥ ३३ ॥　　10
स्त्रियश्च या गुर्विणिका भवन्ति कुमारकां वापि कुमारिकां वा ।
धारेन्ति कुक्षौ हि[7] किलान्तकाया गन्धेन सो ज्ञानति यं तहि स्यात् ॥ ३४ ॥
आप[8]न्नसत्त्वा[9] पि विजानते असौ विनाशधर्मा पि विजानते असौ ।
इयं पि नारी व्यपनीतदुःखा प्रसविष्यते पुण्य[10]मयं कुमारम् ॥ ३५ ॥

---

1) बुद्धाः for गन्धान् in K.

2) तत्र B. Ca. K.

3) ते B. Ca. K.

4) मध्ये च K.

5) तथा प्रजानाति O.

6) महिषाश्च गावस्तथ वत्सकाश्च O.

7) कुक्षीय O.

8) स A. B. W. प Ca. K.

9) त्त्वा A. B. Ca. W. त्त्वां K. त्वा न O.

10) बलं K. फलं O.

पुरुषाणाभिप्रायु बहुं विजानते अभिप्रायगन्धं च तथैव घायते ।
रक्ताम दुष्टान तथैव मत्तिणां उपशान्तचित्तान च गन्ध घायते ॥ ३६ ॥
पृथिवीय ये चापि निधान सन्ति धनं हिरण्यं च सुवर्णरूप्यम् [1] ।
मञ्जूष लोही च तथा सुवर्णा [2] गन्धेन सो घायति बोधिसत्त्वः ॥ ३७ ॥
5 हारार्धहारान्मणिमुक्तिकाश्च अनर्घप्राप्ता विविधा च रत्ना [3] ।
गन्धेन सो जानति तानि सर्वा [4] अनर्घनामं द्युतिसंस्थितं च ॥ ३८ ॥
उपरिं च देवेषु तथैव पुष्पा मन्दारवांश्चैव मञ्जूषकांश्च ।
या पारिजातस्य [5] च सन्ति पुष्पा इह स्थितो घायति ता स धीरः [6] ॥ ३९ ॥
विमान ये यादृशकाश्च यस्य उदारहीनास्तथ मध्यमाश्च ।
10 विचित्ररूपाश्च भवन्ति यत्र इह स्थिता घाणबलेन घायति ॥ ४० ॥
उद्यानभूमिं च तथा प्रजानते सुधर्मधर्माण स वैजयन्ते [7] ।
प्रासादश्रेष्ठे च तथा प्रजानते ये चो रमन्ते तहि देवपुत्राः ॥ ४१ ॥
इह स्थितो घायति गन्धु [8] तेषां गन्धेन सो जानति [9] देवपुत्रान् ।
यो यत्र कर्म कुरुते स्थितो वा शृणोति वा गच्छति यत्र वापि ॥ ४२ ॥
15 या देवकन्या बहुपुष्पमण्डिता आमुक्तमाल्याभरणा [10] अलंकृताः [11] ।
रमन्ति गच्छन्ति च यत्र यत्र गन्धेन सो जानति बोधिसत्त्वः ॥ ४३ ॥

---

1) सुवर्ण च हिरण्य Ca. K.
2) Certainly a misreading; O. has विविधाश्च (sic!) रत्ना; equally bad.
3) अनर्घमूल्यं विविधं च रत्नम् O. °प्तान्विविधांश्च रत्नान् the rest.
4) All but O. तांश्च सर्वान्.
5) यात्र B. Ca. K.
6) वो A. K. W. धो Ca. Cb.
7) सुधर्मदेवासनि वै K. Reading of O. unknown.
8) घ A. B. Cb. W. घु K.
9) गन्धेन जानाति च A. W.
10) चैला O.
11) स्वलं O. better.

यावद्भवाग्राडुपरिं च देवा ब्रह्मा महाब्रह्मविमानचारिणः।

तांश्चापि गन्धेन तर्हि प्रजानते स्थितांश्च ध्याने अथ व्युत्थितान्वा[1] ॥ ४४ ॥

आभास्वरांज्ञानति[2] देवपुत्रान् च्युतोपपन्नांश्च अपूर्वकांश्च।

घ्राणेन्द्रियं[3] ईदृश[4] तस्य भोति यो बोधिसत्त्वो इमु[5] सूत्र धारयेत् ॥ ४५ ॥

ये केचि भिक्षू[6] सुगतस्य शासने अभियुक्तरूपा स्थित चङ्क्रमेषु। 5

उद्देशस्वाध्यायरताश्च भिक्षवो[7] सर्वान्[8] हि सो जानति बोधिसत्त्वः ॥ ४६ ॥

ये श्रावका भोन्ति जिनस्य पुत्रा विहरन्ति केचित्सद[9] वृक्षमूले।

गन्धेन सर्वान्विदु जानते तान् अमुत्र भिक्षु अमुको स्थितो ति ॥ ४७ ॥

ये बोधिसत्त्वाः स्मृतिमन्त ध्यायिनो उद्देशस्वाध्यायरताश्च ये सदा।

पर्षासु धर्मं च प्रकाशयन्ति गन्धेन ताञ्जानति बोधिसत्त्वः ॥ ४८ ॥ 10

यस्यां दिशायां सुगतो महामुनिर्धर्मं प्रकाशेति[10] हितानुकम्पकः।

पुरस्कृतः श्रावकसंघमध्ये गन्धेन सो[11] जानति लोकनाथम्[12] ॥ ४९ ॥

---

1) उत्थितां वा Cb.

2) रां जा A. B. W. रा जा K. Cb.

3) यमी K. badly.

4) श तस्य K. O. शमस्य the rest.

5) इद O.

6) All but O. भिक्षु केचित्सु.

7) Sic O. भिक्षून् the others.

8) सर्वा हि A. सर्वांश्च B. Ca. Cb. तान्सर्वान् O.

9) तेषां B. एकासनि O.

10) प्रदेशेन्ति K.

11) तं B. तां W. सो K.

12) थः A. W. थं B. Cb. K.

ये चापि सत्त्वा स्य शृणोन्ति धर्मं श्रुत्वा च ये प्रीतमना[1] भवन्ति ।
इह स्थितो जानति बोधिसत्त्वो जिनस्य पर्षामपि[2] तत्र सर्वाम्[3] ॥ ५०
एतादृशं घ्राणबलं स्य भोति न च ताव दिव्यं भवते स्य घ्राणम् ।
पूर्वंगमं तस्य तु एत[4] भोति दिव्यस्य घ्राणस्य अनास्रवस्य[5] ॥ ५१ ॥

5 पुनरपरं सततसमिताभियुक्त स कुलपुत्रो वा कुलदुहिता वेमं धर्मपर्यायं धारयमाणो देशयमानः प्रकाशयमानो लिखमान[6]स्तैर्द्वादशभिर्जिह्वागुणशतैः समन्वागतं जिह्वेन्द्रियं प्रतिलप्स्यते । स तथारूपेण जिह्वेन्द्रियेण[7] यान्यात्रसानास्वादयति यान्यात्रसाञ्जिह्वेन्द्रिय उपनिक्षेप्स्यति सर्वे ते दिव्यं[8] महारसं मोक्ष्यन्ते । तथा चास्वादयिष्यति यथा न कंचि[9]दमममनआपमास्वादयिष्यति[10] । ये ऽप्यमनआपा[11] रसास्ते ऽपि तस्य जिह्वेन्द्रिये
10 समुपनिक्षिप्ता दिव्यं रसं[12] मोक्ष्यन्ते । यं च धर्मं व्याहरिष्यति पर्षन्मध्यगतस्तेन तस्य[13] ते[14]

---

1) All ति.

2) पर्षानपि K.

3) सर्वान् K. पर्षाम our reading for पर्षा म and परिषा म. The reading of the MSS. may be retained if we read सर्वा, i. e. Skr. सर्वाः.

4) एन Cb. एत K. एतु Ca. B.

5) MSS. add इति.

6) य added in Cb. The passage different in O.

7) From यान्य° (after °येण) till °त्रसाज् (before जिह्वेन्द्रिये) left out in Cb., which, however, reads यानि रसाणि जिह्वेन्द्रिये. Other MSS. add यान्यात्रसान्द्रक्ष्यति. O. has यद्यदेव रसं सायिष्यति यद्यद्रसं जि.

8) रसं वेदितव्यं added in A. Ca. W.

9) किं Cb. K.

10) दममनापं स्वा A. K. दमनापं स्वा B. W. त्वमममानमास्त्रा Cb

11) प्यमनापा A. B. W. प्यमनआत्म Cb. प्यमनआम K.

12) महारसं O

13) Left out in W.

14) Left out in K.

सत्त्वाः प्रीणितेन्द्रिया भविष्यन्ति तुष्टाः परमतुष्टाः[1] प्रामोद्यजाताः। मधुरश्चास्य वल्गुमनोज्ञस्वरो गम्भीरो निश्चरिष्यति हृदयंगमः प्रेमणीयः। तेनास्य ते सत्त्वास्तुष्टा उदग्रचित्ता भविष्यन्ति। येषां च धर्मं देशयिष्यति ते चास्य मधुरनिर्घोषं श्रुत्वा वल्गुमनोज्ञं देवा अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च[2]। देवपुत्रा अपि देवकन्या अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। शक्रा 5 अपि ब्रह्माणो ऽपि ब्रह्मकायिका अपि देवपुत्रा उपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। नागा नागकन्या अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। असुरा असुरकन्या अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। गरुडा गरुडकन्या अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। किंनराः किंनरकन्या अपि महोरगा 10 महोरगकन्या अपि यक्षा यक्षकन्या अपि पिशाचाः पिशाचकन्या अप्युपसंक्रमितव्यं मंस्यन्ते दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च। ते चास्य सत्कारं करिष्यन्ति गुरुकारं माननां पूजनामर्चनामपचायनां[3] करिष्यन्ति। भिक्षुभिक्षुण्युपासकोपासिका अपि दर्शनकामा भविष्यन्ति। राजानो ऽपि[4] राजपुत्रा अपि राजामात्या अपि राजमहामात्रा[5] अपि दर्शनकामा भविष्यन्ति। बलचक्रवर्तिनो ऽपि राजानश्चक्रवर्तिनो ऽपि[6] सप्तरत्नसमन्वागताः सकुमाराः सामात्याः सान्तःपुरपरिवारा दर्शनकामा भविष्यन्ति सत्कारार्थिनः। तावन्मधुरं स[7] धर्मभाणको धर्मं भाषिष्यते यथाभूतं[8] यथोक्तं तथागतेन। अन्ये ऽपि 15

---

1) परि A. K. W.

2) च left out in Cb. K.

3) अर्चनामपचायनां left out in A. K. W. O.

4) राजानो ऽपि left out in K.

5) Sic O. त्या the rest.

6) All but O. add राजानः.

7) सह A. B. Cb. W. O. स ध K.

8) त A. B. Cb.

ब्राह्मणगृहपतयो नैगमजानपदास्तस्य धर्मभाणकस्य सततसमितं समनुबद्धा भविष्यन्ति यावदायुष्पर्यवसानम्[1] । तथागतश्रावका अप्यस्य दर्शनकामा भविष्यन्ति । प्रत्येकबुद्धा अप्यस्य दर्शनकामा भविष्यन्ति । बुद्धा अप्यस्य भगवन्तो दर्शनकामा भविष्यन्ति । यस्यां च दिशि स कुलपुत्रो वा कुलदुहिता वा विहरिष्यति[2] तस्यां दिशि तथागताभिमुखं
5 धर्मं देशयिष्यति बुद्धधर्माणां च भाजनभूतो[3] भविष्यति । एवं मनोज्ञस्तस्य गम्भीरो धर्मशब्दो निश्चरिष्यति[4] ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

जिह्वेन्द्रियं तस्य विशिष्टु[5] भोति न जातु हीनं रस स्वादयेत ।
निक्षिप्तमात्राश्च भवन्ति दिव्या[6] रसेन दिव्येन समन्विताश्च ॥ ५२ ॥
10 वल्गुस्वरां मधुर प्रभाषते गिरां श्रवणीयमिष्टां च मनोरमां च ।
पर्षाय मध्यस्मि ह प्रेमणीयं गम्भीरघोषं च सदा प्रभाषते[7] ॥ ५३ ॥
यश्चापि धर्मं शृणुते ऽस्य भाषतो दृष्टान्तकोटीनयुतैरनेकैः[8] ।
प्रामोद्य तत्रापि जनेति सो ऽग्रं पूजां च तस्य कुरुते ऽप्रमेयाम् ॥ ५४ ॥
देवा पि नागासुरगुह्यकाश्च द्रष्टुं तमिच्छन्ति च नित्यकालम् ।
15 शृण्वन्ति[9] धर्मं च सगौरवाश्च इमे गुणास्तस्य भवन्ति सर्वे ॥ ५५ ॥

---

1) नात् Cb.
2) भावि Cb. विहर K.
3) नो O.
4) निश्चारयतीति W. All but O. add इति.
5) विशुद्ध O.
6) व्यः A. व्या B. W. O. व्यो Cb. व्यं K.
7) ति A. K. W. ते B. Cb. प्रमुंचति O.
8) हेतुनयुतान कोटिभिः O.
9) णो B. Cb. K. धर्मं च श्रवन्ति O.

आकाङ्क्षमाणा इम[1] लोकधातुं स्वरेण सर्वामभिविज्ञपेया[2]।
स्निग्ध[3] स्वरो ऽस्य मधुरश्च भोति गम्भीर वल्गुश्च सुप्रेमणीयः ॥ ५६ ॥
राजान ये क्षितिपति चक्रवर्तिनः पूजार्थिकास्तस्युपसंक्रमन्ति।
सपुत्रदारा करियाण अञ्जलिं शृणवन्ति[4] धर्म स्य च[5] नित्यकालम् ॥ ५७ ॥
यक्षाण चो भोति सदा पुरस्कृतो नागान गन्धर्वगणान चैव।
पिशाचकानां च पिशाचिकानां सुसत्कृतो मानितु पूजितश्च ॥ ५८ ॥
ब्रह्मा पि तस्य[6] वशवर्ति भोति महेश्वरो ईश्वर देवपुत्रः।
शक्रस्तथान्ये ऽपि च देवपुत्रा बहुदेवकन्याश्चुपसंक्रमन्ति ॥ ५९ ॥
बुद्धाश्च ये लोकहितानुकम्पकाः सश्रावकास्तस्य निशाम्य घोषम्[7]।
करोन्ति[8] रक्षां मुखदर्शनाय तुष्टाश्च भोन्ति[9] ब्रुवतो ऽस्य धर्मम्[10] ॥ ६०

पुनरपरं सततसमिताभियुक्त स बोधिसत्त्वो महासत्त्व इमं धर्मपर्यायं धारयमाणो वा वाचयमानो वा प्रकाशयमानो वा देशयमानो वा लिखमानो[11] वाष्टौ कायगुणशतानि प्रतिलप्स्यति[12]। तस्य कायः शुद्धः परिशुद्धो वैडूर्यपरिशुद्धच्छविवर्णो भविष्यति प्रियद- 10

1) पश्चिम Cb. अय (Skr. अयं) for इम O. preferable.
2) या A. K. W. न्या B. या: Cb. ति O.
3) स्निग्ध: B.
4) All but B. O. शृणोति.
5) धर्मोस्य तु O. धर्म and धर्म च स the rest.
6) तस्यो B.
7) षां A. षं B. Cb. O. षाम् K. षान् W.
8) कुर्वन्ति O. करोति the others.
9) All but O. भोन्ती.
10) MSS. add इति, O. excepted.
11) लिखि K. लिखिष्यति O. लिखापयमानो the rest.
12) ते B. Cb. Wanting in O.

र्शनः सत्त्वानाम् । स तस्मिन्नात्मभावे परिशुद्धे सर्वं त्रिसाहस्रमहासाहस्रं[1] लोकधातुं[2] द्रक्ष्य-
ति । ये च त्रिसाहस्रमहासाहस्रे[3] लोकधातौ सत्त्वाश्च्यवन्त्युपपद्यन्ते[4] च हीनाः प्रणीताश्च
सुवर्णा दुर्वर्णाः सुगतौ दुर्गतौ ये च चक्रवाडमहाचक्रवाडेषु मेरुसुमेरुषु[5] च पर्वतराजेषु
सत्त्वाः प्रतिवसन्ति ये चाधस्तादवीच्यामूर्ध्वं[6] च यावद्भवाग्रं सत्त्वाः प्रतिवसन्ति तान्सर्वान्स्व
5 आत्मभावे द्रक्ष्यति । ये चापि केचिदस्मिंस्त्रिसाहस्रमहासाहस्रे[7] लोकधातौ श्रावका वा
प्रत्येकबुद्धा वा बोधिसत्त्वा वा तथागता वा प्रतिवसन्ति यं च ते तथागता धर्मं देशयन्ति
ये च सत्त्वास्तांस्तथागतान्पर्युपासन्ते सर्वेषां तेषां सत्त्वानामात्मभावप्रतिलम्भान्स्व आत्म-
भावे द्रक्ष्यति । तत्कस्य हेतोः । यथापीदं परिशुद्धत्वादात्मभावस्येति ॥

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

10 परिशुद्ध तस्य[8] भवतेत्मभावो यथापि वैडूर्यमयो विशुद्धः ।
सत्त्वान नित्यं प्रियदर्शनश्च यः सूत्र धारेति इदं उदारम् ॥ ६१ ॥
आदर्शपृष्ठे[9] यथ बिम्बु पश्येत् लोको स्य काये अपु दृश्यते तथा ।
स्वयंभु सो पश्यति नान्यसत्त्वान्परिशुद्धि[10] कायस्यियमे[11]वंरूपा[12] ॥ ६२ ॥

---

1) स्र A. Cb. K. स्रं B. स्रे W.
2) तौ A. K. W. तुं B. Cb.
3) स्र A. B. K. W. स्रेयां Cb. (r. स्रायां).
4) न्ते उ in all MSS. but O.
5) सुमेरुमहासुमेरुषु B. Cb.
6) वीचिपूर्वं A. K. W. वाच्यादूर्ध्वं च B. Cb.
7) स्र A. W. स्रे B. K. स्रेयां Cb.
8) तस्यो Cb.
9) आदर्शस्य A.
10) शुद्धि our conjecture for शुद्ध of the MSS.
11) कायस्यियमे O. कायेस्मिममे the others.
12) रूपा A. W. पा B. K. पाः Cb. पम O.

ये लोकधातौ हि इहास्ति[1] सत्त्वा मनुष्यदेवासुरगुह्यका वा।
नरकेषु प्रेतेषु तिरश्चयोनिषु[2] प्रतिबिम्ब[3] संदृश्यति तत्र[4] काये ॥ ६३ ॥
विमान देवान भवाग्र यावच्छैलं पि च[5] पर्वत चक्रवाडम्[6]।
हिमवान्सुमेरुश्च[7] महांश्च मेरुः[8] कायस्मि[9] दृश्यन्तिमि[10] सर्वथैव[10] ॥ ६४ ॥
बुद्धां पि सो पश्यति ह्यात्मभावे सश्रावकान्बुद्धसुतांस्तथान्यान्। 5
ये बोधिसत्त्वा विहरन्ति चैकका गणे च ये धर्म प्रकाशयन्ति ॥ ६५ ॥
एतादृशो कायविशुद्धि तस्य यत्रि दृश्यते सर्विय[11] लोकधातुः।
न च ताव सो दिव्य त[12] प्राप्नुणोति प्रकृतीय कायस्यियमीदृशो भवेत[13] ॥ ६६ ॥

पुनरपरं सततसमिताभियुक्तास्य[14] बोधिसत्त्वस्य महासत्त्वस्य तथागते[15] परिनिर्वृत इमं[16] धर्मपर्यायं धारयतो देशयतः संप्रकाशयतो[17] लिखतो[18] वाचयतस्तैर्दशभिर्मनस्का- 10

---

1) धातूय O.

2) Sic O. योनौ the others.

3) म्बु A. W.

4) दृश्यन्ति हि तस्य O.

5) चो A. W.

6) डां A. W. डं B. Cb. K.

7) रुं A. W. रु B. Cb. K.

8) रुं A. W. रु B. रुः Cb. K.

9) कायो स्य Cb.

10) न्ति तथैव सर्वे B. K.

11) हि B.

12) I. e. Skr. दिव्यां ताम्.

13) MSS. have भवेदिति.

14) क्तास्य A. W. क्तस्य B. Cb. K.

15) तस्य B. Cb. K.

16) तस्येमं B. Cb. K.

17) सं in Cb. O. only.

18) लिखितो A. B. W. K. लिखिष्यति O. लिखापयतो in other MSS.

(1) रगुणशतैः समन्वागतं मनइन्द्रियं परिशुद्धं भविष्यति। स तेन परिशुद्धेन मनइन्द्रियेण गम्येकगाथामप्यन्तशः श्रोष्यति तस्य बह्वर्थमाज्ञास्यति। स तामवबुध्य (2) तन्निदानं (3) मासमपि धर्मं देशयिष्यति (3) चतुर्मासमपि संवत्सरमपि धर्मं देशयिष्यति। यं च धर्मं भाषिष्यति सा ऽस्य स्मृतो न स संप्रमोषं (4) यास्यति। ये केचिल्लौकिका लोकव्यवहारा भा-
5 ष्याणि वा मन्त्रा वा सर्वास्तान्धर्मनयेन संस्यन्दयिष्यति (5)। यावन्तश्च केचित्त्रिसाहस्रमहासाहस्रायां (6) लोकधातौ षट्सु गतिषूपपन्नाः सत्त्वाः संसरन्ति सर्वेषां तेषां सत्त्वानां चितचरितविस्पन्दितानि ज्ञास्यति। इञ्जित (7) मन्यित (8) प्रपञ्चितानि (9) ज्ञास्यति प्रविचिनिष्यति (10)। अप्रतिलब्धे च तावदार्यज्ञान एवंरूपं चास्य मनइन्द्रियं परिशुद्धं भविष्यति (11)। यां यां च धर्मनिरुक्तिमनुविचिन्त्य धर्मं देशयिष्यति सर्वं तद्भूतं (12) देशयिष्यति (13)। सर्वं तत्तथा-
10 गतभाषितं सर्वं पूर्वजिनसूत्रपर्यायनिर्दिष्टं भाषति (14)।

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत॥

---

1) मनस्कर्म K. O.

2) तां A. W. ति B. Cb. तं K. ह्वा तंनिदानं तदारम्बणां O.

3) K. adds स.

4) Sic O.; the others leave out सं.

5) संदर्श K. Reading of O. unknown.

6) स्र A. W. स्रे B. O. स्रां Cb. स्या K.

7) इंजित in all MSS.

8) मन्यित A. B. K. मवित Cb. मुत्पित W. A break in O.

9) प्रपंचता A. प्रपंचितां W. प्रपञ्चितानि B. K. प्रमुंचितानि Cb.

10) प्रविचेष्यंति Cb.

11) भवति B. K.

12) तं भूतं B. Cb. K. तद्भूतं A. W.

13) देशयति B. Cb. K.

14) भाषतीति B. Cb. K. भाषति O. भाषिष्यतीति A. Ca. W.

मनइन्द्रियं तस्य विशुद्ध भोति प्रभास्वरं प्रद्धमनाविलं च ।
सो तेन धर्मान्त्रिविधान्प्रजानाति[1] हीनानथोत्कृष्ट तथैव मध्यमान् ॥ ६७ ॥
एकामपि[2] गाथ श्रुणित्व धीरो अर्थं बहुं जानति तस्य तत्र ।
सत्कृतं च भूतं च सदा प्रभाषते[3] मासान्पि[4] चत्वारि अथापि वर्षम् ॥ ६८ ॥
ये चापि सत्वा इह लोकधातौ अभ्यन्तरे बाहिरिये वसन्ति ।     5
देवा मनुष्यासुरगुह्यकाश्च नागाश्च ये चापि तिरश्चयोनिषु[5] ॥ ६९ ॥
षट्सु गतीषु[6] निवसन्ति सत्वा विचिन्तितं तेष भवेत यं च[7] ।
एकक्षणे सर्वि[8] विदु विजानते धारेत्व[9] सूत्रं इम आनुशंसाः[10] ॥ ७० ॥
यं चापि बुद्धः शतपुण्यलक्षणो धर्मं प्रकाशेदिह सर्वलोके ।
तस्यापि[11] शब्दं शृणुते विशुद्धं यं चापि सो भाषति गृह्णते तत्[12] ॥ ७१ ॥     10
बहून्विचिन्तेति[13] च अग्रधर्मान्बहूंश्च सो भाषति नित्यकालम् ।
न चास्य संमोहु[14] कदाचि भोति धारेत्व[15] सूत्रं इम आनुशंसाः ॥ ७२ ॥

---

1) ति K. O. तो the rest.
2) पी A. पि B. Cb. K. W. O.
3) तो B. ति K. O. more original.
4) सां A. B. K. W. सं Ca. षा Cb. सो O.
5) Sic O.; योनौ the others.
6) षू K. W.
7) यञ्चा A. W. यश्च B. य च Cb. यञ्च K. Prākṛ. for यच्च.
8) र्व Cb. K.
9) रे B. Cb. K. रि A. Ca. W. O.
10) सा W.
11) य A.
12) तत् A. Cb. W. तं B. तां K.
13) न्त्यपि A. न्तेति B. Cb. K. न्तेपि W.
14) हु Cb. K.
15) रेति A. W. रेत्व B. रेत Cb. रेतु K.

संधिं विसंधिं च विजानते ऽसौ सर्वेषु धर्मेषु विलक्षणानि ।
प्रजानते अर्थं निरुक्तयश्च[1] यथा च तं जानति भाषते तथा ॥ ७३ ॥
यं भाषितं भोति हु[2] दीर्घरात्रं पूर्वेहि[3] लोकाचरियेहि[4] सूत्रम् ।
तं धर्म सो भाषति नित्यकालं असंत्रसन्तो[5] परिषाय मध्ये ॥ ७४ ॥
5 मनइन्द्रियं ईदृशमस्य[6] भोति धारेत्व सूत्रं इमु वाचयित्वा ।
न च ताव साङ्गं लभते हु ज्ञानं पूर्वंगमं तस्य इमं तु भोति ॥ ७५ ॥
आचार्यभूमौ हि स्थितश्च भोति सर्वेष सत्त्वान कथेय धर्मम् ।
निरुक्तिकोटीकुशलश्च भोति इमु धारयन्तो सुगतस्य सूत्रम्[7] ॥ ७६ ॥

॥ इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये धर्मभाणकानुशंसापरिवर्तो[8] नामाष्टादशमः[9] ॥

---

1) च्च A. W. ञ्च K.
2) हु A. B. W. हि Cb. च K.
3) पूर्वेण K.
4) ते K.
5) असंत्तसक्तो A. असंत्रसत्तो B. असंतमंतो Cb. असंतसंतो K. अथ संत्तसंत्तो W.
6) त Cb. K.
7) MSS. add इति.
8) इति सद्धर्मपुंडरीके षडायतनविशुध्यानुसंसापरिवर्त्तो A.
इति श्रीसद्धर्म° °ध्याअनु° W.
आर्यसद्धर्मपुण्डरीके धर्मपर्यायमहावैपुल्यसूत्रराजे धर्मभाणकानुसंसापरिवर्त्तो B.
धर्मभाणकानुसंसापरिवर्तो Ca. K.
°वर्त Cb.
9) ऊनविंशतिमः Cb.

# XIX.

अथ खलु भगवान्महास्थामप्राप्तं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म[1]। अनेनापि तावन्महास्थामप्राप्त पर्यायेणैवं वेदितव्यं यथा य[2] इममेवंरूपं धर्मपर्यायं प्रतिक्षेप्स्यन्ति[3]। एवंरूपांश्च[4] सूत्रान्तधारकांश्च[5] भिक्षुभिक्षुण्युपासकोपासिका आक्रोशिष्यन्ति[6] परिभाषिष्यन्ति असत्यया परुषया वाचा समुदाचरिष्यन्ति तेषामेवमनिष्टो विपाको भविष्यति यो न शक्यं वाचा परिकीर्तयितुम्[7]। ये चेममेवंरूपं सूत्रान्तं[8] धारयिष्यन्ति[9] वाचयिष्यन्ति[10] देशयिष्यन्ति[11] 5 पर्यवाप्स्यन्ति परेभ्यश्च[12] विस्तरेण संप्रकाशयिष्यन्ति तेषामेवमिष्टो[13] विपाको भविष्यति यादृशो मया पूर्वं परिकीर्तित एवंरूपां च चक्षुःश्रोत्रघ्राणजिह्वाकायमनःपरिशुद्धिमधिगमिष्यन्ति ॥

भूतपूर्वं महास्थामप्राप्तातीते ऽध्वन्यसंख्येयैः कल्पैरसंख्येयतरैर्विपुलैरप्रमेयैरचिन्त्यैस्तेभ्यः परेण परतरेण यदासीत्तेन कालेन तेन समयेन भीष्मगर्जितस्वर[14]राजो नाम 10

---

1) यामास A. K.

2) यं इ K. यद् left out in Cb. W.

3) ति A. B. W. न्ति K. क्षिपिस्यन्ति Cb

4) पाश्च A. B. K. W. प Cb.

5) कांश्च A. Cb. K. W. का B.

6) का आ A. Cb. K. W. कानां B. कान Ca.

7) कीर्तितुं A. W.

8) धर्मपर्यायं Cb.

9) धार left out in Cb.

10) Left out in A.

11) This word is put after पर्यवा° in B. Cb. K.

12) परेषाञ्च B. K.

13) व इ Cb. K.

14) A. adds निर्घोष. W. adds घोष.

तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्विनिर्भोगे कल्पे महासंभवायां[1] लोकधातौ। स खलु पुनर्महास्थामप्राप्त भगवान्भीष्मगर्जितस्वर[2]राजस्तथागतो[3] ऽर्हन्सम्यक्संबुद्धस्तस्यां[4] महासंभावायां[5] लोकधातौ सदेवमानुषासुरस्य लोकस्य पुरतो
5 धर्मं देशयति स्म। यदिदं श्रावकाणां चतुरार्यसत्यसंप्रयुक्तं धर्मं देशयति स्म जातिजराव्याधि[6]मरणशोकपरिदेवदुःखदौर्मनस्योपायाससमतिक्रमाय[7] निर्वाणपर्यवसानं प्रतीत्यसमुत्पादप्रवृत्तिम्। बोधिसत्त्वानां[8] महासत्त्वानां षट्पारमिताप्रतिसंयुक्तानामनुत्तरां सम्यक्संबोधिमारभ्य तथागतज्ञानदर्शनपर्यवसानं धर्मं देशयति स्म। तस्य खलु पुनर्महास्थामप्राप्त भगवतो भीष्मगर्जितस्वर[9]राजस्य[10] तथागतस्यार्हतः सम्यक्संबुद्धस्य चत्वारिंशद्-
10 गङ्गानदीवालिकासमानि[11] कल्पकोटीनयुतशतसहस्राण्यायुष्प्रमाणमभूत्। परिनिर्वृतस्य जम्बुद्वीपपरमाणुरजःसमानि कल्पकोटीनयुतशतसहस्राणि सद्धर्मः स्थितो ऽभूच्चतुर्द्वीप-परमाणुरजःसमानि[12] कल्पकोटीनयुतशतसहस्राणि सद्धर्मप्रतिरूपकः स्थितो ऽभूत्। तस्यां[13]

---

1) भावे B.

2) A. W. add घोष.

3) राजो तथा Cb. राजो नाम तथा K.

4) तस्मिं Ca. तस्यां वलायां Cb.

5) भवे B. Ca. महा left out in K.

6) व्याधि left out in K.

7) सा Cb. K. सानां O.

8) K. adds च.

9) A. adds निर्घोष. W. adds घोष.

10) Sic O.; स्य: the rest.

11) कोपमानि K.

12) A. K. W. add का. चतुर्द्वीपिकालोकधातुपरमाणुरजस O.

13) तस्मिन् B. Ca. तत्र O.

खलु पुनर्महास्थामप्राप्त महासंभवायां[1] लोकधातौ[2] भगवतो भीष्मगर्जितस्वरराजस्य[3] तथागतस्यार्हतः सम्यक्संबुद्धस्य परिनिर्वृतस्य सद्धर्मप्रतिरूपके चान्तर्हिते ऽपरो ऽपि भीष्मगर्जितस्वरराज[4] एव तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः[5] सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्[6]। अनया महास्थामप्राप्त परंपरया तस्यां महासंभवायां[7] लोकधातौ भीष्मगर्जितस्वरराजनाम्नां 5 तथागतानामर्हतां सम्यक्संबुद्धानां विंशतिकोटीनयुतशतसहस्राण्यभूवन्[8]। तत्र महास्थामप्राप्त यो ऽसौ तथागतः सर्वपूर्वको[9] ऽभूद्भीष्मगर्जितस्वरराजो[10][11] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः[12] शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। तस्य भगवतः परिनिर्वृतस्य सद्धर्मे ऽन्तर्हिते[13] सद्धर्मप्रतिरूपके चापध्र्यमाने तस्मिञ्शासने ऽधिमानिकभिक्षुवध्याक्रान्ते[14] सदापरिभूतो नाम बो- 10 धिसत्त्वो भिक्षुरभूत्। केन कारणेन महास्थामप्राप्त स बोधिसत्त्वो महासत्त्वः सदापरिभूत इत्युच्यते। स खलु पुनर्महास्थामप्राप्त बोधिसत्त्वो महासत्त्वो यं यमेव[15] पश्यति भिक्षुं वा

---

1) भवे B.

2) K. add तस्य.

3) A. W. add घोष. भीद्म for भीष्म O. So throughout.

4) A. W. add घोष.

5) From विद्या° till भगवान् left out in Cb.

6) From सुगतो till भगवान् left out in B. Ca. K.

7) तस्मिं °भवे A. B. W.

8) ती A. ति B. K. तिः Cb.

9) स च पौर्विको A. सर्वपूर्वको B. K. स च पूर्वको Cb.

10) A. adds घोष.

11) ज्ञा Cb. K. O.

12) नरपुरुष A. Ca. Cb. नरः पुरुष B. नरपुरुषः W.

13) र्मत्त A. W. र्मात्त B. Cb. र्मे त्त Ca. K.

14) भिक्षुभिरध्या K. भिक्षुभिस्तच्छासनमध्या O.

15) यमद्देव B. यद्येवं Cb. यं O.

भिक्षुणीं वोपासकं वोपासिकां वा तं तमुपसंक्रम्यैवं[1] वदति नाहमायुष्मन्तो युष्माकं[2] परिभवामि। अपरिभूता यूयम्[3]। तत्कस्य हेतोः। सर्वे हि भवन्तो बोधिसत्त्वचर्यां चरन्तु[3]। भविष्यथ यूयं तथागता अर्हन्तः सम्यक्संबुद्धा इति[4]। अनेन महास्थामप्राप्त पर्यायेण स[5] बोधिसत्त्वो महासत्त्वो भिक्षुभूतो नोद्देशं करोति न स्वाध्यायं करोति अन्यत्र यं यमेव पश्यात

5 दूरगतमपि सर्वं तमुपसंक्रम्यैवं संश्रावयति भिक्षुं वा भिक्षुणीं वोपासकं वोपासिकां वा तं तमुपसंक्रम्यैवं वदति। नाहं भगिन्यो युष्माकं परिभवामि। अपरिभूता यूयम्। तत्कस्य हेतोः। सर्वा यूयं बोधिसत्त्वचर्यां चरधम्[6] भविष्यथ यूयं तथागता अर्हन्तः सम्यक्संबुद्धाः। यं यमेव महास्थामप्राप्त स बोधिसत्त्वो महासत्त्वस्तस्मिन्समये भिक्षुं वा भिक्षुणीं वोपासकं वोपासिकां वैवं संश्रावयति[7]। सर्वे ऽस्य[8] यद्भूयेन[9] क्रुध्यन्ति व्यापद्यन्त्यप्रसादमुत्पादय-

10 न्त्याक्रोशन्ति परिभाषन्ते[10]। कुतो ऽयमपृष्टो भिक्षुरपरिभवचित्तमित्यस्माकमुपदर्शयति[11]। परिभूतमात्मानं करोति यदस्माकं[12] व्याकरोत्यनुत्तरायां सम्यक्संबोधौ असन्तमनाकाङ्क्षितं च[13]। अथ खलु महास्थामप्राप्त तस्य बोधिसत्त्वस्य महासत्त्वस्य बहूनि वर्षाणि तथाक्रु-

---

1) तेषामु O.

2) नाहं युष्माकमायुसाहो O. Certainly more original.

3) युष्मे मम O.

4) A. B. K W. न्ति. Cb. न्तु यूयं बोधिसत्वचारिका चरथ O.

5) In Cb. only.

6) चारिकां चरथ O.

7) A. W. K. add स्म.

8) सर्वस्य A. Cb. K. W. सर्वेस्य B ते तस्य सर्वे O.

9) भूयेन O.

10) Sic Cb. न्ति O.

11) चित्तमुत्पादयन्ति अपरिभवचित्तमित्यस्माकमु B. चित्तमुत्पादयति अस्माकमु Cb. अपरिभवनाचित्तता इत्यात्मनस्यो O.

12) स्मां B. K. W.

13) Left out in B. Cb.

श्यतः परिभाष्यमाणस्य[1] गच्छन्ति। न च कस्यचित्क्रुध्यति न व्यापादचित्तमुत्पादयति। ये चास्यैवं संश्रावयतो लोष्टं वा दण्डं[2] वा क्षिपन्ति स तेषां दूरत एव उच्चैःस्वरं कृत्वा संश्रावयति स्म[3]। नाहं युष्माकं[4] परिभवामीति। तस्य ताभिरभिमानिकभिक्षुभिक्षुण्युपा-[5][6] सकोपासिकाभिः सततसमितं संश्राव्यमाणाभिः[7] सदापरिभूत इति नाम कृतमभूत्[8]॥

तेन खलु पुनर्महास्थामप्राप्त सदापरिभूतेन बोधिसत्त्वेन महासत्त्वेन कालक्रियायां 5 प्रत्युपस्थितायां मरणकालसमये प्रत्युपस्थितेऽयं सद्धर्मपुण्डरीको धर्मपर्यायः श्रुतोऽभूत्। तेन च भगवता भीष्मगर्जितस्वरराजेन[9] तथागतेनार्हता सम्यक्संबुद्धेनायं धर्मपर्यायो विंशतिभिर्गाथाविंशतिकोटीनयुतशतसहस्रैर्भाषितोऽभूत्। स च सदापरिभूतो बोधिसत्त्वो महासत्त्वो मरणकालसमये प्रत्युपस्थितेऽन्तरीक्षनिर्घोषादिमं धर्मपर्यायमश्रौषीत्। येन केनचिद्भाषितमन्तरीक्षान्निर्घोषं श्रुत्वेमं धर्मपर्यायमुद्गृहीतवानिमां चैवंरूपां चक्षुर्विशुद्धिं 10 श्रोत्रविशुद्धिं घ्राणविशुद्धिं जिह्वाविशुद्धिं कायविशुद्धिं मनोविशुद्धिं च प्रतिलब्ध-वान्। सहप्रतिलब्धाभिर्विशुद्धिभिः पुनरन्यानि विंशतिवर्षकोटीनयुतशतसहस्राण्या-त्मनो जीवितसंस्कारमधिष्ठायेमं सद्धर्मपुण्डरीकं धर्मपर्यायं संप्रकाशितवान्[10]। ये च ते

---

1) भाष्यमाणस्य B. भाष्यमाणाः स Cb. भाषतो A. K. W. श्राक्रोश्यन्तस्य परिभायन्तस्य O.

2) क्रुध्यन्ति लेडुं वा O.

3) A. K. W. add स्म.

4) युष्मे श्रावुसा O.

5) तैर् B. तेभिरधिमानिकेभिर्भिक्षुभिरधिमानि ··· O.

6) काभिक्षु A. Cb. K. W. कैर्भिक्षु B. We propose to read: तैरभिमानिक-भिक्षुभिरभिमानिकाभिक्षुण्यु.

7) A. W. add भिरेवं वदति नाहं युष्माकं परिभवामीति॥ तस्यैतैः K. also adds in a similar way, ending as तस्य तैः.

8) कृतम left out in K.

9) A. K. W. add घोष.

10) संश्रावित B. Cb. From hence forward a break in O.

ऽभिमानिकाः सत्त्वा भिक्षुभिक्षुण्युपासकोपासिका ये पूर्वं नाहं युष्माकं परिभवामीति संभाविता येऽस्येदं[1] सदापरिभूत इति नाम कृतमभूत्तस्योदार[2]र्द्धिबलस्थाम[3] प्रतिज्ञा[4]प्रतिभानबलस्थामं प्रज्ञाबलस्थामं च दृष्ट्वा सर्वे ऽनुसहायीभूता अभूवन्धर्मश्रवणाय। सर्वे तेनान्यानि च बहूनि प्राणिकोटीनयुतशतसहस्राण्यनुत्तरायां सम्यक्संबोधौ समादापितान्य-

5 भूवन्॥

[5]स खलु पुनर्महास्थामप्राप्त बोधिसत्त्वो महासत्त्वस्ततश्च्युत्वा चन्द्रस्वरराजसहनाम्नां तथागतानामर्हतां सम्यक्संबुद्धानां विंशतिकोटीशतान्यारागितवान्सर्वेषु[6] चेमं धर्मपर्यायं संप्रकाशयामास[7]। सो ऽनुपूर्वेण तेनैव[8] पूर्वकेण कुशलमूलेन पुनरप्यनुपूर्वेण दुन्दुभिस्वरराजसहनाम्नां तथागतानामर्हतां सम्यक्संबुद्धानां विंशतिमेव[9] तथागतको-

10 टीनयुतशतसह[10]स्राण्यारागितवान्सर्वेषु चेममेव[11] सद्धर्मपुण्डरीकं धर्मपर्यायमारागितवान्संप्रकाशितवांश्चतसृणां पर्षदाम्। सो ऽनेनैव पूर्वकेण कुशलमूलेन पुनरप्यनुपूर्वेण मेघस्वरराजसहनाम्नां तथागतानामर्हतां सम्यक्संबुद्धानां विंशतिमेव[12] तथागतकोटीशतसह[13]स्रा-

---

1) स्यायं Cb.

2) कृतो ऽभू Cb.

3) तस्य सोदार K.

4) प्रतिज्ञा left out in K. A.

5) स B. K. W. अथ Cb. left out in A.

6) A. adds सद्धर्मपुंडरीकं नाम A. W. also add सद्धर्मपुंडरीकं.

7) A. reads संप्रकाशिवान् चतसृणां पर्षदां सर्वेषु चैवंरूपव चतुःपरिशुद्धा शयामास.

8) र्वि A. K. W.

9) रे B. K.

10) सहस्र left out in K. W.

11) वं B.

12) रे B. K.

13) सहस्र left out in B. Cb.

पर्यारागितवान्सर्वेषु चेममेव(1) सद्धर्मपुण्डरीकं धर्मपर्यायमारागितवान्संप्रकाशितवांश्चत-
सृणां पर्षदाम् । सर्वेषु चैवंरूपया चक्षुःपरिशुद्ध्या समन्वागतो ऽभूच्छ्रो(2)त्रपरिशुद्ध्या घ्राणप-
रिशुद्ध्या जिह्वापरिशुद्ध्या कायपरिशुद्ध्या मनःपरिशुद्ध्या समन्वागतो ऽभूत् ॥

स खलु पुनर्महास्थामप्राप्त सदापरिभूतो बोधिसत्त्वो महासत्त्व इयतां तथागतको-
टीनयुतशतसहस्राणां सत्कारं गुरुकारं माननां पूजनामर्चनामपचायनां कृत्वान्येषां च 5
बहूनां बुद्धकोटीनयुतशतसहस्राणां सत्कारं गुरुकारं माननां पूजनामर्चनामपचायनां
कृत्वा सर्वेषु च(3) तेष्विममेव(4) सद्धर्मपुण्डरीकं धर्मपर्यायमारागितवानारागयित्वा(5) स तेनैव
(6)पूर्वकेण कुशलमूलेन परिपक्वेनानुत्तरां सम्यक्संबोधिमभिसंबुद्धः(7) । स्यात्खलु पुनस्ते
महास्थामप्राप्तैवं काङ्क्षा वा विमतिर्वा विचिकित्सा वान्यः स तेन कालेन तेन समयेन
सदापरिभूतो नाम बोधिसत्त्वो महासत्त्वो ऽभूद्यस्तस्य भगवतो भीष्मगर्जितस्वर(8)राजस्य 10
तथागतस्यार्हतः सम्यक्संबुद्धस्य शासने चतसृणां पर्षदां सदापरिभूतः समन्ततो ऽभूद्येन ते
तावन्तस्तथागता अर्हन्तः सम्यक्संबुद्धा आरागिता अभूवन् । न खलु पुनस्ते महास्थाम-
प्राप्तैवं द्रष्टव्यम् । तत्कस्य हेतोः । अहमेव स महास्थामप्राप्त तेन कालेन तेन समयेन
सदापरिभूतो नाम बोधिसत्त्वो महासत्त्वो ऽभूवम्(9) । यदि मया महास्थामप्राप्त पूर्वमयं धर्म
पर्यायो नोद्गृहीतो ऽभविष्यन्न(10) धारितो नाहमेवं क्षिप्रमनुत्तरां सम्यक्संबोधिमभिसंबुद्धो 15

---

1) वं A. K. W.
2) ऽभूत् स श्रो A.
3) Left out in B. Cb. K.
4) वं A. K. W.
5) गित्वा A.
6) पौ K.
7) K. adds स्यात्.
8) A. W. add घोष.
9) भूवद् A. भूवन् B. Ca. भूवं K. भूत् W.
10) भविष्यति A. भविष्यत्त B. Ca. W. भविष्यत्तो Cb. भविष्यन् K.

ऽभविष्यम्[1]। यतश्चाहं महास्थामप्राप्त पौर्विकाणां[2] तथागतानामर्हतां सम्यक्संबुद्धानाम-
न्तिकादिमं धर्मपर्यायं धारितवान्वाचितवान्देशितवांस्ततो ऽहमेवं क्षिप्रमनुत्तरां सम्य-
क्संबोधिमभिसंबुद्धः। यान्यपि तानि महास्थामप्राप्त तेन सदापरिभूतेन बोधिसत्त्वेन
महासत्त्वेन भिक्षुशतानि भिक्षुणीशतानि चोपासक[3]शतान्युपासिकाशतानि च तस्य भगवतः
5 शासन इमं धर्मपर्यायं संश्रावितवान्यभूवन्। नाहं युष्माकं परिभवामीति[4]। सर्वे भवन्तो
बोधिसत्त्वचर्या चरन्तु[5]। भविष्यथ यूयं तथागता अर्हन्तः सम्यक्संबुद्धाः। यैस्तस्य बोधिस-
त्त्वस्यान्तिके व्यापाद[6]चित्तमुत्पादितमभूत् तैर्विंशतिकल्पकोटीनयुतशतसहस्रा[7]णि न जातु
तथागतो[8] दृष्टो ऽभून्नापि धर्मशब्दो न संघशब्दः श्रुतो ऽभूत्। दश च कल्पसहस्राण्यवीचौ
महानरके[9] दारुणां वेदनां वेदयामासुः। ते च[3] सर्वे तस्मात्कर्मावरणात्परिमुक्तास्तेनैव
10 बोधिसत्त्वेन महासत्त्वेन परिपाचिता अनुत्तरायां सम्यक्संबोधौ। स्यात्खलु पुनस्ते महा-
स्थामप्राप्त काङ्क्षा वा विमतिर्वा विचिकित्सा वा कतमे[10] तेन कालेन तेन समयेन ते सत्त्वा
अभूवन्ये ते तं बोधिसत्त्वं महासत्त्व[11]मुल्ला[12]पितवन्त उच्चघितवन्तः[13]। अस्यामेव महास्थामप्राप्त

---

1) भविष्य A. Ca. W. भविष्ये B. भवितव्यः Cb. भविष्यं K.

2) पौर्वि A. W. पौर्व B. Ca. A. पूर्व Cb.

3) च left out in Cb. K.

4) इति left out in K.

5) तः A. तः। W. चरता Cb. चरन्तो B. चरंतो K. चरन्तु our conjecture cp. p. 378.

6) दा K.

7) सहस्र left out in K.

8) त Cb.

9) महानिरये K.

10) K. adds ते.

11) महासत्त्व left out in A. K. W.

12) उल्ल A. Cb. K. W. उल्ला B.

13) A mistake for उज्झग्घ; cp. Pāli *ujjhagghati* and Skr. *jakṣat*.

पर्षदि[1] भद्रपालप्रमुखानि[2] [3] पञ्चबोधिसत्त्वशतानि सिंहचन्द्राप्रमुखानि[2] पञ्चभिक्षुणीशतानि सुगतचेतनाप्रमुखानि पञ्चोपासिकाशतानि सर्वाण्यवैवर्तिकानि कृतान्यनुत्तरायां सम्यक्संबोधौ । एवमियं महास्थामप्राप्त महार्थस्य धर्मपर्यायस्य धारणा वाचना[4] देशना[5] बोधिसत्त्वानां महासत्त्वानामनुत्तरायाः सम्यक्संबोधेराहारिका[6] संवर्तते । तस्मात्तर्हि महास्थामप्राप्तायं धर्मपर्यायो बोधिसत्त्वैर्महासत्त्वैस्तथागते परिनिर्वृत अभीक्ष्णं धारयितव्यो वाचयितव्यो देशयितव्यः[7] संप्रकाशयितव्य इति ॥ 5

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

अतीतमध्वानमनुस्मरामि भीष्मस्वरो राज जिनो यदासि ।

महानुभावो नरदेवपूजितः प्रणायको नरमरुयक्षरक्षसाम्[8] ॥ १ ॥

तस्य जिनस्य परिनिर्वृतस्य सद्धर्म संक्षोभि[9] व्रजन्ति पश्चिमे । 10

भिक्षु अभूषी तद बोधिसत्त्वो नामेन सो सदपरिभूत[10] उच्यते ॥ २ ॥

उपसंक्रमित्वा[11] तद भिक्षु अन्यानुपलम्भदृष्टीन तथैव भिक्षुणी[12] ।

परिभाव मह्यं[13] न कदाचिदस्ति यूयं हि चर्यां चरथाग्रबोधये[14] ॥ ३ ॥

---

1) परिषदि K.

2) पूर्वंगम A. W.

3) A. adds च.

4) In Cb. only.

5) A. W. add सहगतः पुण्यस्कंधः यः. K. adds पुण्योय च यो.

6) कः K.

7) Left out in A. B. W.

8) मरुराक्षसानां A. W. मरुयक्षराक्षसां B मरुयक्षरासान् Cb. मरुयक्षरात्तसाम् K.

9) भि A. B. भ Cb. K. भो W Perhaps to r. भि ०भ (for भं).

10) सदा A. W. सद B. Cb. K.

11) मा K.

12) णीं A. W. णी B. Cb. K. (Skr. णीः).

13) पभिवो मे A. W.

14) चर्या चर K.

एवं च संश्रावयि नित्यकालं आक्रोशपरिभाष सहन्तु तेषाम्[1]।
कालक्रियाया समुपस्थितायां श्रुतं इदं सूत्रमभूषि तेन ॥ ४ ॥
अकृत्व कालं तद् पण्डितेन[2] अधिष्ठहित्वा च सुदीर्घमायुः।
प्रकाशितं सूत्रमिदं तदासीत्तहि शासने तस्य विनायकस्य ॥ ५ ॥
5 ते चापि सर्वे बहु अोपलम्भिका बोधाय[3] तेन परिपाचितासीत्।
ततश्च्यवित्वान स बोधिसत्त्वो[4] आरागयी बुद्धसहस्रकोट्यः ॥ ६ ॥
अनुपूर्वपुण्येन कृतेन तेन प्रकाशयित्वा इमु[5] सूत्र नित्यम्।
बोधिं स संप्राप्त[6] जिनस्य पुत्रो अहमेव सो शाक्यमुनिस्तदासीत् ॥ ७ ॥
ये चापि भिक्षू तद्[7] अोपलम्भिका या भिक्षुणी ये च उपासका वा।
10 उपासिकास्तत्र[8] च यावदासीद्वे बोधि संश्रावित पण्डितेन ॥ ८ ॥
ते चापि[9] दृष्ट्वा बहुबुद्धकोट्य[10] इमे च ते पञ्चशता अनूनकाः।
तथैव भिक्षूण च भिक्षुणी च उपासिकाश्चापि[11] मि[12] मह्य संमुखम् ॥ ९ ॥

---

1) सहन्तु तेषां A. Cb. W. क्षमन्तु तेषां B. क्षमन्तु नित्यं K. भाष for भाषं.
2) अधि A. Cb. K. W. प्रति B.
3) बोधिय Ca. meant बोधीय; बोधाय the rest.
4) त्वो B. K. W. त्व the others.
5) म K. W.
6) प्र Cb. पृ K.
7) त तद् A. त्तु तद् B. त्तु वद् Cb. त्तू तद् K. त्तुस्तद् W.
8) का त A. K. W. कास्त B.
9) तेश्चापि A. B. Ca. K. W. ते चापि Cb.
10) ट्यः A. Cb. W. ट्य B. ट्या K.
11) स Cb.
12) श्चापिम A. श्चैवमि B. W. चैत्रपि Ca. श्चापिय Cb. श्चापिमि K.

सर्वे मया श्रावित अग्रधर्मं ते चैव सर्वे परिपाचिता मे[1]।
मयि निर्वृते चापिमि सर्वि धीरा इमु धारयिष्यन्ति[2] क सूत्रमग्रम् ॥ १० ॥
कल्पान[3] कोट्यो बहुभीरचिन्त्यैर्न कदाचिदीतादृश धर्म[4] श्रूयते।
बुद्धान कोटीशत चैव[5] भोन्ति न च ते पिमं[6] सूत्र प्रकाशयन्ति ॥ ११ ॥
[7]तस्माच्छ्रुणित्वा[8] इदमेवरूपं परिकीर्तितं धर्मु[9] स्वयं स्वयंभुवा।
[10]श्रारागयित्वा च पुनः पुनश्चिमं प्रकाशयेत्सूत्र ममेक निर्वृते[11] ॥ १२ ॥

॥ इति श्रीसद्धर्मपुण्डरीके[12] धर्मपर्याये सदापरिभूतपरिवर्तो[13] नामैकोनविंशतितमः ॥

---

1) तानि मे Ca. ता ये Cb
2) क्र K. क्रि the rest.
3) कोट्यो A. W. कोटी B. Ca. Cb. K.
4) धर्मु K.
5) बुद्धाना यो कोटीशत न्हि B. °शता कि Ca. Cb. बुद्धान पि कोटिशतानि K.
6) न च तादिमं A. B. Ca Cb. K. न च ते पि तं W.
7) य K.
8) म Ca. Cb.
9) Left out in Cb.
10) श्राधार Cb. read श्राराध्य.
11) MSS. have त इति ॥
12) श्रार्य (for इति श्री) K.
13) एकोन left out in Cb.

# XX.

अथ खलु यानि तानि साहस्र[1]लोकधातुपरमाणुरजःसमानि बोधिसत्त्वकोटीनयुतशतसहस्राणि पृथिवीविवरेभ्यो निष्क्रान्तानि तानि सर्वाणि[2] भगवतो ऽभिमुखमञ्जलिं प्रगृह्य भगवन्तमेतदूचुः। वयं भगवन्निमं धर्मपर्यायं तथागतस्य परिनिर्वृतस्य सर्वबुद्धक्षे-
5 त्रेषु यानि यानि[3] भगवतो बुद्धक्षेत्राणि यत्र यत्र भगवान्परिनिर्वृतो भविष्यति तत्र तत्र संप्रकाशयिष्यामः। अर्थिनो वयं भगवन्ननेनैवमुदारेण धर्मपर्यायेण धारणाय वाचनाय देशनाय[4] संप्रकाशनाय वा लिखनाय[5]॥

अथ खलु मञ्जुश्रीप्रमुखानि बहूनि[6] बोधिसत्त्वकोटीनयुत[7]शतसहस्राणि यान्यस्यां सहायां[8] लोकधातौ वास्तव्यानि[9] भिक्षुभिक्षुण्युपासकोपासिका[10]देवनागयक्षगन्धर्वासुरग-
10 रुडकिंनरमहोरगमनुष्यामनुष्या बहवश्च गङ्गानदीवालिको[11]पमा[12] बोधिसत्त्वा महासत्त्वा भगवन्तमेतदूचुः। वयमपि भगवन्निमं धर्मपर्यायं संप्रकाशयिष्यामस्तथागतस्य परिनिर्वृ-

1) साहस्रिक A. W. साहस्र B. Ca. K. त्रिसाहस्र Cb.

2) सर्वाणि तानि B. Ca. Cb.

3) Left out in K.

4) A. K. W. add वा.

5) A. W. add वा.

6) Left out in Ca.

7) कोटी left out in B.

8) अन्यस्मिं सहे B.

9) सन्तो A. वसन्ति B. W. वास्तव्यानि Cb. K.

10) का: B.

11) लु: B.

12) Rather कासमा.

तस्यादृष्टेनात्मभावेन[1] भगवन्नन्तरीते स्थिता घोषं संश्रावयिष्यामो ऽनवरोपितकुशलमूलानां च सत्त्वानां कुशलमूलान्यवरोपयिष्यामः ॥

अथ खलु भगवांस्तस्यां वेलायां[2] तेषां पौर्विकाणां[3] बोधिसत्त्वानां महासत्त्वानां गणिनां[4] महागणिनां[4] गणाचार्याणामेकं[5] प्रमुखं विशिष्टचारित्रं नाम बोधिसत्त्वं महासत्त्वं गणिनं[6] महागणिनं[6] गणाचार्यमामन्त्रयामास[7]। साधु साधु विशिष्टचारित्र। एवं युष्माभिः 5 करणीयमस्य धर्मपर्यायस्यार्थे। यूयं तथागतेन परिपाचिताः ॥

अथ खलु भगवाञ्शाक्यमुनिस्तथागतः स च भगवान्प्रभूतरत्नस्तथागतो ऽर्हन्सम्यक्संबुद्धः[8] परिनिर्वृतः स्तूपमध्ये सिंहासनोपविष्टौ[9] द्वावपि स्मितं प्रादुष्कुरुतो[10] मुखविवरान्तराभ्यां च जिह्वेन्द्रियं निर्णामयतः। ताभ्यां च[11] जिह्वेन्द्रियाभ्यां यावद्ब्रह्मलोकमनुप्राप्तस्ताभ्यां च[11] जिह्वेन्द्रियाभ्यां बहूनि रश्मिकोटीनयुतशतसहस्राणि निश्चरन्ति 10 स्म। तासु च रश्मिष्वेकैकस्या रश्मेर्बहूनि[12] बोधिसत्त्वकोटीनयुतशतसहस्राणि निश्चेरुः सुवर्णवर्णाः कायैर्द्वात्रिंशद्भिर्महापुरुषलक्षणैः समन्वागताः पद्मगर्भे सिंहासने निषण्णाः। ते च बोधिसत्त्वा दिग्विदिक्षु लोकधातुशतसहस्रेषु विसृताः[13] सर्वासु दिग्विदिक्ष्वन्तरीक्षे

---

1) स्यादृश्येना Cb. स्येदृशेना K
2) तस्यां वेलायां left out in A. K. W.
3) पूर्व Cb. K.
4) णी A. B. W.
5) वं A. W.
6) गणिं A. B. W. गणिनं (first) left out in K.
7) यते स्म B.
8) Left out in A. W.
9) ष्टौ A. W. ष्टः। B. Cb. K.
10) र्वतः A. W. रुतः B. Cb. र्वत्तः K.
11) Left out in K.
12) बहु A. W.
13) विनिश्रताः K. should be विनिःसृता.

स्थिता धर्मं देशयामासुः । यथैव भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धो जिह्वे-
न्द्रियेणर्द्धिप्रातिहार्यं करोति प्रभूतरत्नश्च तथागतो ऽर्हन्सम्यक्संबुद्धस्तथैव ते [1]सर्वे
तथागता अर्हन्तः सम्यक्संबुद्धा ये ते ऽन्यलोकधातुकोटीनयुतशतसहस्रेभ्यो ऽभ्यागता
रत्नवृक्षमूलेषु [2]पृथक्पृथक्सिंहासनोपविष्टा जिह्वेन्द्रियेणर्द्धिप्रातिहार्यं कुर्वन्ति ॥

5 अथ खलु भगवाञ्शाक्यमुनि[3]स्तथागतो ऽर्हन्सम्यक्संबुद्धस्ते च सर्वे तथागता
अर्हन्तः सम्यक्संबुद्धास्तमृद्ध्यभिसंस्कारं परिपूर्णं वर्ष[4]शतसहस्रं कृतवन्तः । अथ खलु वर्ष-
शतसहस्रस्या[5]त्ययेन ते तथागता अर्हन्तः सम्यक्संबुद्धास्तानि जिह्वेन्द्रियाणि पुनरेवो-
पसंहृत्यैकस्मिन्नेव क्षणलवमुहूर्ते समकालं सर्वैर्महासिंहोत्कासनशब्दः कृत एकश्चाच्छ-
टासंघातशब्दः[6] कृत[7]स्तेन च महोत्कासनशब्देन[8] महास्फोटासंघातशब्देन[9] यावन्ति दशसु
10 दिक्षु[10] बुद्धक्षेत्रकोटीनयुतशतसहस्राणि तानि सर्वाण्या[11]कम्पितान्यभूवन्प्रकम्पितानि संप्र-
कम्पितानि चलितानि प्रचलितानि संप्रचलितानि वेधितानि प्रवेधितानि संप्रवेधिता-
नि । तेषु च सर्वेषु[12] बुद्धक्षेत्रेषु यावन्तः सर्वसत्त्वा देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोर-
गमनुष्यामनुष्यास्ते ऽपि सर्वे बुद्धानुभावेन तत्रस्था एवमिमां[13] सहां लोकधातुं पश्यन्ति

---

1) सर्व MSS.
2) पृथक् पृथक् left out in B. Cb.
3) मुनिः प्रभूतरत्नश्च तथागतो A. W.
4) शत left out in B. Cb. K.
5) म्यासत्ययेन Cb.
6) सिंह added in A. K. W.
7) Left out in Cb.
8) A. Ca. W. add च.
9) Cb. B. add च. We expect महाच्छटा for °स्फोटा.
10) K. adds सर्व.
11) आ left out in Cb. K.
12) सर्व B. Ca. Cb Here the break in O. at an end.
13) एवं इ A. Ca. एव इ B. Cb. एवमि K. W. एव स्वेस्वे लोकधातौ O.

स्म[1]। तानि च सर्वतथागतकोटीनयुतशतसहस्राणि रत्नवृक्षमूलेषु[2] पृथक्पृथक्सिंहासनो-
पविष्टानि भगवन्तं च शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं[3] तं च भगवन्तं प्रभूतरत्नं
तथागतमर्हन्तं सम्यक्संबुद्धं परिनिर्वृतं[4] तस्य महारत्नस्तूपस्य मध्ये सिंहासनोपविष्टं
भगवता शाक्यमुनिना तथागतेन सार्धं निषण्णं ताश्चतस्रः पर्षदः[5] पश्यन्ति स्म[6]। दृष्ट्वा चाश्च-
र्यप्राप्ता अद्भुतप्राप्ता औद्बिल्यप्राप्ता अभूवन्। एवं चान्तरीक्षाद्घोषमश्रौषुः। एष[7] मार्षा 5
अप्रमेयाण्यसंख्येयानि लोकधातुकोटीनयुतशतसहस्राण्यतिक्रम्य सहा नाम लोकधातु-
स्तस्यां[8] शाक्यमुनिर्नाम तथागतोऽर्हन्सम्यक्संबुद्धः। स एतर्हि सद्धर्मपुण्डरीकं नाम
धर्मपर्यायं सूत्रान्तं[9] महावैपुल्यं[10] बोधिसत्त्वाववादं सर्वबुद्धपरिग्रहं बोधिसत्त्वानां महासत्त्वानां
संप्रकाशयति[11]। तं[12] यूयमध्याशयेनानुमोदध्वं तं च भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्य-
क्संबुद्धं[13] तं च भगवन्तं[14] प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं नमस्कुरुध्वम्[15]॥ 10

---

1) Left out in K. W. O.

2) A. B. Ca. W. leave out षु.

3) A. W. add सिंहासनोपविष्टं.

4) Left out in O.

5) परिषदः Cb. K.

6) Left out in Cb. K. O.

7) In all MSS.; consistent only in O. because धातु is regularly of masc. gender in it. But it would be easy to read एषा for एष.

8) तत्र C.

9) सूत्रं O.

10) Here वैपुल्यं also in O. instead of वैतुल्य.

11) K. adds स्म.

12) K. adds च.

13) From तं till °बुद्धं left out in W.

14) Left out in K.

15) K. adds पूजयध्वं च.

अथ खलु ते सर्व[1]सत्त्वा इमेवंरूपमन्तरीक्षान्निर्घोषं श्रुत्वा तत्रस्था एव नमो भगवते शाक्यमुनये तथागतायार्हते सम्यक्संबुद्धायेति वाचं भाषन्ते स्मा[2]ञ्जलिं प्रगृह्य। विविधांश्[3]च पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्त्रध्वजपताकावैजयन्त्यो येनेयं सहा[4] लोकधातुस्तेन क्षिपन्ति स्म नानाविधानि चाभरणानि पिनद्धानि हारार्धहा[5]रमणिरत्नान्यपि क्षिपन्ति स्म भगवतः शाक्यमुनेः प्रभूतरत्नस्य[6] च[7] तथागतस्य पूजाकर्मणो[8]। अस्य च सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य। ताश्च पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्त्रध्वजपताकावैजयन्त्यस्तानि च हारार्धहारमणिरत्नानि[9] क्षिप्तानीमां सहां लोकधातुमागच्छन्ति स्म। तैश्च पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्त्रध्वजपताकावैजयन्ती[10]राशिभिर्हारार्धहारैर्मणिरत्नैश्चास्यां सहायां लोकधातौ सार्धं तैरन्यैर्लोकधातुकोटीनयुतशतसहस्रैरेकीभूतैर्ये[11] तेषु तथागताः संनिषण्णास्तेषु सर्वेषु वैहायसे ऽन्तरीक्षे[12] समन्तान्[13]महापुष्पवितानं परिसंस्थितमभूत्॥

अथ खलु भगवांस्तान्विशिष्टचारित्रप्रमुखान्बोधिसत्त्वान्महासत्त्वानामन्त्रयामास। अचिन्त्यप्रभावाः कुलपुत्रास्तथागता अर्हन्तः सम्यक्संबुद्धाः। बहून्यप्यहं कुलपुत्राः

---

1) सर्व left out in K. O.

2) ला A. B. लोन् Cb. लाः K. लि W. इति वाचं भाषन्ते स्म left out in O. दृशनखाञ्जलिं O.

3) धां B. K.

4) यंतोन्यनेयंसहा A. यंतोन्येनेयं सहा W. यंत्यो येनायं सहो B. यंत्या येन सहा Cb. यन्त्यो येनेयं सहा K. Very different in O.

5) रा A. रां B. र Cb. रान् K.

6) Left out in B. Cb. K.

7) In W. only.

8) कर्मणि A. K. W. कर्मणा B. कारणे Cb.

9) K. reads हाराण्यर्धहाराणि च मणिरत्नानि च.

10) A. adds भी W. adds भि.

11) भूता ये K.

12) सर्वेष्वन्तरीक्षे वैहायसे B. Cb. K. O.

13) समन्तान् left out in B. Cb.

कल्पकोटीनयुतशतसहस्राण्यस्य धर्मपर्यायस्य परिन्दनार्थं नानाधर्मप्रमुखैर्बहूनानुशंसान्[1] भाषेयं न चाहं गुणानां पारं गच्छेयमस्य धर्मपर्यायस्य भाषमाणः[2]। संक्षेपेण कुलपुत्राः सर्वबुद्धधर्माः[3] सर्वबुद्धवृषभिता[4] सर्वबुद्धरहस्यं सर्वबुद्धगम्भीरस्थानं[5] मयास्मिन्धर्मपर्याये देशितम्। तस्मात्तर्हि कुलपुत्रा युष्माभिस्तथागतस्य परिनिर्वृतस्य सत्कृत्यायं धर्मपर्यायो धारयितव्यो देशयितव्यो[6] लिखितव्यो[6] वाचयितव्यः प्रकाशयितव्यो भावयितव्यः पूजयितव्यः। यस्मिंश्च कुलपुत्राः पृथिवीप्रदेशे ऽयं धर्मपर्यायो वाच्येत वा प्रकाश्येत वा देश्येत[7] वा लिख्येत वा चिन्त्येत वा भाष्येत[8] वा स्वाध्यायेत वा पुस्तकगतो वा तिष्ठेदारामे वा विहारे वा गृहे[9] वा वने[10] वा[10] नगरे वा वृक्षमूले वा प्रासादे वा लयने वा गुहायां वा तस्मिन्पृथिवीप्रदेशे तथागतमुद्दिश्य चैत्यं कर्तव्यम्। तत्कस्य हेतोः। सर्वतथागतानां हि स पृथिवीप्रदेशो बोधिमण्डो वेदितव्यस्तस्मिंश्च पृथिवीप्रदेशे सर्वतथागता[11] अर्हन्तः सम्यक्संबुद्धा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धा इति वेदितव्यं[12] तस्मिंश्च पृथिवीप्रदेशे सर्वतथागतैर्धर्मचक्रं प्रवर्तितं तस्मिंश्च पृथिवीप्रदेशे सर्वतथागताः परिनिर्वृता इति वेदितव्यम्[13]॥

---

1) Sic O. समंपर्यायां A. W. K. संशपयायं B. संसापयायां Cb.

2) णाः All but K. O.

3) बुद्ध left out in Cb.

4) ताः Cb. K. तं O.

5) रं (leaving out स्थानं) A.

6) Left out in B.

7) देश्येत in put in before प्रकाश्येत in Cb. K.

8) भाव्येत A. भाष्येत B. Ca. भाषेद्धा Cb.

9) गृहे is put in after वने in K.

10) Left out in Cb. The following नगरे वा left out in O.

11) सर्वे K. सर्वैभिस्तथागतैभिरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा O.

12) वेदितव्यास्त° and वेदितव्यस्त° the MSS.

13) Left out in Cb. K. वेदितव्याः A. B. Ca. W. We follow O.

अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत ॥

अचिन्तिया लोकहितान धर्मता[1] अभिज्ञज्ञानस्मि प्रतिष्ठितानाम् ।
ये ऋद्धि दर्शेन्ति[2] अनन्तचक्षुषः प्रमोच्यहेतोरिह सर्वदेहिनाम् ॥ १ ॥

जिह्वेन्द्रियं प्रापिय[3] सर्वलोकं रश्मीसहस्राणि प्रमुञ्चमानाः ।
5 आश्चर्यभूता इह[4] ऋद्धिदर्शिताः ते सर्वि[5] ये प्रस्थित अग्रबोधी ॥ २ ॥

उत्कासितं चापि करोन्ति बुद्धा एकाच्छटाये[6] च करोन्ति शब्दम् ।
ते विज्ञपेन्ति[7] इमु सर्वलोकं दशो दिशायां[8] इम लोकधातुम् ॥ ३ ॥

एतानि चान्यानि च प्रातिहार्यगुणान्[9] निदर्शेन्ति[10] हितानुकम्पकाः ।
कथं नु ते हर्षि तस्मि काले धारेयु सूत्रं सुगतस्य[11] निर्वृते ॥ ४ ॥

10 बहूं[12] पि कल्पान सहस्रकोट्यो वदेय वर्णा सुगतात्मजानाम् ।
ये धारयिष्यन्तिम[13] सूत्रम[14]ग्रं[15] परिनिर्वृते लोकविनायकस्मिन् ॥ ५ ॥

---

1) हितानुकंपा धर्मता A. हितानु धर्मता B. Ca. W. हितान धर्मता Cb. K. A break in O.

2) देशंति A. W. दर्शेंति B. Cb. K.

3) वि K.

4) इयम् Cb. K.

5) सार्थं A. प्रार्थि the rest. Our reading conjectural

6) एक K.

7) येन्ति K. यन्ती the rest.

8) दशो दशायां A. दिशो दशाया B देशो दशाया Cb. दशो दिशाया K. दसो दिसायां W.

9) र्या A. W. र्यान् B. Ca. र्याम Cb. र्यं K.

10) देर्शेति A.

11) सुगतस्मि K.

12) बहूं A. B. K. बहू Cb. W.

13) धारयंति A.

14) मम Cb.

15) अग्रं A. B. Ca. K. W. अग्रम् Cb. Cp. Pāli *aggam*.

न तेष पर्यन्त[1] भवेद्गुणानां आकाशधातौ हि यथा दिशासु ।
अचिन्तिया तेष गुणा भवन्ति[2] ये सूत्र धारेन्ति इदं[3] शुभं सदा[4] ॥ ६ ॥
दृष्टो अहं सर्व इमे च नायका अयं च[5] यो निर्वृतु लोकनायकः ।
इमे च सर्वे बहुबोधिसत्त्वाः पर्षाश्च चत्वारि अनेन दृष्टाः ॥ ७ ॥
अहं च आरागितु तेनिहाद्य इमे च आरागित सर्वि नायकाः । 5
अयं च यो निर्वृतको जिनेन्द्रो ये चापि अन्ये दशसु दिशासु ॥ ८ ॥
अनागतातीत तथा च बुद्धाः[6] तिष्ठन्ति[7] ये चापि दशसु दिशासु ।
ते सर्वि दृष्टाश्च सुपूजिताश्च भवेयु यो धारयि[8] सूत्रमेतत्[9] ॥ ९ ॥
रहस्यज्ञानं पुरुषोत्तमानां[10] यं बोधिमण्डस्मि विचिन्तितासीत्[11] ।
अनुचिन्तयेत्सो पि तु क्षिप्रमेव यो धारयेत्सूत्रिमु भूतधर्मम् ॥ १० ॥ 10
प्रतिभानु तस्यापि भवेदनन्तं यथापि वायुर्न कहिंचि सज्जति ।
धर्मे पि चार्थे च निरुक्ति जानति[12] यो धारयेत्सूत्रमिदं विशिष्टम्[13] ॥ ११ ॥

---

1) तु K.
2) भवेयुः Cb.
3) इमं B. Ca. Cb.
4) धारेन्ति सदा इमं शुभं K.
5) सो A. W.
6) बुद्धा ति A. B. K. W. बुद्धाः । ति Cb.
7) यु K.
8) तं Ca.
9) MSS. ज्ञाने.
10) यो A. ये B. Ca. Cb. K. यां W. यं, our reading, Skr. यत्.
11) I. e. तमासीत्.
12) ती A. B. Ca. W. ति Cb. K.
13) वरिष्ठं K.

अनुसंधि सूत्राण सदा प्रजानति संधाय[1] यं भाषितु[2] नायकेहि ।
परिनिर्वृतस्यापि विनायकस्य सूत्राण[3] सो ज्ञानति भूतमर्थम् ॥ १२ ॥
चन्द्रोपमः सूर्यसमः स भाति[4] आलोकप्रद्योतकरः स भोति ।
विचरन्तु सो मेदिनि तेन तेन समादपेती[5] बहुबोधिसत्त्वान् ॥ १३ ॥
5 तस्माद्धि ये पण्डित बोधिसत्त्वाः श्रुत्वानिहे[6] तादृश[7] आनुशंसा ।
धारेयु सूत्रं मम निर्वृतस्य न तेष[8] बोधाय[9] भवेत संशयः[10] ॥ १४ ॥
॥ इति श्रीसद्धर्मपुण्डरीके[11] धर्मपर्याये तथागतर्द्ध्यभिसंस्कारपरिवर्तो नाम विंशतितमः[12] ॥

1) सत्वाय A. Ca. सद्योय B. सत्वाव Cb. सन्धाय K. सत्काय W.
2) भाषपति K.
3) सूत्रेषु A. K.
4) भो Cb.
5) येमी A B. यत्ती Ca. येत्ती Cb. W. पेती K.
6) ज्ञि Ca. न्हे the rest.
7) शी A.
8) तेस्य A. W. तस्य the others. All wrong
9) All बोधाय.
10) All य इति ॥
11) आर्य K.
12) वर्तो एकविंशतितमः ॥ Cb.

# XXI.

अथ खलु भैषज्यराजो[1] बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य[2] भगवन्तमेतदवोचत्। कियद्भगवन्स[3] कुलपुत्रो वा कुलदुहिता वा पुण्यं प्रसवेद्य[4] इमं सद्धर्मपुण्डरीकं धर्मपर्यायं धारयेत्कायगतं वा पुस्तकगतं वा कृत्वा। एवमुक्ते भगवान्भैषज्यराजं बोधिसत्त्वं 5 महासत्त्वमेतदवोचत्। यः कश्चिद्भैषज्यराज कुलपुत्रो वा कुलदुहिता वाशीतिगङ्गानदीवालिका[5]समानि तथागत[6]कोटीनयुतशतसहस्राणि सत्कुर्याद्गुरु[7]कुर्यान्मानयेत्पूजयेत्तत्किं मन्यसे भैषज्यराज कियत्स कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु पुण्यं प्रसवेत्। भैषज्यराजो बोधिसत्त्वो महासत्त्व[8] आह। बहु भगवन्बहु सुगत। भगवानाह। आरोचयामि ते भैषज्यराज प्रतिवेदयामि। यः कश्चिद्भैषज्यराज कुलपुत्रो वा कुलदुहिता 10 वास्मात्सद्धर्मपुण्डरीकाद्धर्मपर्यायादन्तश एकामपि चतुष्पदीं गाथां धारयेद्वाचयेत्पर्यवाप्नुयात्प्रतिपत्त्या च[9] संपादयेदतः स भैषज्यराज कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहुतरं पुण्यं प्रसवेत्[10]॥

---

1) A. adds नाम.

2) All प्रणाम्य.

3) कियत्तं भ Cb. K. More original.

4) प्रसूयते। य Ca. प्रसवति। य Cb

5) लु Cb.

6) बुद्ध instead of तथागत in Cb.

7) सत्कृत्यकुर्या K.

8) In A. W. only.

9) वा A. K. W.

10) प्रसूयते B. Ca.

अथ खलु भैषज्यराजो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां भगवन्तमेतदवोचत् । दास्यामो वयं भगवंस्तेषां कुलपुत्राणां कुलदुहितॄणां [1] वा येषामयं सद्धर्मपुण्डरीको धर्मपर्यायः कायगतो वा स्यात्पुस्तकगतो वा [2] रक्षावरणगुप्तये धारणीमन्त्रपदानि । तद्यथा । अन्ये मन्ये [3] मने [4] ममने [4] चित्ते चरिते समे समिता [5] विशान्ते [6] मुक्ते मुक्ततमे [7] समे अविषमे [8] सम-
5 समे [9] जये [10] क्षये अक्षये [11] अक्षिणे [12] शान्ते समिते [13] धारणि [14] आलोकभाषे [15] प्रत्यवेक्षणि निधिरु [16][17] अभ्यन्तरनिविष्टे [18] अभ्यन्तरपारिशुद्धि [19] मुत्कुले [20] मुत्कुले अरडे परडे सुकाङ्क्षि [21] असमसमे बुद्ध-

---

1) वा A. K. W. च B. Ca. Cb

2) वा आर K.

3) A. W. add अरी परी अ; Cp. the list in Engl. transl. p. 371.

4) णि K.

5) ते K.

6) सा Ca.

7) ये A. W.

8) म A. B. Cb. K. W. य Ca.

9) Left out in Cb.

10) क्षे A. W.

11) Left out in Ca.

12) सा Ca. Cb.

13) मनी Ca. मामि Cb. शमि K.

14) णी A.

15) काभसे B. K. कावभाषे Cb.

16) निपिभि Ca. निवित Cb. निगिरु K.

17) A. W. add चिचिरु.

8) तरशिशिष्ट B. तरविमिष्ट Ca. तरप्रनिविष्टे W.

19) तरपारिशुद्धो B. तरविसुद्धो Ca. पारशुद्ध Cb. पारिशुद्ध K.

20) त्कू B क्कु K.

21) ङ्गो Ca. ङ्ग Cb. सुकाक्षो K.

विलोकिते[1] धर्मपरीक्षिते संघनिर्घोषणि निर्घोषणि[2] भयाभयविशोधनि[3] मन्त्रे मन्त्राक्षये[4] कृते कृतकौशल्ये धृतये[5] अतिपत्तनताये बक्कुले बलोडे[6] अमन्यनताये[7] स्वाहा[8]। इमानि भगवन्म[9]न्त्रधारणीपदानि द्वाषष्टिभिर्गङ्गानदीवालिका[10]समैर्बुद्धैर्भगवद्भिर्भाषितानि । ते सर्वे बुद्धा भगवन्तस्तेन द्रुग्धाः स्युर्य एवंरूपान्धर्मभाणकानेवंरूपान्सूत्रान्तधारकानतिक्रामेत्[11] ॥

अथ खलु भगवान्भैषज्यराजाय बोधिसत्त्वाय महासत्त्वाय[12] साधुकारमदात् । साधु साधु 5 भैषज्यराज[13] सत्त्वानामर्थः कृतो धारणीपदानि भाषितानि सत्त्वानामनुकम्पामुपादाय[14]। रक्षावरणगुप्तिः कृता[15] ॥

अथ खलु प्रदानशूरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । अहमपि भगवन्नेवंरूपाणां धर्मभाणकानामर्थाय[16] धारणीपदानि दास्यामि[17] यत्तेषामेवंरूपाणां धर्मभाणकानां

---

1) ति A. W.

2) णी A. B. णि K. नि W.

3) नी B. Ca. K. W.

4) जरे Cb.

5) ध left out in Ca.

6) A. adds वलोक.

7) न left out in Ca. while K. reads नन.

8) left out in A. Cb. W.

9) मन्त्र left out in Cb. K.

10) काम B. Ca. Cb. K. कोप A. W.

11) K. reads एवंरूपाणां धर्मभाणकानामेवरूपां.

12) Left out in K.

13) K. adds बहुजनास्ते भैषज्यराज.

14) कम्पाये A. Ca. W.

15) गुप्तिं कृत्वा A. W. गुप्तिः कृता B. Cb. K.

16) हेतोः (for अर्थाय) K.

17) यस्ते K.

न कश्चिदवतारप्रेक्ष्यवतारगवेष्यवतारं[1] लप्स्यते[2]। तद्यथा यक्षो वा राक्षसो वा पूतनो वा कृत्यो वा कुम्भाण्डो वा प्रेतो वावतारप्रेक्ष्यवतारगवेष्यवतारं[3] न[4] लप्स्यत इति। अथ खलु प्रदानशूरो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायामिमानि धारणीमन्त्र[5]पदानि भाषते स्म। तद्यथा। ज्वले महाज्वले उक्के[6] तुक्के[7] मुक्के[8] अडे[9] अडावति नृत्ये[10] नृत्यावति[11]
5 इट्टिनि[12] विट्टिनि चिट्टिनि[13][14] नृत्यनि नृत्यावति[15] स्वाहा[16]। इमानि[17] भगवन्धारणीपदानि गङ्गानदीवालिका[18]समैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्भाषितान्यनुमोदितानि च। ते सर्वे तथागतास्तेन द्रुग्धाः स्युर्य[19]स्तानेवंरूपान्धर्मभाणकानतिक्रमेत॥

अथ खलु वैश्रवणो महाराजो भगवन्तमेतदवोचत्। अहमपि भगवन्धारणीपदानि

---

1) गवेषी अवतारं न in Cb. only. न must be left out.

2) ति B. K.

3) अवतारं left out in Cb

4) न left out in B.

5) मन्त्र in Cb. only, while धारणी is left out in Cb.

6) उक्ते A.

7) मुक्के W. तुक्ते A. left out in B. Cb. K.

8) मक्ये A.

9) अत्रा A. अत Cb.

10) नृत्ये A. B. K left out in Cb.

11) तिटा B. नृत्य Cb. नृत्या K.

12) टि B. ट् Cb.

13) विटनि Cb. निट्टिनि K. Cb. adds निट्टनि.

14) त्ये Ca. Cb. त्य A.

15) व्या A.

16) In Cb. only. Cp. the lists in Engl. translation p. 372.

17) Cb. adds तानि.

18) लु Cb.

19) MSS. have स्युः ता.

भाषिष्ये तेषां धर्मभाणकानां हिताय सुखाया[1]नुकम्पायै रक्षावरणगुप्तये । तद्यथा । अट्टे[2] तट्टे नट्टे[3] वनट्टे[4] अनडे[5] नाडि[6] कुनडि[7] स्वाहा । एभिर्भगवन्धारणीपदैस्तेषां धर्मभाणकानां पुद्गलानां[8] रक्षां करोमि योजनशताच्चाहं तेषां कुलपुत्राणां कलदुहितॄणां चैवं[9]रूपाणां सूत्रान्तधारकाणां[10] रक्षा कृता भविष्यति स्वस्त्ययनं कृतं भविष्यति ॥

अथ खलु विरूढको महाराजो तस्यामेव पर्षदि संनिपतितो ऽभूत्संनिषण्णश्च 5 कुम्भाण्डकोटीनयुतशतसहस्रैः परिवृतः पुरस्कृतः । स उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा[11] येन भगवांस्तेनाञ्जलिं प्रणाम्य[12] भगवन्तमेतदवोचत् । अहमपि भगवन्धारणीपदानि[13] भाषिष्ये बहुजनहिताय[14] तेषां च[14] तथारूपाणां[14] धर्मभाणकानामेवंरूपाणां सूत्रान्तधारकाणां[15] रक्षावरणगुप्तये धारणीमन्त्रपदानि । तद्यथा । अगणे गणे गौरि[16] गन्धारि चण्डालि मात-

---

1) सुखाय in B. Cb. only.

2) Left out in B. Cb. K

3) Left out in B. Cb.

4) Left out in B.

5) अरत्रे A. अनत्रो Cb.

6) नात्रि A.

7) निकुरति Cb. कुनाडि K.

8) In Cb. only.

9) चै B. Cb. वै the rest.

10) K adds भिक्षूणां धर्मभाणकानां.

11) एकांस° कृत्वा left out in K. A. W.

12) MSS. प्रणाम्य.

13) In Cb. only.

14) In B. Cb. added पुद्गलानां.

15) एवंरूपाणां सूत्रान्तधारकाणां left out in Cb.

16) गो W.

ङ्ग पुक्कसि[1] संकुले[2] ब्रूमलि[3] सिसि[4] स्वाहा । इमानि तानि भगवन्धारणीमन्त्रपदानि यानि[6] द्वाचत्वारिंशद्भिर्बुद्धकोटीभिर्भाषितानि । ते सर्वे तेन द्रुग्धाः स्युर्यस्तानेवंरूपान्धर्मभाणकानतिक्रमेत ॥

अथ खलु लम्बा १ च नाम राक्षसी विलम्बा २ च नाम राक्षसी[7] कूटदन्ती ३ च नाम 5 राक्षसी पुष्पदन्ती ४ च नाम राक्षसी मकुटदन्ती[8] ५ च नाम राक्षसी केशिनी ६ च नाम राक्षस्यचला[9] ७ च नाम राक्षसी[10] मालाधारी ८ च नाम राक्षसी कुन्ती ९ च नाम राक्षसी सर्वसत्त्वोजोहारी[11] १० च नाम राक्षसी हारीती[12] ११ च नाम राक्षसी सपुत्रपरिवारा[13] एताः सर्वा राक्षस्यो येन भगवांस्तेनोपसंक्रान्ता उपसंक्रम्य सर्वास्ता राक्षस्य एकस्वरेण भगवन्तमेतदवोचन् । वयमपि भगवंस्तेषामेवंरूपाणां सूत्रान्तधारकाणां धर्मभाणकानां[14] रक्षावर-10 णगुप्तिं करिष्यामः स्वस्त्ययनं[15] च करिष्यामो यथा तेषां धर्मभाणकानां न कश्चिदवतारप्रेक्ष्यवतारगवेष्यवतारं लप्स्यतीति ॥

---

1) पोक्कसि A. पुक्कशि Ca. पोकसि W.

2) संगुलि Cb.

3) ब्रूसल A. ब्रूसण Cb.

4) सि Cb. left out in B. Ca. K.

5) मन्त्र in A. Ca. only.

6) यानि द्वा left out in K द्वा left out in Cb.

7) A. W. add प्रलंबा च नाम राक्षसी.

8) मट्टदंती A. मट्टचण्डी W.

9) सी अनला A. षी अचलना Cb.

10) A. W. add अचला च नाम राक्षसी.

11) सत्त्वतेजो Cb. सत्वओजो K. Cp. Engl. translation p. 374.

12) रि A.

13) सकल Cb.

14) In Cb. K. only.

15) In A. W. only.

अथ खलु ताः सर्वा राक्षस्य एकस्वरेण समं[1] संगात्या भगवत इमानि धारणीमन्त्रपदानि प्रयच्छन्ति स्म। तद्यथा। इति मे[2] इति मे इति मे इति मे इति मे[3]। निमे निमे निमे निमे निमे[4]। रुहे[2] रुहे रुहे रुहे रुहे[5]। स्तुहे[2] स्तुहे स्तुहे स्तुहे स्तुहे[6] स्वाहा। इमं[7] शोर्षं समारुह्य मा कश्चिद्द्रोही[8] भवतु धर्मभाणकानां यक्षो वा राक्षसो वा प्रेतो वा पिशाचो वा पूतनो[9] वा कृत्यो वा वेताडो[10] वा कुम्भाण्डो वा स्तब्धो[11] वोमारको[12] वोस्तारको[13] वापस्मारको[14] वा यक्षकृत्यो[15] वामनुष्यकृत्यो[15] वा मनुष्यकृत्यो[15] वा एकाह्निको[16] वा द्वैतीयको[17] वा त्रैतीयको[18] वा चतुर्थको[19] वा नित्यज्वरो वा विषमज्वरो[20] वान्तशः स्वप्नान्तरगतस्यापि 5

---

1) समं Cb. K. सम A. B.

2) B. adds here क्रम instead of repeating the same words four times.

3) A. reads क्रम for the last इति मे K. adds here ॥ ५ ॥ so in the following tree similar cases.

4) A. reads क्रम for the last निमे। But Cb. leaves out the latter three निमे altogether.

5) A. adds here क्रम.

6) A. adds here क्रम ॥ Cb reads रुस्ते five times instead of स्तुहे.

7) इमं A. Cb. K. W. इदं B.

8) MSS. रागी.

9) पूटो W. पुतनो A.

10) वेतात्रा A. भूतो Cb. वेताडो K.

11) स्कन्धो K. left out in B. Cb.

12) तारको Cb left out in K.

13) स्तारको W. वा ओस्तार B. वा स्तथो Cb. वा ओस्तारका K.

14) रको A. W. रपं B. रूपो Cb. रूप K.

15) तो Cb. K. in which मनुष्य is put in before अमनुष्य.

16) एकाह्निको Cb. K. वासुरकृत्यो the rest.

17) यको B. Cb. K. यकृतो W. कृत्यो A.

18) यको B Cb. K. यकृतो W. त्रै° left out in A.

19) र्थको K. थकृतो A. W.

20) विषमज्वरो वा in Cb. only.

स्त्रीरूपाणि वा पुरुषरूपाणि वा दारकरूपाणि वा दारिकारूपाणि वा विहेठां कुर्युर्नेदं[1] स्थानं विद्यते ॥

अथ खलु ता राक्षस्य एकस्वरेण समं संगीत्या भगवन्तमाभिर्गाथाभिरध्यभाषन्त[2] ॥

सप्तधास्य स्फुटेन्मूर्धा अर्जकस्येव[3] मञ्जरी ।

5 य इमं मन्त्र श्रुत्वा वै[4] अतिक्रमेद्धर्मभाणकम्[5] ॥ १ ॥

या गतिर्मातृघातीनां पितृघातीनां च या गतिः ।

तां गतिं प्रतिगच्छेद्यो[6] धर्मभाणकमतिक्रमेत् ॥ २ ॥

या गतिस्तिलपीडानां तिलकूटानां च या गतिः ।

तां गतिं प्रतिगच्छेद्यो[7] धर्मभाणकमतिक्रमेत् ॥ ३ ॥

10 या गतिस्तुलकूटानां मानकूटानां[8] च[9] या गतिः ।

तां गतिं प्रतिगच्छेद्यो[10] धर्मभाणकमतिक्रमेत् ॥ ४ ॥

एवमुक्त्वा ताः कुन्तिप्रमुखा राक्षस्यो भगवन्तमेतदूचुः । वयमपि[11] भगवंस्तेषामेवंरूपाणां धर्मभाणकानां रक्षां करिष्यामः स्वस्त्ययनं दण्डपरिहारं विषदूषणं[12] करिष्याम इति । एवमुक्ते भगवांस्ता राक्षस्य एतदवोचत् । साधु साधु भगिन्यो यद्यूयं तेषां धर्मभा-

---

1) कुर्यु नेदं A. W. कुर्यु नेतत् B. कुर्यावेन Cb. कुयान्नेतं K.
2) षन्ते स्म B. Cb. K.
3) स्फुटोत्मूधाम A. W. स्फुटा मूर्धम B. केले मूर्ध्ना अ Cb. स्फुटेत्मूर्धाम K.
4) य इमां मंत्रपदां श्रुत्वा वे A. °चे B. Cb. W. य इमम्मन्त्र श्रुत्वा चे K.
5) क्रा B.
6) च्छेया यो A. B. K. W. च्छेत् यो यं Cb.
7) च्छेया यो in all MSS.
8) कर्म Ca. कात्म Cb.
9) In Cb. only.
10) च्छेया यो A. Cb. K. W. च्छेयो Ca. च्छेय यो B.
11) Cb. adds भदंत.
12) विषदूषणं A. Ca. K. W. विषणाषणं Cb.

णकानां रक्षावरणगुप्तिं करिष्यध्वे ये[1] ऽस्य धर्मपर्यायस्यान्तशो नामधेयमात्रमपि धार-
यिष्यन्ति। कः पुनर्वादो य इमं धर्मपर्यायं सकलसमाप्तं धारयिष्यन्ति पुस्तकगतं वा[2] सत्कुर्युः[3]
पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीभि[4]स्तैलप्रदीपैर्वा घृतप्रदीपै-
र्वा[5] गन्धतैलप्रदीपैर्वा[5] चम्पकतैलप्रदीपैर्वा[6] वार्षिकतैलप्रदीपैर्वोत्पलतैलप्रदीपैर्वा सुम-
नातैलप्रदीपैर्वेदृशैर्बहुविधैः पूजाविधान[7]शतसहस्रैः सत्करिष्यन्ति गुरुकरिष्यन्ति[8] ते 5
त्वया कुन्ति सपरिवारया रक्षितव्याः ॥

अस्मिन्खलु पुनर्धारणीपरिवर्ते निर्दिश्यमान अष्टाषष्टीनां प्राणसहस्राणामनुत्प-
त्तिकधर्मक्षान्तिप्रतिलाभो[9] ऽभूत् ॥

॥ इति श्री[10]सद्धर्मपुण्डरीके धर्मपर्याये धारणीपरिवर्तो[11] नामैकविंशतिमः ॥

---

1) यो Cb.

2) Ca. B. add कृत्वा.

3) सत्कुर्यात् Cb.

4) वैजयन्ती in A. W only.

5) Left out in Cb.

6) Left out in B.

7) विधान left out in B. Ca. K.

8) सत्कुर्याद्गुरुकुर्यात्ति B. Ca. adds मानयेत्पूजयेत् K. reads सत्कुर्युर्गुरुकुर्युः.

9) लाभो A. W. लब्धो B. Cb. लम्भो Ca. K.

10) आर्य (for इति श्री) K.

11) नाम द्वा Cb.

# XXII.

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। केन कारणेन भगवन्भैषज्यराजो बोधिसत्त्वो महासत्त्वो ऽस्यां सहायां लोकधातौ प्रविचरति बहूनि चास्य भगवन्दुष्करकोटीनयुतशतसहस्राणि संदृश्यन्ते[1]। तत्साधु भगवान्देशयतु तथागतो ऽर्हन्सम्यक्संबुद्धो भैषज्यराजस्य बोधिसत्त्वस्य महासत्त्वस्य यत्किंचिच्चर्याप्रदेशमात्रं यच्छ्रुत्वा देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यास्तदन्यलोकधात्वागताश्च बोधिसत्त्वा महासत्त्वा इमे च महाश्रावकाः श्रुत्वा सर्वे प्रीतास्तुष्टा उदग्रा आत्तमनसो भवेयुरिति ॥

अथ खलु भगवान्नक्षत्रराजसंकुसुमिताभिज्ञस्य बोधिसत्त्वस्य महासत्त्वस्याध्येषणां विदित्वा तस्यां वेलायां नक्षत्रराजसंकुसुमिताभिज्ञं बोधिसत्त्वं महासत्त्वमेतदवोचत्। भूतपूर्वं कुलपुत्रातीते ऽध्वनि गङ्गानदीवालिकासमैः[2] कल्पैर्यदासीत्तेन कालेन तेन समयेन चन्द्रसूर्यविमलप्रभासश्रीर्नाम[3] तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्। तस्य खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ भगवतश्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्यार्हतः सम्यक्संबुद्धस्याशीतिकोट्यो[4] बोधिसत्त्वानां महासत्त्वानां महासंनिपातो[5] ऽभूद्वासप्त-

---

1) Cb. adds स्म.

2) लुकोप B. लुकास Cb.

3) विमल is put in between चन्द्र and सूर्य throughout this Chapter in A. W.

4) तिः Ca. K.

5) पतितो MSS.

गङ्गानदीवालिका[1]समाश्चास्य[2] श्रावकसंनिपातो[3] ऽभूत्। अपगतमातृग्रामं च तत्प्रवचनमभूदपगतनिरयतिर्यग्योनिप्रेतासुरकायं समं रमणीयं पाणितलजातं च[4] तद्बुद्धक्षेत्रमभूद्दिव्यवैडूर्यमयभूमिभागं रत्नचन्दनवृक्षसमलंकृतं च[4] रत्नजालसमीरितं[5] चावसक्तपट्टदामाभिप्रलम्बितं च रत्नगन्धघटिकानिर्धूपितं च। सर्वेषु च रत्नवृक्षमूलेष्विषुक्षेपमानमात्रे[7] रत्न- 5 व्योमकानि संस्थितान्यभूवन्सर्वेषु च रत्नव्योमकमूर्धसु कोटीशतं[8] देवपुत्राणां तूर्यताडावचर[9]संगीतिसंप्रभणितेनावस्थितमभूत्तस्य भगवतश्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्यार्हतः सम्यक्संबुद्धस्य पूजाकर्मणे। स च भगवानिमं सद्धर्मपुण्डरीकं धर्मपर्यायं तेषां महाश्रावकाणां तेषां च बोधिसत्त्वानां महासत्त्वानां विस्तरेण संप्रकाशयति स्म सर्वसत्त्वप्रियदर्शनं बोधिसत्त्वं महासत्त्वमधिष्ठानं[10] कृत्वा। तस्य खलु पुनस्तत्रागतसंकुसुमिताभिज्ञ 10 भगवतश्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्यार्हतः सम्यक्संबुद्धस्य द्वाचत्वारिंशत्[11]कल्प[12]सहस्राण्यायुष्प्रमाणमभूत्तेषां च बोधिसत्त्वानां महासत्त्वानां तेषां च महाश्रावकाणां तावदेवायुष्प्रमाणमभूत्। स च सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तस्य भगवतः प्रवचने दुष्करचर्याभियुक्तो ऽभूत्। स द्वादश वर्षसहस्राणि चङ्क्रमाभिरूढो ऽभून्महावीर्यारम्भेण योगाभियुक्तो ऽभूत्। स द्वादशानां वर्षसहस्राणामत्ययेन सर्वरूपसंदर्शनं नाम समाधिं

---

1) लु B.
2) स्य left out in B. Cb
3) च added in Cb.
4) Left out in B. K.
5) सच्छत्रादितं B. सच्छ्रोदितं Ca सच्छादितं K. समीरितं A समीलितं W
6) K. adds नन्दन.
7) मात्रेण A. B. Cb. W.
8) त K.
9) रं K.
10) K. puts सम् in between सत्त्वम् and अधि.
11) द्वा in Ca. only.
12) कोटी added in Cb.

प्रतिलभते[1] स्म। सहप्रतिलम्भाच्च तस्य समाधेः स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महा-
सत्त्वस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तस्यां[2] वेलायामेवं चिन्तयामास।
इमं सद्धर्मपुण्डरीकं धर्मपर्यायमागम्यायं मया सर्वरूपसंदर्शनः समाधिः प्रतिलब्धः। तस्यां[3]
वेलायां स[4] सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्व एवं चिन्तयति स्म। यन्न्वहं भगवत-
5 श्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्य पूजां कुर्यामस्य च सद्धर्मपुण्डरीकस्य धर्मपर्या-
यस्य। स तस्यां वेलायां तथारूपं समाधिं समापन्नो[5] यस्य समाधेः समनन्तरसमापन्नस्य
सर्वसत्त्वप्रियदर्शनस्य बोधिसत्त्वस्य महासत्त्वस्याथ तावदेवोपर्यन्तरीक्षान्मान्दारवमहामा-
न्दारवाणां[6] पुष्पाणां महत्तं पुष्पवर्षमभिप्रवृष्टम्। कालानुसारिचन्दनमेघः कृत[7] उरगसा-
रचन्दनवर्षमभिप्रवृष्टम्। तादृशी च नलत्रराजसंकुसुमिताभिज्ञ सा गन्धजातिर्यस्या एकः
10 कर्ष इमां[8] सहालोकधातुं मूल्येन नमति[9]॥

अथ खलु पुनर्नलत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वः
स्मृतिमान्संप्रजानंस्तस्मात्समाधेर्व्युदतिष्ठद्व्युत्थाय[10] चैवं चिन्तयामास। न तथार्द्धिप्रातिहा-
र्यसंदर्शनेन भगवतः पूजा[11] कृता[12] भवति यथात्मभावपरित्यागेनेति। अथ खलु पुनर्नलत्रा-

---

1) K. adds समापन्न.

2) Ca. adds च.

3) K. adds च.

4) Left out in B. Cb. K.

5) समापद्यतः A. W.

6) नन्दा A. K. W.

7) घं कृतोर A. घ कृतोर K. W. घं च कृतोर B. घं च कृत्वा उर. We propose मेघाकृतरू Cb.

8) इयं A. B. K. W. इमं Cb.

9) मूल्य न नमते Cb. मूल्यन्न नमति K. मूल्यं नमते A. B. Ca. W.

10) नन्स्त K. ज्ञानवांस्ततः समा B. ज्ञानन्ततः समा Cb.

11) पूजां A. Cb. W. पूजा B. पूजान् K.

12) कृत्वा Cb

क्षत्रसंकुसुमिताभिज्ञ स[1] सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायामगरुतुरुष्क-कुन्दुरुकरसं[2] भक्षयति[3] स्म चम्पकतैलं च पिबति स्म। तेन[4] खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ पर्यायेण तस्य सर्वसत्त्वप्रियदर्शनस्य बोधिसत्त्वस्य महासत्त्वस्य सततसमितं गन्धं भक्षयतश्चम्पकतैलं च[5] पिबतो द्वादशवर्षाण्यतिक्रान्तान्यभूवन्। अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स[6] सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तेषां द्वादशानां वर्षाणामत्ययेन 5
तं[7] स्वमात्मभावं दिव्यैर्वस्त्रैः परिवेष्ट्य गन्धतैलप्लुतं[8] कृत्वा स्वकमधिष्ठानमकरोत्स्वकमधिष्ठानं कृत्वा स्वं[9] कायं प्रज्वालयामास तथागतस्य पूजाकर्मणेऽस्य च सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य पूजार्थम्। अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ तस्य सर्वसत्त्वप्रियदर्शनस्य बोधिसत्त्वस्य महासत्त्वस्य ताभिः कायप्रदीपप्रभा[10]ज्वालाभिरशीति[11]गङ्गानदीवालिकासमा लोकधातवः स्फुटा अभूवन्। तासु[12] च लोकधातुष्वशीति[13]गङ्गानदीवालिकासमा[14] एव[15] बुद्धा 10
भगवन्तस्ते सर्वे साधुकारं ददन्ति स्म। साधु साधु कुलपुत्र साधु खलु पुनस्त्वं कुलपुत्रायं

---

1) Left out in Cb K.
2) रु left out in K.
3) क्षय K.
4) अनेन K.
5) Left out in Cb. K.
6) Left out in B. Cb. K.
7) तं A. B. K. W. ततश्च Cb.
8) गन्ध left out in B. Cb. K.
9) स्वं B. स्व K. left out in A. Cb. W.
10) प्रमुखाभिः added in A. B. Ca.
11) ज्वालाप्रभा A. K. प्रभाज्वाला B ज्वालाप्रमुखा Cb. ज्वाला W.
12) All but K. तेषु.
13) तिर्ग Ca.
14) लु K.
15) एवं K. left out in W.

स भूतो बोधिसत्त्वानां महासत्त्वानां वीर्यारम्भ इयं सा भूता तथागतपूजा धर्मपूजा। [1]न तथा[2] पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकापूजा नाप्यामिषपूजा नाप्युरगसार-चन्दनपूजा। इदं तत्कुलपुत्राग्रप्रदानं न तथा राज्यपरित्यागदानं न प्रियपुत्रभार्यापरित्या-गदानम्। इयं पुनः कुलपुत्र विशिष्टाग्रा वरा प्रवरा प्रणीता धर्मपूजा यो ऽयमात्मभावप-

5 रित्यागः[3]। अथ खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ ते बुद्धा भगवन्त इमां वाचं भाषित्वा तूष्णीमभूवन्॥

तस्य खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ सर्वसत्त्वप्रियदर्शनात्मभावस्य दीप्यतो द्वादश वर्षशतान्यतिक्रान्तान्यभूवन्न च प्रशमं गच्छति स्म। स पश्चाद्द्वादशानां वर्षशता-नामत्ययात्[4]प्रशान्तो ऽभूत्। स खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ सर्वसत्त्वप्रियदर्शनो बो-

10 धिसत्त्वो महासत्त्व एवंरूपां तथागतपूजां च धर्मपूजां च कृत्वा ततश्च्युतस्तस्यैव भगवत-श्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने राज्ञो विमलदत्तस्य गृह उपपन्न औपपादिक[5] उत्सङ्गे पर्यङ्केणा[6] प्रादुर्भूतो ऽभूत्। समनन्तरोपपन्नश्च खलु पुनः स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां स्वमाता[7]पितरौ[8] गाथयाध्यभाषत॥

अयं ममा[9] चङ्क्रम[10] राज श्रेष्ठ यस्मिं[11] मया स्थित्व समाधि लब्धः।

15 वीर्यं दृढं आरभितं[12] महाव्रतं परित्यजित्वा प्रियमात्मभावम्॥ १॥

---

1) Left out in Cb.

2) तथागतस्य A.

3) MSS. have त्यागेति.

4) त्ययेन Cb. K.

5) डु B. Cb.

6) न A. Cb. W. णा B. left out in K.

7) स्वं B. K. स्वा Cb.

8) मातरं K. All पितरं.

9) मया B.

10) मु Cb. मे K.

11) यस्मिन् in all MSS.

12) भतुं K.

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्व इमां गाथां भाषित्वा[1] स्वमातापितरावेतदवोचत् । अद्याप्यम्ब[2] तात स भगवांश्चन्द्रसूर्यविमलप्रभासश्रीस्तथागतो ऽर्हन्सम्यक्संबुद्ध एतर्हि तिष्ठति ध्रियते यापयति[3] धर्मं देशयति यस्य मया भगवतश्चन्द्रसूर्यविमलप्रभासश्रियस्तथागतस्य[4] पूजां कृत्वा सर्वरुतकौशल्यधा[5]रणी प्रतिलब्धायं च सद्धर्मपुण्डरीको धर्मपर्यायो ऽशीतिभिर्गाथाकोटीनयुतशतसहस्रैः 5 कङ्करैश्च विवरै[6]श्चाक्षोभ्यैश्च तस्य भगवतो ऽन्तिकाच्छ्रुतो ऽभूत् । तत्साधम्ब तात गमिष्याम्यहं तस्य भगवतो ऽन्तिकं[7] तस्मिंश्च गत्वा भूयस्तस्य भगवतः पूजां करिष्यामीति । अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां सप्ततालमात्रं वैहायसमभ्युद्गम्य सप्तरत्नमये कूटागारे पर्यङ्कमाभुज्य[8] तस्य भगवतः सकाशमुपसंक्रान्त[9] उपसंक्रम्य तस्य[10] भगवतः पादौ शिरसाभिवन्द्य[11] तं भगवन्तं सप्तकृत्वः[12] प्रदक्षि- 10 णीकृत्य[13] येन[14] स भगवांस्तेनाञ्जलिं प्रणाम्य तं भगवन्तं नमस्कृत्वानया गाथयाभिष्टौ[15]ति स्म ॥

---

1) स्वं मातापितरमे A. B. Ca. स्वमातापितरावेतद् Cb. तौ स्वौ मातापितरौ एतद् K.

2) All but K. add स्य.

3) A. adds सत्त्वानां.

4) From श्च till गतस्य in Ca. Cb. only.

5) ल्या A. K.

6) विम्बरै A. विस्वरै B. K. W. कविवरै Cb.

7) के A. W.

8) भुजित्वा K.

9) संक्रामद्भुप B. Cb. K.

10) In B. only.

11) वन्दित्वा K.

12) त्य Cb. त्व K.

13) कृत्वा K.

14) स only in K.

15) ष्टौ A. W. ष्टुव B. ष्टुवं Cb. स्तव K. more original.

सुविमलवदना[1] नरेन्द्र धीरा[2] तव प्रभ राजतियं[3] दशादिशासु[4]।
तुभ्य[5] सुगत कृत्व अग्रपूजां अहमिह आगतु नाथ दर्शनाय ॥ २ ॥

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्त-
स्यां वेलायामिमां गाथां भाषित्वा तं भगवन्तं चन्द्रसूर्यविमलप्रभासश्रियं तथागतमर्हन्तं
5 सम्यक्संबुद्धमेतदवोचत्। अद्यापि त्वं भगवंस्तिष्ठसि। अथ खलु नक्षत्रराजसंकुसुमिता-
भिज्ञ स भगवांश्चन्द्रसूर्यविमलप्रभासश्रीस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तं सर्वसत्त्वप्रियदर्शनं
बोधिसत्त्वं महासत्त्वमेतदवोचत्। परिनिर्वाणकालसमयो मे कुलपुत्रानुप्राप्तः क्षयान्तकालो
मे कुलपुत्रानुप्राप्तस्तिद्गच्छ[6] त्वं[7] कुलपुत्र मम मञ्चं प्रज्ञपयस्व परिनिर्वायिष्यामीति[8]। अथ
खलु नक्षत्रराजसंकुसुमिताभिज्ञ स भगवांश्चन्द्रसूर्यविमलप्रभासश्रीस्तथागतस्तं सर्वसत्त्व-
10 प्रियदर्शनं बोधिसत्त्वं महासत्त्वमेतदवोचत्। इदं च[9] ते कुलपुत्र शासनमनुपरिन्दामीमांश्च[10]
बोधिसत्त्वान्महासत्त्वानिमांश्च महाश्रावकानिमां च बुद्धबोधिमिमां च लोकधातुमिमानि
च रत्नव्योमकानीमानि च रत्नवृक्षाणीमांश्च देवपुत्रान्ममोपस्थायकाननुपरिन्दामि[11][12][13]। परि-

---

1) नो Cb.
2) धीरा A. W. वीरा B. Cb. K.
3) प्रभत्राजते A. प्रभया राजति Cb. प्रभ राजते W.
4) हि A. दि B. Cb. K. W.
5) तुभ्यं च MSS against the metre.
6) From क्षया till प्राप्तस् left out in Cb.
7) त्व A. W. स्त्वं B. स्त्व K.
8) वायिष्या Cb. वापयिष्या K. वास्यामि A. B. Ca. W.
9) इमञ्च B. K.
10) परिददा A. परिंददा W. परिन्दा B. Cb. शासनमनुपरिन्दा K.
11) त्म K.
12) यि Cb.
13) काननुपरिंददा A. काननुपरिंदा K.

निर्वृतस्य च मे कुलपुत्र ये धातवस्ताननुपरिन्दामि[1]। आत्मना[2] च त्वया कुलपुत्र मम धातूनां[3] विपुला पूजा कर्तव्या वैस्तारिकाश्च[4] ते धातवः कर्तव्याः स्तूपानां च[5] बहूनि सहस्राणि कर्तव्यानि। अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स भगवांश्चन्द्रसूर्यविमलप्रभासश्रीस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तं सर्वसत्त्वप्रियदर्शनं बोधिसत्त्वं महासत्त्वमेवमनुशिष्य[6] तस्यामेव रात्र्यां पश्चिमे यामे ऽनुपधिशेषे निर्वाणधातौ परिनिर्वृतो ऽभूत्॥

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तं भगवन्तं चन्द्रसूर्यविमलप्रभासश्रियं तथागतं परिनिर्वृतं विदित्वोरगसारचन्दनचितां[7] कृत्वा तं तथागतात्मभावं संप्रज्वालयामास[8]। दग्धं निशान्तं च[9] तथागतात्मभावं विदित्वा ततो धातून्गृहीत्वा[10] रोदिति क्रन्दति परिदेवते[11] स्म। अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वो रुदित्वा क्रन्दित्वा परिदेवित्वा[12] सप्तरत्नमयानि 10 चतुरशीति[13]कुम्भ[14]सहस्राणि कारयित्वा तेषु तांस्त[15]थागतधातून्[16]प्रक्षिप्य सप्तरत्नमयानि चतु-

---

1) स्ताननुपरिंददा A. स्ताननुपरिंदा Cb. K. W.
2) ना Ca.
3) धातुस्तूपानां A. W.
4) श्चैव B.
5) In Cb. only.
6) शास्य अस्यामेव K.
7) W. adds मय.
8) सं left out in K
9) तं added in B.
10) धातु गृहीत्वा A. Cb. W. धातू गृह्य B. K.
11) ति Cb. K.
12) देव्य A. Ca. W.
13) तिं W.
14) तिस्रय (for कुम्भ) Cb.
15) तं A. W. तां B. K. left out in Cb.
16) धातुं A. W.

दृशीतिस्तूपसहस्राणि प्रतिष्ठापयामास यावद्ब्रह्मलोकमुच्चैस्त्वेन च्छत्त्रावलीसमलंकृतानि[1] पट्टघण्टासमीरितानि च । स तान्स्तूपान्प्रतिष्ठाप्यैवं चिन्तयामास । कृता मया तस्य भगवतश्चन्द्रसूर्यविमलप्रभाश्रियस्तथागतस्य धातूनां[2] पूजा यतश्च भूय उत्तरिविशिष्टतरां तथागतधातूनां[3] पूजां करिष्यामीति । अथ खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तं सर्वावन्तं बोधिसत्त्वगणं तांश्च महाश्रावकांस्तांश्च देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यगणानामन्त्रयामास[4] । सर्वे यूयं कुलपुत्राः समन्वाहरध्वं तस्य भगवतो धातूनां पूजां करिष्याम इति । अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां तेषां चतुरशीतीनां तथागतधातु[5]स्तूपसहस्राणां पुरस्ताच्छतपुण्यविचित्रितं स्वं बाहुमादीपयामासादीप्य च 10 द्वासप्तति[6]वर्षसहस्राणि तेषां तथागतधातु[7]स्तूपानां पूजामकरोत्[8] । पूजां च कुर्वता[9] तस्याः[10] पर्षदो ऽसंख्येयानि श्रावककोटीनयुतशतसहस्राणि विनीतानि सर्वैश्च तैर्बोधिसत्त्वैः सर्वरूपसंदर्शन[11]समाधिः प्रतिलब्धो ऽभूत् ॥

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वावान्बोधिसत्त्वगणास्ते च सर्वे महाश्रा-

1) वडि A. वलो B. वडो K. वडा W.

2) गतस्य स्तूपानां A. गतधातू B. Ca गतस्य धातूनां Cb. गतस्य स्तूपानां धातु K. गतस्य धातुनां W.

3) K. adds स्तूपा.

4) Here again O. but with gaps.

5) A. W. add गर्भ; Cb. reads धातूनां स्तूपानां.

6) र्वं K.

7) धातु in A. W. only.

8) In B. K. added तेन तां.

9) तेन is put in here instead of तस्याः in A. W.

10) ततः added in A. B. Ca. W. and left out तस्याः.

11) नः Cb. K.

वकाश्तं सर्वसत्त्वप्रियदर्शनं बोधिसत्त्वं महासत्त्वमङ्गहीनं दृष्ट्वाश्रुमुखा[1] रुदन्तः[2] क्रन्दन्तः[2] परिदेवमानाः[3] परस्परमेतदूचुः[4]। अयं सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वो ऽस्माकमाचार्यो ऽनुशासकः सो ऽयं सांप्रतमङ्गहीनो बाहुहीनः संवृत्त इति। अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ स सर्वसत्त्वप्रियदर्शनो बोधिसत्त्वो महासत्त्वस्तान्[5]बोधिसत्त्वांस्तांश्च महाश्रावकांस्तांश्च देवपुत्रानामन्त्रयामास। मा यूयं कुलपुत्रा मामङ्गहीनं दृष्ट्वा[6] रुदत मा क्रन्दत 5

मा[7] परिदेवध्वम्। एषो[8] ऽहं कुलपुत्रा ये केचिद्दशसु दिक्ष्वनन्तापर्यन्तासु[9] लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तान्सर्वान्बुद्धान्भगवतः साक्षिणः कृत्वा। तेषां पुरतः सत्याधिष्ठानं करोमि येन सत्येन सत्यवचनेन स्वं मम[10] बाहुं तथागतपूजाकर्मणो परित्यज्य सुवर्णवर्णो मे कायो भविष्यति तेन सत्येन सत्यवचनेनायं मम बाहुर्यथा पौराणो भवत्विदं च महापृथिवी[11] षड्विकारं प्रकम्पत्वन्तरीक्षगताश्च देवपुत्रा महापुष्पवर्षं प्रवर्षन्तु[12]। 10

अथ खलु नक्षत्रराजसंकुसुमिताभिज्ञ समनन्तरकृते[13] ऽस्मिन्सत्याधिष्ठाने[14] तेन सर्वसत्त्वप्रिय-

---

1) अश्रुमुखा Cb K. O. अश्रुकण्ठा the rest.

2) रोदन्ति क्रन्दन्ति O.

3) देवयन्ति O. देवन्तः K.

4) मेतम् B. K. स्येवम् O.

5) स्तांश्च बो A W.

6) A. W. add च.

7) रुदध्वं क्रन्दध्वं without repeating मा in Cb. K. रोदथ मा क्रन्दथ मा परिदेवथ O

8) सो A. B. Ca W.

9) तेषु B. Cb. O.

10) Left out in B. K. A break in O.

11) भवत्विति। इयं पृथिवीप्रदेश K.

12) प्रवर्षयन्तु K. अभि — — — O From the following it appears that the true reading is अभिप्रवर्षन्तु.

13) K. adds च।.

14) A. Cb. add न.

दर्शनेन बोधिसत्त्वेन महासत्त्वेनाथ खल्विय(1) त्रिसाहस्रमहासाहस्रो(2) लोकधातुः षड्विकारं प्रकम्पित(3) उपर्यन्तरीक्षाच्च महापुष्पवर्षमभिप्रवर्षितं(4)। तस्य च सर्वसत्त्वप्रियदर्शनस्य बोधिसत्त्वस्य महासत्त्वस्य स बाहुर्यथा पौराणः संस्थितो ऽभूद्यदुत(5) तस्यैव बोधिसत्त्वस्य महासत्त्वस्य ज्ञानबलाधानेन(6) पुण्यबलाधानेन(7) च। स्यात्खलु पुनस्ते(8) नक्षत्रराजसंकुसुमि-

5 ताभिज्ञ काङ्क्षा वा विमतिर्वा विचिकित्सा वान्यः स तेन कालेन तेन समयेन सर्वसत्त्वप्रियदर्शनो(9) बोधिसत्त्वो महासत्त्वो ऽभूत्। न खलु पुनस्ते(10) नक्षत्रराजसंकुसुमिताभिज्ञैवं द्रष्टव्यम्। तत्कस्य हेतोः। अयं स नक्षत्रराजसंकुसुमिताभिज्ञ भैषज्यराजो बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन सर्वसत्त्वप्रियदर्शनो(9) बोधिसत्त्वो महासत्त्वो ऽभूत्। इयन्ति नक्षत्रराजसंकुसुमिताभिज्ञ भैषज्यराजो बोधिसत्त्वो महासत्त्वो दुष्करकोटीनयुतशतसहस्रा-

10 णि करोत्यात्मभावपरित्यागांश्च करोति। बहुतरं खल्वपि स(11) नक्षत्रराजसंकुसुमिताभिज्ञ बोधिसत्त्वयानसंप्रस्थितः कुलपुत्रो वा कुलदुहिता वेमामनुत्तरां सम्यक्संबोधिमाकाङ्क्षमाणो यः पादाङ्गुष्ठं तथागतचैत्येष्वादीपयेदेकां हस्ताङ्गुलिं पादाङ्गुलिं वैकाङ्गं वा बाहुमादीपयेद्बोधिसत्त्वयानसंप्रस्थितः(12) स कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्याभिसंस्कारं

---

1) त्व A. B. W. ल्वि Cb. K.

2) स्रो A. B. स्रे Cb. स्रो K. स्र W.

3) प्रकंपति A. प्रकंपित B. W. प्रकंपतिः Cb. प्रकम्पिता K.

4) वर्षमपि प्रावर्षत् A. W. वर्षं प्रवृष्टं B. वर्षं प्रवर्षितं Ca. वर्षमभिप्रवर्षितं Cb. K.

5) यादृदृन् K.

6) ज्ञानबलेन A. W.

7) पुण्याध्यानबलेन A. W. left out in Cb.

8) स्तेन च B. स्तेन Cb. K.

9) A. K. W. add नाम.

10) स्तेन B. ते or तेन left out in Cb.

11) Left out in A. W.

12) Left out in K.

प्रसवति[1] न त्वेव[2] राज्य[3]परित्यागान्न प्रियपुत्रदुहितृभार्यापरित्यागान्न त्रिसाहस्रमहासाहस्रो[4]लोकधातोः[5] सवनस[6][7]मुद्रपर्वतोत्ससरस्तडागकूपारामायाः[8] परित्यागात् । यश्च खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ बोधिसत्त्वयानसंप्रस्थितः कुलपुत्रो वा कुलदुहिता वेमां[9] त्रिसाहस्रमहासाहस्रां[10] लोकधातुं सप्तरत्नपरिपूर्णां[11] कृत्वा सर्वबुद्धबोधिसत्त्वश्रावकप्रत्येकबुद्धेभ्यो दानं दद्यात्स नक्षत्रराजसंकुसुमिताभिज्ञ कुलपुत्रो वा कुलदुहिता वा तावत्पुण्यं 5 प्रसवति यावत्स कुलपुत्रो वा कुलदुहिता वा य इतः सद्धर्मपुण्डरीकाद्धर्मपर्यायादन्तशश्चतुष्पादिकामपि[12] गाथां धारयेत् ।[13] इमं तस्य बहुतरं पुण्याभिसंस्कारं वदामि न त्वेवेमां[14] त्रिसाहस्रमहासाहस्रां[15] लोकधातुं सप्तरत्नपरि[16]पूर्णां कृत्वा दानं ददतस्तस्य सर्वबुद्धबोधिसत्त्वश्रावकप्रत्येकबुद्धेभ्यः ॥

तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सर्वेषामुत्ससरस्तडागानां महासमुद्रो 10 मूर्धप्राप्तः । एवमेव नक्षत्रराजसंकुसुमिताभिज्ञ सर्वेषां तथागतभाषितानां सूत्रान्तानामयं

1) प्रसूयते B.
2) न्वे A. B. Ca. W.
3) राजकुल Cb.
4) स्रो A. B. स्र Cb. स्राया K. स्रां W.
5) तौ B तोः K. तु A. Cb.
6) स left out in Cb
7) All but Cb. K. add स.
8) रामायाः B. K. The rest have स.
9) वा इमे A. B. W. वा इमां Cb. K.
10) स्रां A. W. स्रौं Ca. स्रां K.
11) पूर्णा A. Cb. W. पूर्णां B. K.
12) ष्पदीमपि K.
13) इं B. K.
14) मं A. B. Cb. W. मां K.
15) स्रं A. B. Cb. W. स्रो K.
16) र्णा A. B. Cb. W. र्णां K.

सद्धर्मपुण्डरीको धर्मपर्यायो मूर्धप्राप्तः १। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सर्वेषां कालपर्वतानां चक्रवाडानां महाचक्रवाडानां[1] च[2] सुमेरुः पर्वतराजो[3] मूर्धप्राप्तः। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वेषां तथागतभाषितानां सूत्रान्तानां राजा मूर्धप्राप्तः २। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सर्वेषां नक्षत्राणां
5 चन्द्रमाः प्रभाकरो ऽग्रप्राप्तः। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञ सर्वेषां तथागतभाषितानां सूत्रान्तानामयं सद्धर्मपुण्डरीको धर्मपर्यायश्चन्द्रकोटीनयुतशतसहस्रातिरेकप्रभाकरो ऽग्रप्राप्तः[4] ३। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सूर्यमण्डलं सर्वं तमोऽन्धकारं विधमति। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वाकुशलतमोऽन्धकारं विधमति ४। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ त्रायस्त्रिंशानां देवानां[5] शक्रो
10 देवानामिन्द्रः। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वेषां तथागतभाषितानां सूत्रान्तानामिन्द्रः ५। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ ब्रह्मा सहांपतिः सर्वेषां ब्रह्मकायिकानां देवानां[6] राजा ब्रह्मलोके पितृकार्यं करोति। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वेषां सत्त्वानां शैक्षाशैक्षाणां च सर्वश्रावकाणां[7] प्रत्येकबुद्धानां बोधिसत्त्वयानसंप्रस्थितानां च पितृकार्यं करोति ६। तद्य-
15 थापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सर्वबालपृथग्जनानतिक्रान्तः[8] स्रोतआपन्नः सकृदागाम्यनागाम्यर्हत्प्रत्येकबुद्धश्च। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वांस्तथागतभाषितान्सूत्रान्तानतिक्रम्याभ्युद्गतो मूर्धप्राप्तो वेदितव्यः। ते ऽपि

---

1) Left out in A. K. W.

2) A. K. W. add पर्वतानां.

3) ज्ञा Ca. K.

4) पर्यायो मूर्धप्राप्त चन्द्रकोटीनयुत K.

5) देवपुत्राणां B. देवनिकायानां K.

6) Left out in A. W.

7) श्रावकप्रत्येक K.

8) न left out in A.

नक्षत्रराजसंकुसुमिताभिज्ञ सत्त्वा मूर्धप्राप्ता वेदितव्या ये खल्विमं सूत्रराजं धारयिष्य-
न्ति ७। तद्यथापि नाम नक्षत्रराजसंकुसुमिताभिज्ञ सर्वश्रावकप्रत्येकबुद्धानां बोधिसत्त्वो
ऽग्र[1] आख्यायते। एवमेव नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वेषां
तथागतभाषितानां सूत्रान्तानामग्र[2] आख्यायते ८। तद्यथापि नाम नक्षत्रराजसंकुसुमिता-
भिज्ञ सर्वेषां श्रावकप्रत्येकबुद्धबोधिसत्त्वानां तथागतो धर्मराजः पट्टबद्धः। एवमेव नक्षत्र-
राजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायस्तथागतभूतो बोधिसत्त्वयानसंप्रस्थिता-
नाम् ९। त्राता खल्वपि[3] नक्षत्रराजसंकुसुमिताभिज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वस-
त्त्वानां सर्वभयेभ्यो विमोचकः सर्वदुःखेभ्यः। तडाग इव तृषितानामग्निरिव शीतार्तानां
चैलमिव नग्नानां सार्थवाह इव वणिजानां मातेव पुत्राणां नौरिव पारगामिनां वैद्य
इवातुराणां दीप इव तमोऽन्धकारावृतानां रत्नमिव धनार्थिनां चक्रवर्तीव सर्वकोट्टराजानां 10
समुद्र इव सरितामुल्केव सर्वतमोऽन्धकारविधमनाय[4]। एवमेव नक्षत्रराजसंकुसुमिताभि-
ज्ञायं सद्धर्मपुण्डरीको धर्मपर्यायः सर्वदुःखप्रमोचकः सर्वव्याधिच्छेदकः[5] सर्वसंसारभय[6]बन्ध-
नसंकटप्रमोचकः। येन चायं नक्षत्रराजसंकुसुमिताभिज्ञ सद्धर्मपुण्डरीको धर्मपर्यायः श्रुतो
भविष्यति[7] यश्च[8] लिखति[9] यश्च लेखयति[10]। एषां नक्षत्रराजसंकुसुमिताभिज्ञ पुण्याभिसंस्का-

---

1) ऽग्रो A. अग्र B. K. ऽग्रा Cb. ऽग्र W.

2) ऽग्र A. W. Cp. Pāli *agga*.

3) तत्र (instead of खल्वपि) in B. Cb.

4) धमतया A. K. W. धननेन B. धमतायाः Cb. Our reading conjectural. Equally admissible would be धमनतापि.

5) In B. Cb. only.

6) भय in B. Cb. only.

7) भवति B.

8) Left out in K.

9) लिखापयिष्यति K.

10) लेखापय K. more original.

राणां बौद्धेन ज्ञानेन न शक्यं पर्यन्तो ऽधिगन्तुम्। यावत्तं[1] पुण्याभिसंस्कारं[2] स कुलपुत्रो वा कुलदुहिता वा प्रसविष्यतीमं[3] धर्मपर्यायं[4] धारयित्वा[4] वाचयित्वा वा[5] देशयित्वा वा[6] श्रुत्वा वा लिखित्वा वा पुस्तकगतं वा कृत्वा सत्कुर्याद्गुरुकुर्यान्मानयेत्पूजयेत्पुष्पधूपगन्धमाल्य विलेपनचूर्णचीवरच्छत्रध्वजपताकावैजयन्तीभिर्[7] वाद्यवस्त्राञ्जलिकर्मभिर्[8] [9] वा घृतप्रदीपैर्वा ग-

5 न्धतैलप्रदीपैर्वा चम्पकतैलप्रदीपैर्वा सुमनातैलप्रदीपैर्वा[10] पाटलतैलप्रदीपैर्वा[11] [12] वार्षिका-तैलप्रदीपैर्वा[13] नवमालिकातैलप्रदीपैर्वा[14] सत्कारं[15] कुर्याद्गुरुकारं[15] कुर्यात्[15]॥

बहु स नक्षत्रराजसंकुसुमिताभिज्ञ बोधिसत्त्वयानसंप्रस्थितः कुलपुत्रो वा कुलदुहिता वा प्रसविष्यति[16] य इमं भैषज्यराजपूर्वयोगपरिवर्तं धारयिष्यति वाचयिष्यति श्रोष्यति[17]। सचेत्पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ मातृग्राम इमं धर्मपर्यायं श्रुत्वोद्ग्रहीष्यति[18] धारयि-

---

1) यावंत् B. यावं Cb. यावत् K. यावंतां W.

2) स्काराणां स Cb.

3) प्रसवति। य इमं K

4) Left out in K.

5) In A. only.

6) Left out in all MSS.

7) B. adds घण्टा.

8) वैजयन्तीभिर् left out in K.

9) भिर् added in W.

10) Left out in Cb.

11) In K. W. only.

12) लि K.

13) Left out in K.

14) A. W. add बहुविधाभिश्च.

15) Left out in Cb. The 2-nd कुर्यात् left out in K.

16) प्रसवति यः। Cb.

17) A. adds च स B. adds स च W. adds च.

18) ग्र K. W.

(1)ष्यति तस्य स एव पश्चिमः स्त्री(2)भावो भविष्यति । यः कश्चिन्नक्षत्रराजसंकुसुमिताभिज्ञेमं भैषज्यराजपूर्वयोगपरिवर्तं पश्चिमायां पञ्चाशत्यां श्रुत्वा मातृग्रामः(3) प्रतिपत्स्यते स खल्वि-तश्च्युतः सुखावत्यां लोकधातावुपपत्स्यते । यस्यां स(4) भगवानमितायु(5)स्तथागतोऽर्हन्सम्यक्-संबुद्धो बोधिसत्त्वगणपरिवृतस्तिष्ठति ध्रियते यापयति । स(6) तस्यां पद्मगर्भे सिंहासने निषण्ण उपपत्स्यते न च तस्य रागो(7) व्याबाधिष्यते(8) न द्वेषो न मोहो न मानो न मात्सर्यं न क्रोधो न व्यापादः । सहोपपन्नश्च पञ्चाभिज्ञाः प्रतिलप्स्यत अनुत्पत्तिकधर्मक्षान्तिं च प्रतिलप्स्यते । अनुत्पत्तिकधर्मक्षान्ति(9)प्रतिलब्धः स खलु पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ बोधिसत्त्वो महासत्त्वो द्वासप्तति(10)गङ्गानदीवालिका(11)समांस्तथागतान्द्रक्ष्यति । तादृशं चास्य चक्षुरिन्द्रियं परिशुद्धं भविष्यति(12) येन चक्षुरिन्द्रियेण परिशुद्धेन तान्बुद्धान्भगवतो द्रक्ष्यति । ते(13) चास्य बुद्धा भगवन्तः साधुकारमनु(14)प्रदास्यन्ति । साधु साधु कुलपुत्र यत्त्वया(15) सद्धर्मपुण्ड-रीकं धर्मपर्यायं श्रुत्वा तस्य भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचन

---

1) K. adds वाचयिष्यति.

2) Cb. adds न.

3) ग्राम A. B W. ग्रामन् Cb. ग्राम: K.

4) Left out in B. K.

5) भ A.

6) Left out in K.

7) रोगो K.

8) व्याबाधिष्यति B. बाधिष्यते Cb. व्याबाहयिष्यति K Cp. Pāli *vyabādheti.*

9) न्तिम्प्र K.

10) तिर्ग B.

11) लु B. Cb.

12) भवति Cb.

13) तस्य तश्चास्य Cb.

14) रं दा A. W.

15) स त्वं यः A. यस्त्वं B. K. बत्त्वया Cb. यः त्वं यः W.

उद्दिष्टं स्वध्यायितं भावितं चिन्तितं मनसिकृतं परसत्त्वानां च[1] संप्रकाशितम्। अयं ते कुलपुत्र पुण्याभिसंस्कारो न शक्यमग्निना दग्धुं नोदकेन कर्तुम्। अयं ते कुलपुत्र पुण्याभिसंस्कारो न शक्यं बुद्धसहस्रेणापि[2] निर्देष्टुम्। विहतमारप्रत्यर्थिकस्त्वं कुलपुत्रोत्तीर्णभयसंग्रामो मर्दितशत्रुकण्ठकः[3]। बुद्धशतसहस्राधिष्ठितो ऽसि[4]। न तव कुलपुत्र सदेवके
5 लोके समारके सब्रह्मके सश्रमणब्राह्मणिकायां प्रजायां[5] सदृशो विद्यते तथागतमेकं विनिर्मुच्य। नान्यः कश्चिच्छ्रावको वा प्रत्येकबुद्धो वा बोधिसत्त्वो वा यस्त्वां[6] शक्तः पुण्येन वा[7] प्रज्ञया वा समाधिना वाभिभवितुम्। एवं ज्ञानबलाधानप्राप्तः स नक्षत्रराजसंकुसुमिताभिज्ञ बोधिसत्त्वो भविष्यति॥

यः कश्चिन्नक्षत्रराजसंकुसुमिताभिज्ञेमं भैषज्यराजपूर्वयोगपरिवर्तं भाष्यमाणं श्रुत्वा
10 साधुकारमनुप्रदास्यति तस्योत्पलगन्धो मुखाद्वास्यति गात्रेभ्यश्चास्य चन्दनगन्धो[8] भविष्यति। य इह[9] धर्मपर्याये साधुकारं दास्यति तस्येम एवंरूपा दृष्टधार्मिका[10] गुणानुशंसा[11] भविष्यन्ति ये मयैतर्हि निर्दिष्टाः। तस्मात्तर्हि नक्षत्रराजसंकुसुमिताभिज्ञानुपरिन्दाम्यहमिमं सर्वसत्त्वप्रियदर्शनस्य बोधिसत्त्वस्य महासत्त्वस्य[12] पूर्वयोगपरिवर्तं यथा[12] पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चाशत्यां वर्तमानायामस्मिञ्जम्बुद्वीपे[13] प्रचरेदन्तर्धानं गच्छेन्न च

1) A. adds परपुद्गलानां च.

2) शत added in A. W.

3) For कण्टकः, like in Pāli.

4) ऽसि added by us.

5) याः A. W. B. यां Cb. या K.

6) MSS. तव.

7) Cb K. add ज्ञानेन वा.

8) चन्दन B. W.

9) इमं A. W.

10) तस्येमे ईदृशा धार्मिका B. Ca. K.

11) संशा A. B. K. संसा Cb. W.

12) Left out in K.

13) वर्तमानायां left out in A. W.

मारः पापीयानवतारं लभेन्न मारकायिका देवता न नागा न यक्षा न गन्धर्वा न कुम्भाण्डा अवतारं लभेयुः । तस्मात्तर्हि नक्षत्रराजसंकुसुमिताभिज्ञाधितिष्ठामीमं[1] धर्मपर्यायमस्मिञ्जम्बुद्वीपे । भैषज्यभूतो भविष्यति ग्लानानां सत्त्वानां व्याधिस्पृष्टानाम् । इमं धर्मपर्यायं श्रुत्वा व्याधिः काये न क्रमिष्यति[2] न जरा नाकालमृत्युः । सचेत्पुनर्नक्षत्रराजसंकुसुमिताभिज्ञ यः[3] कश्चिद्बोधिसत्त्वयानसंप्रस्थितः पश्येदेवंरूपं सूत्रान्तधारकं भिक्षुं तं[4] चन्दनचूर्णैर्नीलोत्पलै- 5
रभ्यवकिरेदभ्यवकीर्य चैवं चित्तमुत्पादयितव्यम् । गमिष्यत्ययं कुलपुत्रो बोधिमण्डं । ग्रहीष्यत्ययं[4] तृणानि[5] प्रज्ञपयिष्यत्ययं[4] बोधिमण्डे तृणसंस्तरं । करिष्यत्ययं मारपक्षपराजयं । प्रपूरयिष्यत्ययं धर्मशङ्खं । पराहनिष्यत्ययं धर्मभेरीमुत्तरिष्यत्ययं भवसागरम् । एवं नक्षत्रराजसंकुसुमिताभिज्ञ तेन बोधिसत्त्वयानसंप्रस्थितेन कुलपुत्रेण वा कुलदुहित्रा वैवंरूपं सूत्रान्तधारकं भिक्षुं दृष्ट्वैवं चित्तमुत्पादयितव्यम् । इत्येतादृशाश्चास्य गुणानुशंसा भवि- 10
ष्यन्ति यादृशास्तथागतेन निर्दिष्टाः ॥

अस्मिन्खलु पुनर्भैषज्यराजपूर्वयोगपरिवर्ते निर्दिश्यमाने चतुरशीतीनां बोधिसत्त्वसहस्राणां सर्वरुतकौशल्यानुगताया धारण्याः प्रतिलम्भोऽभूत् । स च भगवान्प्रभूतरत्नस्तथागतोऽर्हन्सम्यक्संबुद्धः साधुकारमदात् । साधु साधु नक्षत्रराजसंकुसुमिताभिज्ञ यत्र हि नाम त्वमेवमचिन्त्यगुणा[धर्मास्तथागतेन निर्दिष्टास्त्वं चाचिन्त्यगुणा][6]धर्मसमन्वागतं[7] 15
तथागतं[8] परिपृच्छसीति ॥

---

1) धिष्ठिता A. B. Cb. W. धिष्ठिङ्क्षा
2) ना क्र B. नापक्र K.
3) Left out in K.
4) Left out in A. W.
5) प्रज्ञ B. प्रज्ञा Cb. पत्ला K.
6) The words between brackets are a clumsy interpolation
7) समन्वागतं left out in K.
8) In Ca. K only.

॥ इति श्रीसद्धर्मपुण्डरीके[1] धर्मपर्याये भैषज्यराजपूर्वयोगपरिवर्तो नाम द्वाविंशतिमः[2] ॥

---

1) आर्य (instead of इति श्री) in K.

2) वर्तस्त्रयोविंशतिमः Cb. °तितमः W.

# XXIII.

अथ खलु भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तस्यां वेलायां महापुरुषलक्षणाद्भ्रूविवरान्तरादूर्णाकोशात्प्रभां प्रमुमोच। यया प्रभया पूर्वस्यां दिश्यष्टादशगङ्गानदीवालिकासमानि बुद्धक्षेत्रकोटीनयुतशतसहस्राण्यवभया स्फुटान्यभूवन्। तानि चाष्टादशगङ्गानदीवालिकासमानि[1] बुद्धक्षेत्रकोटीनयुतशतसहस्राण्यतिक्रम्य वैरोचनरश्मिप्रतिमण्डिता[2] नाम लोकधातुः। तत्र कमलदलविमलनक्षत्रराजसंकुसुमिताभिज्ञो नाम तथागतो 5 ऽर्हन्सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति विपुलेनायुष्प्रमाणेन विपुलेन बोधिसत्त्वसंघेन सार्धं[3] परिवृतः पुरस्कृतो धर्मं देशयति स्म। अथ खलु या[4] भगवता शाक्यमुनिना तथागतेनार्हता सम्यक्संबुद्धेनोर्णाकोशात्प्रभा प्रमुक्ता[5] सा तस्यां वेलायां वैरोचनरश्मिप्रतिमण्डितां लोकधातुं महत्याभया स्फुरति स्म। तस्यां[6] खलु पुनर्वैरोचनरश्मिप्रतिमाण्डतायां[7] लोकधातौ गद्गदस्वरो[8] नाम बोधिसत्त्वो महासत्त्वः प्रतिवसति स्मावरोपितकुशलमूलो 10 दृष्टपूर्वाश्च[9] तेन बहूनां तथागतानामर्हतां सम्यक्संबुद्धानामेवंरूपा रश्म्यवभा-

1) Left out in Cb. B.

2) तो Ca.

3) Left out in B.

4) सा A. या सा B. Cb. K. सो W.

5) प्र Left out in A. B. W.

6) तस्मिं B.

7) ण्डिते B. Cb.

8) गंगद in all MSS.

9) पूर्वाश्च A. B. K. W. पूर्वश्च Cb.

मा: । बकुसमाधिप्रतिलब्धश्च[1] स[2] गद्गदस्वरो[3][4] बोधिसत्त्वो महासत्त्वः । तद्यथा ध्वजाग्रकेयूरसमाधिप्रतिलब्धः १ सद्धर्मपुण्डरीकसमाधिप्रतिलब्धो[5] २ विमलदत्तसमाधिप्रतिलब्धो ३ [6]नक्षत्रराजविक्रीडितसमाधिप्रतिलब्धो ४ अनिलम्भसमाधिप्रतिलब्धो ५ ज्ञानमुद्रासमाधिप्रतिलब्धश्चन्द्रप्रदीपसमाधिप्रतिलब्धः[7] ६ । ७ सर्वरुतकौशल्यसमाधिप्रति[8]-
5 लब्धः ८ सर्वपुण्यसमुच्चयसमाधिप्रतिलब्धः ९ प्रसादवतीसमाधिप्रतिलब्ध[9] १० ऋद्धिविक्रीडितसमाधिप्रतिलब्धो ११ ज्ञानोल्कासमाधिप्रतिलब्धो १२ व्यूहराजसमाधिप्रतिलब्धो[10] १३ विमलप्रभाससमाधिप्रतिलब्धो[11] १४ विमलगर्भसमाधिप्रतिलब्धो १५ अप्कृत्स्नसमाधिप्रतिलब्धः १६ सूर्यावर्तसमाधिप्रतिलब्धः[12] १७ । पेयालं यावद्गङ्गानदीवालिकोपमसमाधिकोटीनयुतशतसहस्रप्रतिलब्धो[13] गद्गदस्वरो बोधिसत्त्वो महासत्त्वः ।
10 तस्य खलु पुनर्गद्गदस्वरस्य बोधिसत्त्वस्य महासत्त्वस्य सा प्रभा काये निपतिताभूत् । अथ खलु गद्गदस्वरो बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं[14] जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य[15] तं भगवन्तं कमलदल-

---

1) बकु in Cb. only.
2) In K. only.
3) गद्गद K.
4) K. adds नाम.
5) K. adds विरजो.
6) K. adds व्यूहराजसमा°.
7) प्रभ A. Cp. Engl. translation p. 394, note 2.
8) B. Ca. add नुगत.
9) प्रसादवति A. K. W. प्रसादिवती B. प्रसादवती Ca.
10) Left out in B. Ca. K.
11) स in Cb. only.
12) सूर्यगर्भ Cb.
13) Rather कासम.
14) णा K.
15) All प्रणाम्य.

विमलनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । गमिष्याम्यहं भगवंस्तां सहां लोकधातुं तं भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धं दर्शनाय वन्दनाय पर्युपासनाय तं च मञ्जुश्रियं कुमारभूतं दर्शनाय तं च भैषज्यराजं बोधिसत्त्वं दर्शनाय तं च प्रदानशूरं बोधिसत्त्वं दर्शनाय तं च नक्षत्रराजसंकुसुमिताभिज्ञं बोधिसत्त्वं दर्शनाय तं च विशिष्टचारित्रं बोधिसत्त्वं दर्शनाय तं च व्यूहराजं बोधिसत्त्वं दर्शनाय तं च 5 भैषज्यराजसमुद्गतं बोधिसत्त्वं दर्शनाय ॥

अथ खलु भगवान्कमलदलविमलनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तं गद्गदस्वरं बोधिसत्त्वं महासत्त्वमेतदवोचत् । न त्वया कुलपुत्र तस्यां सहायां[1] लोकधातौ गत्वा हीनसंज्ञोत्पादयितव्या । सा[2] खलु पुनः कुलपुत्र लोकधातुरुत्कूलनिकूला[3] मृन्मयी[4] कालपर्वताकीर्णा[5] गूथोडिल्ल[6]परिपूर्णा[7] । स च भगवाञ्शाक्यमुनिस्तथा- 10 गतो ऽर्हन्सम्यक्संबुद्धो ह्रस्वकायस्ते च बोधिसत्त्वा ह्रस्वकायास्तव च कुलपुत्र द्वाचत्वारिंशद्योजनशत[8]सहस्राण्यात्मभावप्रतिलाभः[9] । मम च कुलपुत्राष्ट[10]षष्टि[11]योजनशतसहस्राण्यात्मभावप्रतिलाभः[12] । त्वं च कुलपुत्र प्रासादिको दर्शनीयो ऽभिरूपः परम[13]शुभवर्णा-

---

1) तस्मिं सहे B.
2) स A. B. Cb. W. सा K.
3) ल B. लो Cb.
4) यः B. यो Cb. या the rest.
5) र्णा B. Cb.
6) ल B.
7) र्णाः B. Cb.
8) शत in Cb. K. only.
9) Sic A. K. W. लब्धो the rest.
10) ष्टा A. W.
11) र्पो K.
12) लाभः A. W. लम्भ K.
13) या added in A. Ca. W.

पुष्करतया समन्वागतः पुण्यशतसहस्रा[1]तिरेकलक्ष्मीकः । तस्मात्तर्हि कुलपुत्र तां सहां
लोकधातुं गत्वा मा हीनसंज्ञामुत्पादयिष्य[2]सि तथागते च[3] बोधिसत्त्वेषु च[4] तस्मिंश्च बुद्ध-
क्षेत्रे ॥

एवमुक्ते गद्गदस्वरो बोधिसत्त्वो महासत्त्वस्तं भगवन्तं कमलदलविमलनक्षत्रराज-
5 संकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । तथाहं भगवन्करिष्ये यथा
तथागत आज्ञापयति[5] । गमिष्याम्यहं भगवंस्तां सहां लोकधातुं तथागताधिष्ठानेन तथा-
गतबलाधानेन[6] तथागतविक्रीडितेन तथागतव्यूहेन तथागताभ्युद्[7]गतज्ञानेन[8] । अथ खलु
गद्गदस्वरो बोधिसत्त्वो महासत्त्वस्तस्यां वेलायामनुच्चलित एव तस्माद्बुद्धक्षेत्रादनुत्थित-
श्चैव तस्मादासनात्तथारूपं समाधिं समापद्यते स्म यस्य समाधेः समनन्तरसमापन्नस्य गद्ग-
10 दस्वरस्य बोधिसत्त्वस्याथ तावदेवेह[9] सहायां लोकधातौ गृध्रकूटे पर्वते तस्य[10] तथागतध-
र्मासनस्य पुरस्ताच्चतुरशीतिपद्मकोटीनयुतशतसहस्राणि प्रादुर्भूतान्यभूवन्सुवर्णदण्डानि
रूप्यपत्राणि पद्मकिंशुक[11]वर्णानि [12]संदृश्यन्ते स्म ।

अथ खलु मञ्जुश्रीः कुमारभूतस्तं पद्मव्यूहप्रादुर्भावं दृष्ट्वा भगवन्तं शाक्यमुनिं तथा-

---

1) स्राभि A.

2) From here, in K. lost one leaf (107). ज्ञामु our correction for ज्ञो of the MSS.

3) च in A. W. only.

4) च in Cb. only.

5) This paragraph is left out in B. Cb.

6) Left out in Cb.

7) तेन A. Cb. K. W.

8) B. adds च.

9) स्याधतादेवेह A. तावदेह the other MSS.

10) Left out in B. Cb.

11) किंजलक Cb.

12) सं in B. only.

गतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । कस्येदं[1] भगवन्पूर्वनिमित्तं येनेमानि चतुरशीतिपद्मकोटीनयुतशतसहस्राणि संदृश्यन्ते स्म सुवर्णदण्डानि [2]रूप्यपत्राणि[2] [3]पद्मकिंशुक[4]वर्णानि । एवमुक्ते भगवान्मञ्जुश्रियं कुमारभूतमेतदवोचत् । एष मञ्जुश्रीः पूर्वस्माद्दिग्भागाद्विरोचनरश्मिप्रतिमण्डिताया लोकधातोस्तस्य भगवतः कमलदलविमलनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बुद्धक्षेत्राद्गद्गदस्वरो बोधिसत्त्वो महासत्त्वश्चतुरशी[5]तिबोधिसत्त्वकोटीनयुतशतसहस्रैः परिवृतः पुरस्कृत इमां सहां लोकधातुमागच्छति [6]मम दर्शनाय वन्दनाय पर्युपासनायास्य च सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य श्रवणाय । अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत् । कस्तेन भगवन्कुलपुत्रेण कुशलसंभारः कृतो येन स कुशलसंभारेण कृतेनोपचितेनायं विशेषः प्रतिलब्धः । कतमस्मिंश्च भगवन्समाधौ स बोधिसत्त्वश्चरति । तं वयं भगवन्समाधिं शृणुयाम तत्र च वयं भगवन्समाधौ चरेम । तं च वयं भगवन्बोधिसत्त्वं महासत्त्वं पश्येम कीदृशस्तस्य बोधिसत्त्वस्य वर्णः कीदृग्रूपं कीदृग्लिङ्गं कीदृक्संस्थानं को ऽस्याचार इति । तत्साधु भगवन्करोतु[7] तथागतस्तथारूपं निमित्तं येन निमित्तेन संचोदितः समानः स बोधिसत्त्वो महासत्त्व इमां सहां लोकधातुमागच्छेत् ॥

अथ खलु भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तं भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं परिनिर्वृतमेतदवोचत् । करोतु भगवांस्तथारूपं निमित्तं येन गद्गदस्वरो बोधिसत्त्वो महासत्त्व इमां सहां लोकधातुमागच्छेत् । अथ खलु भगवान्प्रभूत-

---

1) कस्यैवं A. K. W. कस्येदं B Cb.

2) In Cb. only.

3) पद्म left out in Cb.

4) गर्भा (instead of वर्णा) Cb.

5) A. B. K. W. add भिः.

6) In A. added च.

7) करोतु is put in after तथागतः in B. Cb.

रत्नस्तथागतो ऽर्हन्सम्यक्संबुद्धः परिनिर्वृतस्तस्यां वेलायां तथारूपं निमित्तं प्रादुश्चकार[1]
गद्गदस्वरस्य बोधिसत्त्वस्य महासत्त्वस्य संचोदनार्थम्। आगच्छ[2] कुलपुत्रेमां सहां लोकधा-
तुमयं ते [3]मञ्जुश्री: कुमारभूतो दर्शन[4]मभिनन्दति। अथ खलु गद्गदस्वरो बोधिसत्त्वो महा-
सत्त्वस्तस्य भगवतः कमलदलविमलनक्षत्रसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्सं-
बुद्धस्य पादौ शिरसाभिवन्द्य त्रिष्प्रदक्षिणीकृत्य सार्धं तैश्च[5]तुर[6]शीतिबोधिसत्त्वकोटीनयु-
तशतसहस्रैः परिवृतः पुरस्कृतस्तस्या[7] वैरोचनरश्मिप्रतिमण्डिताया[8] लोकधातो[9]रन्तर्हित
इमां सहां लोकधातुमागच्छति स्म प्रकम्पद्भिः क्षेत्रैः प्रवर्षद्भिः पद्मैः प्रवाद्यमानैस्तूर्यको-
टीनयुतशतसहस्रैः। नीलोत्पलपद्मनेत्रेण वदनेन सुवर्णवर्णेन कायेन पुण्यशतसहस्रालं-
कृतेनात्मभावेन श्रिया ज्वलमानस्तेजसा देदीप्यमानो लक्षणैर्विचित्रितगात्रो नारा-
यणसंहननकायः। सप्तरत्नमयं कूटागारमभिरुह्य वैहायसं सप्ततालमात्रेण बोधिसत्त्वगण-
परिवृतः पुरस्कृत आगच्छति स्म। स येनेयं सहा लोकधातुर्येन च गृध्रकूटः पर्वतरा[10]जस्ते-
नोपसंक्रामदुपसंक्रम्य तस्मात्कूटागारादवतीर्य शतसहस्रमूल्यं मुक्ताहारं गृही[11]त्वा येन
भगवांस्तेनोपसंक्रामदुपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य[12] सप्तकृत्वः प्रदक्षिणीकृत्य

---

1) रय A. रा Cb. रये W.
2) A. adds तु.
3) तेन Cb.
4) दर्शनायम A. दर्शनाम W.
5) तैश्च् left out in Cb.
6) शीत्या Cb. शीतिभिर्बो A. B. W.
7) तस्यास्माद्वैरो A. तस्माद्वैरो B. तस्यां वैरो Cb. तस्मात् वैरो W.
8) यां A. Cb. ताल्लो B. याः W.
9) तो Cb.
10) राज left out in B. Cb.
11) गृह्य A. W.
12) वंदित्वा B.

तं मुक्ताहारं भगवतः पूजाकर्मणो निर्यातयामास निर्यात्य(1) च भगवन्तमेतदवोचत्। कमलदलविमलनतनखरागसंकुसुमिताभिज्ञो भगवांस्तथागतो ऽर्हन्सम्यक्संबुद्धो भगवतः परिपृच्छत्यल्पाबाधतां(2) अल्पातङ्कतां लघूत्थानतां यात्रां बलं सुखसं(3)(4)स्पर्शविहारतां। एवं च स भगवानवोचत्। कच्चित्ते(5) भगवन्क्षमणीयं(6) कच्चिद्यापनीयं(7) कच्चिद्धातवः(8) प्रतिकुर्वन्ति कच्चित्त(9) सत्त्वाः स्वाकाराः सुविनेयाः(10) सुचिकित्साः कच्चिच्छुचिकाया(11) मातीव रागचरिता मातीव द्वेषचरिता मातीव मोहचरिता मातीव भगवन्सत्त्वा ईर्ष्यालुका(12) मा मत्सरिणा(13) मामातृज्ञा(14) मापितृज्ञा(14) माश्रामण्या(15) माब्राह्मण्या(16) मा मिथ्यादृष्टयो(17) मादान्तचित्ता(18) मागुप्तेन्द्र- 5

---

1) निर्यातयित्वा A. W.; O. here again beginning with यित्वा.

2) अल्पाबाधताय अल्पातङ्कताय लघूत्थानताय परिपृच्छति O. त्यल्पातंकतां A. ति स्म। अल्पातकतां Cb. त्यल्पाबाधतांत्यल्पातकतां W.

3) यावां बलं A. यात्रां च बलं च B. यात्रां च बलां च Cb. बलंच W. MSS. add च after each substantive यात्रार् बलं W.

4) सुखसं left out in B. सं left out in Cb. सुखाय स्पर्शविहारताय O.

5) कश्चि A. B. कश्चित्तेन Cb. कचि W.

6) तय Cb.

7) कश्चि B. Cb. W. कच्चि A.

8) कश्चिद्धातवः A. Cb. कश्चिद्धा धातव B केश्चिद्धातवः W.

9) कश्चि A. B. केचि Cb. कच्चि W.

10) वैनेयाः O. विनेयाः the rest. Cp. Pāli *veneyya*.

11) कश्चि सुचि A. कश्चि सुचि B. कच्चि सुचि W.

12) ईर्षालुका A. Cb. ईर्ष्याबकुला B. इत्षाहुका W. ईर्ष्यालकुा O.

13) रिका A. W. रिणा B. Cb. Here begins K. 1. 108.

14) ज्ञा A. B. W. ज्ञाः K. ज्ञता: Cb.

15) ण्या B. ण्यता Cb. ण्याः K. The whole word left out in A. W.

16) ण्या A. B. W. ण्यता Cb ण्याः K.

17) यः। Cb. ष्टिका O.

18) त्ता A. B. W. त्तता Cb. त्ताः K.

याः । कच्चित्ते[1] भगवन्निहतमारप्रत्यर्थिका[2] एते सत्त्वाः । कच्चिद्भगवन्प्रभूतरत्नस्तथागतो[3] ऽर्हन्सम्यक्संबुद्धः परिनिर्वृत इमां सहां लोकधातुमागतो[4] धर्मश्रवणाय सप्तरत्नमये स्तूपे मध्यगतः । तं च भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं स भगवान्परिपृच्छति[5] । कच्चिद्भग-[6]वंस्तस्य भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य क्षमणीयं कच्चिद्यापनीयं[7] कच्चिद्भगवन्प्रभूतरत्नस्तथागतो[7] ऽर्हन्सम्यक्संबुद्धश्चिरं स्थास्यति । वयमपि भगवंस्तस्य प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य धातुविग्रहं पश्येम । तत्साधु भगवान्दर्शयतु तथागतस्तस्य[8] भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य धातुविग्रहमिति ॥

अथ खलु भगवाञ्शाक्यमुनिस्तथागतो[9] ऽर्हन्सम्यक्संबुद्धस्तं भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं परिनिर्वृतमेतदवोचत् । अयं भगवन्गद्गदस्वरो[10] बोधिसत्त्वो महासत्त्वो भगवन्तं प्रभूतरत्नं तथागतमर्हन्तं सम्यक्संबुद्धं परिनिर्वृतं[11] द्रष्टुकामः । अथ खलु भगवान्प्रभूतरत्नस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तं गद्गदस्वरं बोधिसत्त्वं महासत्त्वमेतदवोचत् । साधु साधु कुलपुत्र यत्र हि नाम त्वं भगवन्तं[12] शाक्यमुनिं तथागतमर्हन्तं सम्यक्सं-

---

1) कश्चि A. W. कश्चित्तेन B. कचि Cb. कच्चि W.

2) र्थिकाः सत्त्वाः B. र्थिकाः । O. र्थिन the rest.

3) कश्चि A. B. Cb. W. कच्चि K. भगवन् left out in A. W.

4) आगतो is put in after °णाय in A. K. W.

5) Cb. K. add स्म.

6) कश्चि A. B. Cb. W. कच्चि K.

7) कश्चि A. B. Cb. कच्चि K. W.

8) स्त left out in A. B. W. Here again O. breaks off.

9) Cb. reads प्रभूतरत्न for शाक्यमुनि and leaves out भगवन्तं °अयं भगवन्.

10) From गद्गद° till °संबुद्धस्तं left out in A. Cb. तं is added after अयं भगवन् in K.

11) From परिनि° till °संबुद्ध left out in K.

12) A. adds च; W. adds व.

बुद्धं द्रष्टुकामो ऽभ्यागत इमं च सद्धर्मपुण्डरीकं धर्मपर्यायं श्रवणाय मञ्जुश्रियं च कुमारभूतं दर्शनायेति ॥

अथ खलु पद्मश्रीर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । कीदृशं[1] भगवन्गद्गदस्वरेण बोधिसत्त्वेन महासत्त्वेन पूर्वं[2] कुशलमूलमवरोपितं[3] कस्य वा तथागतस्यान्तिके । अथ खलु भगवाञ्छाक्यमुनिस्तथागतो[4] ऽर्हन्सम्यक्संबुद्धः पद्मश्रियं बोधिसत्त्वं महासत्त्वमेतदवोचत् । भूतपूर्वं कुलपुत्रातीते ऽसंख्येये[5] कल्पे[5] ऽसंख्येयतरे विपुले ऽप्रमेये ऽप्रमाणे यदासीत्तेन कालेन तेन समयेन मेघदुन्दुभिस्वरराजो नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्सर्वरूप[6]संदर्शनायां[7] लोकधातौ प्रियदर्शने कल्पे । तस्य खलु पुनः कुलपुत्र भगवतो मेघदुन्दुभिस्वरराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य गद्गदस्वरेण बोधिसत्त्वेन महासत्त्वेन तूर्यशतसहस्र[8]प्रवादितेन द्वादशवर्षशत[9]सहस्राणि पूजा कृताभूत् । सप्तरत्नमयानां च भाजनानां[10] चतुरशीतिसहस्राणि[11] दत्तान्यभूवन् । तत्र कुलपुत्र[12] मेघदुन्दुभिस्वरराजस्य[13] तथागतस्य प्रवचने[14] गद्गदस्वरेण बोधिसत्त्वेन महा-

---

1) शो A.

2) पूर्वं A. B. K. पूर्व W. left out in Cb.

3) मूलावलाधानेन Cb. °वरूपं K. which is also the usual form in O.

4) वां च्छा K.

5) Cb. adds सु.

6) रूप left out in A.

7) दर्शने B.

8) स्रं B. K.

9) शत left out in B. Cb.

10) भो K.

11) तिभिः A. तिः B

12) Left out in A. W.

13) राज K. So, too, p. 432, l. 3.

14) A. W. add न.

[1]सत्त्वे[2]नेयमीदृशी [3]श्रीः प्राप्ता[4]। स्यात्खलु पुनस्ते कुलपुत्र काङ्क्षा वा विमतिर्वा विचि-
कित्सा वान्यः स तेन कालेन तेन समयेन गद्गदस्वरो नाम बोधिसत्त्वो महासत्त्वो[5] ऽभूद्येन
[6]सा तस्य भगवतो मेघदुन्दुभिस्वरराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य पूजा कृता
तानि [7]चतुरशीति[8]भाजन[9]सहस्राणि दत्तानि। न खलु पुनस्ते कुलपुत्रैवं दृष्टव्यम्। तत्कस्य
5 हेतोः। अयमेव स कुलपुत्र गद्गदस्वरो बोधिसत्त्वो महासत्त्वो ऽभूद्येन [10]सा तस्य भगवतो
मेघदुन्दुभिस्वरराजस्य[11] तथागतस्यार्हतः सम्यक्संबुद्धस्य पूजा कृता तानि[12] चतुरशीति-
भाजनसहस्राणि दत्तानि। एवं बहुबुद्धपर्युपासितः कुलपुत्र गद्गदस्वरो बोधिसत्त्वो महा-
सत्त्वो बहुबुद्धशतसहस्रावरोपितकुशलमूलः [13]कृतबुद्धपरिकर्मा। दृष्टपूर्वा[14]श्चानेन गद्गदस्वरेण
बोधिसत्त्वेन महासत्त्वेन गङ्गानदीवालि[15]कासमा बुद्धा भगवन्तः। पश्यसि त्वं पद्म[16]श्रीरेतं
10 गद्गदस्वरं बोधिसत्त्वं महासत्त्वम्। पद्मश्रीराह। पश्यामि भगवन्पश्यामि सुगत। भगवा-

---

1) Left out in A. K. W.
2) द् K.
3) शीघ्रं A. शी Cb. B.
4) सा: A. W.
5) Left out in A. B. Cb. W.
6) सो A. W.
7) K adds च.
8) भो W.
9) B. adds शत.
10) सो A. B. Cb. W. सा K.
11) स्य् K.
12) तानि च भाजनानि दत्तानि B. K.
13) कत A. B. Cb. W. कृत K.
14) पूर्वा Cb. K.
15) लुकोप A. K. W. लुकास B. लिकास Cb.
16) श्रीगर्भ एतं तं A. श्रीरेवं B. श्री एवं Cb. श्रीरेतं K. श्रीगर्भ एतं W.

नाह्न। एष खलु पुनः पद्मश्रीर्गद्गदस्वरो बोधिसत्त्वो महासत्त्वो बहुभी रूपैरिमं[1] सद्धर्मपुण्डरीकं धर्मपर्यायं देशयति स्म[2]। तद्यथा। क्वचिद्ब्रह्मरूपेण क्वचिद्रुद्ररूपेण[3] क्वचिच्छक्ररूपेण[4] क्वचिदीश्वररूपेण क्वचित्सेनापतिरूपेण[5] क्वचिद्वैश्रवणरूपेण क्वचिच्चक्रवर्तिरूपेण क्वचित्कोट्टराजरूपेण क्वचिच्छ्रेष्ठिरूपेण क्वचिद्गृहपतिरूपेण क्वचिन्नैगमरूपेण क्वचिद्ब्राह्मणरूपेणेमं सद्धर्मपुण्डरीकं धर्मपर्यायं देशयति स्म[6]। क्वचिद्भिक्षुरूपेण क्वचिद्भिक्षुणीरूपेण 5 क्वचिदुपासकरूपेण क्वचिदुपासिकारूपेण क्वचिच्छ्रेष्ठिभार्यारूपेण क्वचिद्गृहपतिभार्यारूपेण क्वचिन्नैगमभार्यारूपेण[7] क्वचिद्दारकरूपेण क्वचिद्दारिकारूपेण गद्गदस्वरो बोधिसत्त्वो महासत्त्व इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सत्त्वानां[8] देशयति[9] स्म[10]। इयद्भिः कुलपुत्र रूपसंदर्शनैर्गद्गदस्वरो बोधिसत्त्वो महासत्त्व इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सत्त्वानां[11] देशयति[11] स्म[12]। यावत्केषांचिद्यक्षरूपेण गद्गदस्वरो बोधिसत्त्वो महासत्त्व इमं सद्धर्मपुण्डरीकं धर्मपर्यायं 10 सत्त्वानां[13] देशयति[14] स्म[15]। केषांचिदसुररूपेण केषांचिद्गरुडरूपेण केषांचित्किंनररूपेण केषांचिन्महोरगरूपेण गद्गदस्वरो बोधिसत्त्वो महासत्त्व इमं सद्धर्मपुण्डरीकं धर्मपर्यायं सत्त्वानां

1) बहुभिरूपायैरिमं B. Cb.
2) Left out in B.
3) Left out in B. Cb. K.
4) Left out in Cb.
5) A. Ca. W. add क्वचिच्छ्रेवरूपेण.
6) Left out in B. Cb.
7) In Cb. only.
8) Left out in A. W.
9) धर्मान् is added in K. W.
10) Left out in B.
11) Left out in A.
12) Left out in B. Cb.
13) Left out in W.
14) A. adds धर्म.
15) Left out in B. Cb. K.

देशयति स्म[1]। यावन्निरयतिर्यग्योनियमलोकाक्षणोपपन्नानामपि सत्त्वानां गद्गदस्वरो बोधिसत्त्वो महासत्त्व[2] इमं सद्धर्मपुण्डरीकं धर्मपर्यायं देशयंस्त्राता भवति[3]। यावदन्तःपुरमध्यगतानामपि सत्त्वानां गद्गदस्वरो बोधिसत्त्वो महासत्त्वः स्त्रीरूपमभिनिर्माय्येमं सद्धर्मपुण्डरीकं धर्मपर्यायं सत्त्वानां[4] देशयति[4] स्म[4]। अस्यां सहायां[5] लोकधातौ सत्त्वानां धर्मं देशयति स्म[6]।
5 त्राता खल्वपि[7] पश्यैर्गद्गदस्वरो बोधिसत्त्वो महासत्त्वः सहायां[8] लोकधातावुपपन्नानां सत्त्वानाम्[9]। तस्यां च सहायां[10] लोकधाताविव स[11] गद्गदस्वरो बोधिसत्त्वो महासत्त्व इयद्भी रूपनिर्मितैरिमं[12] सद्धर्मपुण्डरीकं धर्मपर्यायं सत्त्वानां देशयति[13]। न चास्य सत्पुरुषस्यर्द्धिहानिर्नापि प्रज्ञाहानिः[14]। इयद्भिः कुलपुत्र ज्ञानावभासैर्गद्गदस्वरो बोधिसत्त्वो महासत्त्वोऽस्यां सहायां[5] लोकधातौ प्रज्ञायते। अन्येषु च गङ्गानदीवालिकासमेषु[15] लोकधातुषु बोधिसत्त्व-
10 वैनेयानां[16] सत्त्वानां बोधिसत्त्वरूपेण धर्मं देशयति।[17] श्रावकवैनेयानां[16] सत्त्वानां श्रावकरूपेण

---

1) Left out in Cb. K.
2) From इमं till देशयन् left out in A. W.
3) देशयत्ता भविष्यति Cb.
4) Left out in B. Cb. K. O.
5) अस्मिं सहे B.
6) Left out in B. Cb. O.
7) त्राताऽभूतः प O.
8) सहे B. O.
9) सत्त्वानाम् left out in A. Cb. W.
10) तस्यां च वैरोचनरश्मिप्रतिमंडितायां A. W. अस्मिंश्च B. तस्यां वैरोच° तायां K. तस्यां च सहायां Cb.
11) धातावेष ग° B. Cb. धातौ। एष ग° K.
12) र्मि K. W.
13) In B. added स्म.
14) From नापि till निः left out in A. K. W.
15) लुकोपमेषु A. B. W. लिकासमेषु Cb. O. लुकोपमासु K.
16) वैनेयिकानां A. Cb. W.
17) The whole paragraph is left out in W.

धर्मं देशयति । प्रत्येकबुद्धवैनेयानां सत्त्वानां प्रत्येकबुद्धरूपेण धर्मं देशयति । तथागतवैने-यानां[1] सत्त्वानां तथागतरूपेण धर्मं देशयति । यावत्तथागतधातुवैनेयानां सत्त्वानां तथागत-धातुं[2] दर्शयति । यावत्परिनिर्वाणवैनेयानां[3] सत्त्वानां परिनिर्वृतमात्मानं[4] दर्शयति । एवं ज्ञानबलाधानप्राप्तः[5] खलु पुनः पद्मश्रीर्गद्गदस्वरो बोधिसत्त्वो महासत्त्वः ॥

अथ खलु पद्मश्रीर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । अवरोपितकुशलमूलो ऽयं भगवन्गद्गदस्वरो बोधिसत्त्वो महासत्त्वः । कतम एष भगवन्समाधिर्यस्मिन्समाधावव-[6]स्थितेन गद्गदस्वरेण बोधिसत्त्वेन महासत्त्वेनेयन्तः सत्त्वा विनीता इति । एवमुक्ते भगवाञ्छा-[7]क्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धः पद्मश्रियं बोधिसत्त्वं महासत्त्वमेतदवोचत् । एष हि कुलपुत्र सर्वरूपसंदर्शनो नाम समाधिः । अस्मिन्[8]समाधाववस्थितेन गद्गदस्वरेण बोधिसत्त्वेन महासत्त्वेनैवमप्रमेयः सत्त्वार्थः कृतः ॥

अस्मिन्खलु पुनर्गद्गदस्वरपरिवर्ते निर्दिश्यमाने यानि गद्गदस्वरेण बोधिसत्त्वेन महासत्त्वेन सार्धं चतुरशीतिबोधिसत्त्वकोटीनयुतशतसहस्राणीमां सहां लोकधातुमागतानि[9] सर्वेषां तेषां सर्वरूपसंदर्शनस्य समाधेः प्रतिलम्भो[10] ऽभूत् । अस्यां च सहायां[11] लोकधातौ गणनां समतिक्रान्तानां बोधिसत्त्वानां महासत्त्वानां येषां सर्वरूपसंदर्शनस्य समाधेः प्रति-लम्भो[10] ऽभूत् ॥

---

1) नेयानां B. K. W. नेयिकानां A. B. Cb.
2) B. reads धातुरूपेण धर्मं. O. has रूपमात्मानमुप°.
3) नेयाना A. B. K. W. नेयिकानां Cb.
4) निर्वाण A. W.
5) ध्यानगतः Cb.
6) धौ व्यव Cb.
7) वांच्छा B. Cb. K.
8) य A. K. यत्र O.
9) इह सहे लोकधातौ आग° O.
10) लाभो A. W. O.
11) अस्मिं सहे B. O.

अथ खलु गद्गदस्वरो बोधिसत्त्वो महासत्त्वो भगवतः शाक्यमुनेस्तथागतस्यार्हतः सम्यक्संबुद्धस्य तस्य च भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य धातुस्तूपे विपुलां विस्तीर्णां[1][2] पूजां कृत्वा पुनरपि[3] सप्तरत्नमये कूटागारे ऽभिरुह्य प्रकम्पद्भिः[4] क्षेत्रैः प्रवर्षद्भिः पद्मैः प्रवाद्यमानैस्तूर्यकोटीनयुतशतसहस्रैः सार्धं तैश्चतुरशीतिबोधिसत्त्वकोटी-[5][6] 5 नयुतशतसहस्रैः परिवृतः पुरस्कृतः पुनरपि स्वं बुद्धक्षेत्रमभिगतः । समभिगम्य[7] च तं भगवन्तं कमलदलविमलनक्षत्रराजसंकुसुमिताभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । कृतो मे भगवन्सहायां लोकधातौ सत्त्वार्थस्तस्य च[8] भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य धातुस्तूपो दृष्टो वन्दितश्च स च भगवाञ्शाक्यमुनिस्तथागतो दृष्टो वन्दितश्च[9] स च मञ्जुश्रीः कुमारभूतो दृष्टः स च भैषज्यराजो बोधिसत्त्वो महासत्त्वो[9] 10 वीर्यबलवेगप्राप्तः स च प्रदानशूरो बोधिसत्त्वो महासत्त्वो दृष्टः सर्वेषां च तेषां[10] चतुरशीतिबोधिसत्त्वकोटीनयुतशतसहस्राणां[11][12] सर्वरूपसंदर्शनस्य समाधेः प्रतिलम्भो ऽभूत्[13] ॥

अस्मिन्खलु[14] पुनर्गद्गदस्वरस्य बोधिसत्त्वस्य महासत्त्वस्य गमनागमनपरिवर्ते[15] भाष्य-

---

1) Left out in B. and put in after विस्तीर्णां in Cb.
2) र्णाम् K. Cb. र्णां O.
3) Left out in B. Cb.
4) प्रमानैः B.
5) तैश् in B. K. only, and तैभिश् O.
6) A. adds भिर् B. reads शीत्या.
7) सम् left out in A. W.
8) In Cb. only.
9) Left out in K. W.
10) चैषां A. K. W.
11) शीतीनां A. W. K. शीते B. शीति Cb.
12) कोटीनयुतशत left out in K.
13) लाभो A. W.
14) अस्मिंश्च K.
15) गमना left out in K.

माणे द्वाचत्वारिंशतां बोधिसत्त्वसहस्राणामनुत्पत्तिकधर्म[1]क्षान्तिप्रतिलम्भो[2]ऽभूत् । पद्मश्रियश्च बोधिसत्त्वस्य महासत्त्वस्य सद्धर्मपुण्डरीकस्य समाधेः प्रतिलम्भो[2]ऽभूत् ॥

॥ इति श्री[3]सद्धर्मपुण्डरीके धर्मपर्याये गद्गदस्वरपरिवर्तो नाम त्रयोविंशतिमः[4] ॥

---

1) केषु धर्मेषु A. K. W. कधर्म B. Cb.

2) लाभो A. W.

3) आर्य (for इतिश्री) K.

4) चतुर्विंश Cb. Reading of O. unknown.

# XXIV

अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्व[1] उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं[2] जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य[3] भगवन्तमेतदवोचत् । केन कारणेन भगवन्नवलोकितेश्वरो बोधिसत्त्वो महासत्त्वो ऽवलोकितेश्वर इत्युच्यते । एवमुक्ते 5 भगवानक्षयमतिं बोधिसत्त्वं महासत्त्वमेतदवोचत् । इह कुलपुत्र यावन्ति सत्त्वकोटीनयुत-शतसहस्राणि यानि[4] दुःखानि प्रत्यनुभवन्ति तानि[5] सचेदवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयं शृणुयुस्[6]ते सर्वे तस्माद्दुःखस्कन्धात्परिमुच्येरन्[7] । ये च कुलपुत्र सत्त्वा अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयं धारयिष्यन्ति[8] सचेत्ते महत्यग्नि-स्कन्धे[9] प्रपतेयुः सर्वे ते[10] ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य तेजसा तस्मान्महतो

1) Left out in A.

2) णा K.

3) MSS. प्रणाम्य.

4) Cb. adds च.

5) ते सर्वे ॰व A. ते सचेद्व B. Ca. K. तानि च अव Cb.

6) In a text published in Pekin (?) (in the possession of the late Prof. Max Müller — des. as Ch. in the notes hereafter — the following passages are given between शृणुयुस् and ते सर्वे तान्सर्वांस्तस्माद्दुःखस्कन्धादवलोकितेश्वरः पारमो-चयेदीश्वरविधानेनावलोकितेन) । तत्कस्य हेतोः । नानादेशेषु नानास्थानेषु नानाजातिष्वपि नारकतिर्यग्योनिप्रेतयमलोकेष्वण्डजजरायुजसंस्वेदजौपपादुकानि समकालस्मृत एव कुल-पुत्रार्यसाद्दृष्टे(?)श्चर्येण विधानेन ईदृशो ऽस्य प्रभावो ऽस्मात्कारणादवलोकितेश्वरस्याव-लोकितेश्वरत्वं । ये च.

7) च्येयुः Ca. K. O.

8) धारयन्ति A. B. Ca. K. W. धारयिष्यन्ति । ते च Cb. धारयंति ते सर्वे O.

9) Cb. adds न.

10) प्रपतेयुस्ते O.

ऽग्निस्कन्धात्परिमुच्येरन्[1]। सचेत्पुनः कुलपुत्र सत्त्वा[2] नदीभिरुह्यमाना अवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्याक्रन्दं कुर्युः सर्वास्ता नद्यस्तेषां सत्त्वानां गाधं दद्युः। सचेत्पुनः[3] कुलपुत्र सागरमध्ये वहनाभिरूढानां[4] सत्त्वकोटीनयुतशतसहस्राणां हिरण्यसुवर्णमणिमुक्तावज्र[5]वैडूर्यशङ्खशिलाप्रवाडा[6]श्मगर्भमुसारगल्वलोहितमुक्तादीनां[7] कृतनिधीनां[8] स पो-तस्तेषां[9] कालिका[10]वातेन राक्षसीद्वीपे[11] क्षिप्तः स्यात्तस्मिंश्च कश्चिदेवैकः[12] सत्त्वः स्याद्यो ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्याक्रन्दं कुर्यात्सर्वे ते परिमुच्येरं[13]स्तस्माद्राक्षसीद्वीपात्। अनेन खलु[14] पुनः[14] कुलपुत्र कारणेनावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो ऽवलोकितेश्वर इति संज्ञायते[15]॥

सचेत्कुलपुत्र कश्चिदेव वध्योत्सृष्टो ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्या-

---

1) च्येयुः Ca. K. O.

2) सत्त्वा is put in after °माना in Ca. Cb.

3) पुनः left out in B. K. O.

4) वहनारूपानां A. B. W. वहनारूढानां Ca. Cb. K. वहनाभि° Cb. Differently in O.

5) वज्र left out in B. Ca. Cb. W. O.

6) After प्रवाड Cb. adds रत्नतन्नातरूप. O. leaves out शङ्खशिलाप्रवाड, and has अश्म for अश्म.

7) मुक्ताश्च Ca. K.

8) कृतशोगतानां B. Cb. सोगता Ca. कृतसो° K. कृतसो° W. कृतेन गता भवेयुस्तेषां O.

9) W. adds का.

10) का left out in Ca. केन Cb.

11) पे Ca. K. O. पं the rest.

12) कश्चिदेकः Ca. Cb.

13) च्येयुम् A. Cp. K. O.

14) Left out in Cb. K. O. अतपमते for कुलपुत्र O.

15) इति व्यवस्था स्यात् Cb. इति संज्ञानीयते O.

क्रन्दं कुर्यात्तानि[1] तेषां वध्यघातकानां शस्त्राणि विकीर्येरन्[2]।[3] सचेत्खलु पुनः कुलपुत्रायं[4] त्रिसाहस्रमहासाहस्रो[5] लोकधातुर्यक्षराक्षसैः परिपूर्णो[6] भवेत्ते ऽवलोकितेश्वरस्य महासत्त्वस्य नामधेयग्रहणेन दुष्टचित्ता[7] द्रष्टुमप्यशक्ताः स्युः। सचेत्खलु पुनः[8] कुलपुत्र कश्चिदेव[9] सत्त्वो दार्वायस्मयैर्[10]हडिनिगडबन्धनैर्बद्धो भवेदपराध्यनपराधी वा तस्यावलोकितेश्वरस्य
5 बोधिसत्त्वस्य महासत्त्वस्य नामधेय[11]ग्रहणेन क्षिप्रं तानि हडिनिगडबन्धनानि विवरमनुप्रयच्छन्ति[12]। ईदृशः कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रभावः[13]॥

सचेत्कुलपुत्रायं[14] त्रिसाहस्रमहासाहस्रो[15] लोकधातुर्धूर्तैरमित्रैश्चौरैश्च शस्त्रपाणिभिः परिपूर्णो[16] भवेत्तस्मिंश्चैकः सार्थवाहो महान्तं[17] सार्थं[18] रत्नाढ्यमनर्घ्यं[19] गृहीत्वा गच्छेत्[20]। ते

1) तानि is put in before शस्त्राणि in Ca. K. while A. W. repeats it in the same place.

2) र्येयुः Ca. K. खण्डखण्डानि गच्छेयुः O.

3) The paragraph is left out in Cb.

4) त्रयं Ca. त्रेयं K.

5) स्रो Ca. K.

6) र्णा K.

7) In Cb. only.

8) खलु पुनः in B. Cb. only.

9) एव in Cb. only.

10) Left out in Cb. दारुमयैर्वा अयस्मयैर्वा O.

11) धेय wanting in all but O.

12) A. B. Cb. K. W. add स्म. दास्यन्ति for अनुप्रयच्छन्ति O.

13) विषयः O.

14) त्रयं Ca. K.

15) स्री Ca. स्र O.

16) र्णा B. Ca. Cb. K.

17) महान्तं सत्त्वसार्थं A. W. महान्तं सर्वसार्थं B. K. महासत्त्वः सार्थं Cb. महन्तं सार्थं O.

18) घना Cb.

19) मनर्घ्यं left out in Cb. K.

20) Left out in A. B. W. ते च सार्थिकास्तं मार्गं गच्छन्तस्तां° O.

गच्छन्तस्तांश्चौरान्धूर्तांश्शत्रूंश्च शस्त्रहस्तान्पश्येयुः[1][2]। दृष्ट्वा च पुनर्भीतास्त्रस्ता अशरणमात्मानं संजानीयुः[3]। स[4] च सार्थवाहस्तं सार्थमेवं ब्रूयात्। मा भैष्ट कुलपुत्रा मा भैष्टाभयंददमवलोकितेश्वरं बोधिसत्त्वं महासत्त्वमेकस्वरेण सर्वे[5] समाक्रन्दध्वम्। ततो यूयमस्माच्चौरभयादमित्रभयात्क्षिप्रमेव[6] परिमोक्ष्यध्वे। अथ खलु सर्व एव स सार्थ एकस्वरेणावलोकितेश्वरमाक्रन्देत्[7]। नमो नमस्तस्मा[8] अभयंददायावलोकितेश्वराय बोधिसत्त्वाय महासत्त्वायेति। 5 सहनामग्रहणेनैव स सार्थः सर्वभयेभ्यः परिमुक्तो भवेत्। ईदृशः कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रभावः॥

ये कुलपुत्र रागचरिताः सत्त्वास्ते ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतरागा भवन्ति। ये द्वेषचरिताः सत्त्वास्ते ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतद्वेषा भवन्ति। ये मोहचरिताः सत्त्वास्ते ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कृत्वा विगतमोहा भवन्ति। एवं महर्द्धिकः कुलपुत्रावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः॥ 10

यश्च कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य पुत्रकामो मातृग्रामो नमस्कारं करोति तस्य[9] पुत्रः प्रजायते ऽभिरूपः प्रासादिको दर्शनीयः पुत्रलक्षणसमन्वा-[10]

1) गच्छेस्ता A. गच्छेत तान् Ca. गच्छन्तान् Cb. गच्छंस्तां K. W.
2) पश्येत् A. W.
3) नीया A. नीरन् B. Cb. नीयः Ca. नीयुः K. संज्ञीरं W. नेयुः O.
4) Left out in A. Ca.
5) सर्वे A. सर्वं W. left out in B. Ca. Cb. K. O.
6) क्षिप्रमेव in Cb. only.
7) क्रंदयुः A. क्रंदेयुः B. W. O. क्रंदतः Ca. क्रंदेरन् Cb.
8) तस्मै A. Cb. K. W. तस्मिन् Ca. A break in O.
9) तस्या A. W. तस्य B. Cb. K. तस्याः Ca.
10) पुरुष A. W. B. पुत्र Ca. Cb. K.

गतो बहुजनप्रियो मनापो[1] ऽवरोपितकुशलमूलश्च[2] भवति । यो दारिकामभिनन्दति तस्य[3] दारिका प्रजायते ऽभिरूपा प्रासादिका दर्शनीया परमया[4] शुभवर्णपुष्करतया[4] समन्वागता[4] दारिकालक्षणसमन्वागता[5] बहुजनप्रिया मनापावरोपितकुशलमूला[6] च भवति । ईदृशः कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य प्रभावः ।

5 ये[7] च[8] कुलपुत्रावलोकितेश्वरस्य[9] बोधिसत्त्वस्य[9] महासत्त्वस्य[9] नमस्कारं करिष्यन्ति[10] नामधेयं च धारयिष्यन्ति[11] तेषाममोघफलं भवति । यश्च कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं करिष्यति[12] नामधेयं च धारयिष्यति[13] । यश्च द्वाषष्टीनां[14] गङ्गानदीवालिकासमानां[15] बुद्धानां भगवतां[16] नमस्कारं कुर्यान्नामधेयानि च धारयेद्यश्च तावतामेव[17] बुद्धानां भगवतां तिष्ठतां ध्रियतां[18] यापयतां चीवरपिण्डपातशयनासनग्लानप्रत्य-

---

1) मनापो A. W. मनआपो B. Ca. मनापा Cb.

2) लो A. W. लश्च B. Ca. Cb. K.

3) तस्या A. Ca. W. तस्य B. Cb. K.

4) Left out in Cb.

5) समलंकृता B. K.

6) मना in all MSS.

7) च in B. K. only. B. adds तु.

8) कुलपुत्र left out in Ca. Cb.

9) °राय °त्वाय. So almost always in similar cases before and after in Cb.

10) करिष्यति A. °न्ति W. left out in Cb. कुर्वन्ति Ca. K.

11) From नाम° till ष्यन्ति left out in Ca. From नमस्कारं till ष्यन्ति left out in Cb.

12) कुर्यात् Ca.

13) धारयेत् Ca.

14) ष्टिगंगा B. K. ष्टीभ्यो Cb.

15) कोप A. W.

16) कोपमेभ्यो बुद्धेभ्यो भगवद्भ्यो Cb.

17) एव in Cb. only.

18) Left out in Cb. while B. Ca. read ध्रियमानानां and put it after यापयतां.

यभैषज्यपरिष्कारैः[1] पूजां कुर्यात्। तत्किं मन्यसे कुलपुत्र कियत्तं[2] स कुलपुत्रो वा कुलदुहिता वा ततो निदानं[3] पुण्याभिसंस्कारं प्रसवेत्[4]। एवमुक्ते ऽक्षयमतिर्बोधिसत्त्वो महासत्त्वो[5] भगवन्तमेतदवोचत्। बहु भगवन्बहु सुगत स[6] कुलपुत्रो वा कुलदुहिता वा ततोनिदानं बहु[7] पुण्याभिसंस्कारं प्रसवेत्[8]। भगवानाह। यश्च कुलपुत्र तावतां[9] बुद्धानां भगवतां सत्कारं कृत्वा[10] पुण्याभिसंस्कारो यश्चावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्यान्तश एकमपि नमस्कारं कुर्यान्नामधेयं च धारयेत्समो[11] ऽनधिको ऽनतिरेकः पुण्याभिसंस्कार उभयतो भवेत्[12]। यश्च तेषां द्वाषष्टीनां गङ्गानदीवालिकासमानां बुद्धानां भगवतां सत्कारं[13] कुर्यान्नामधेयानि[14] च धारयेत्। यश्चावलोकितेश्वरस्य[15] बोधिसत्त्वस्य महासत्त्वस्य नमस्कारं कुर्यान्नामधेयं च धारयेत्। एतावुभौ पुण्यस्कन्धौ न सुकरौ क्षपयितुं कल्पकोटीनयुतशत- 5

---

1) भैषज्य left out in W.

2) कियत्स K. स left out in A. Ca. W.

3) In Ca. only.

4) प्रसूयते B.

5) Ch. adds तं.

6) Left out in Cb.

7) Left out in Cb. बहुतरं W.

8) रः प्रसूयते B.

9) ताव left out in B.

10) B. K. add गुरुकारं कृत्वा माननां पूजनामर्थनामपचायनां कृत्वा; for मर्थ to r. मर्च.

11) From समो till धारयेत् (before एता) left out in Cb.

12) भवेत् in Ch. only.

13) नमस्कारं Ca.

14) धेयं A. W.

15) This paragraph is left out in A. Cb.

मरुद्भिरपि । एवमप्रमेयं कुलपुत्रावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्य नामधार[1]-
णात्पुण्यम्[2] ॥

अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । कथं भगवन्नवलो-
कितेश्वरो बोधिसत्त्वो महासत्त्वो ऽस्यां सहायां[3] लोकधातौ प्रविचरति[4] । कथं सत्त्वानां[5] धर्मं
5 देशयति । कीदृशश्चावलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्योपायकौशल्यविषयः ।
एवमुक्ते भगवानक्षयमतिं बोधिसत्त्वं महासत्त्वमेतदवोचत् । सन्ति कुलपुत्र लोकधातवो
येष्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बुद्धरूपेण[6] १ सत्त्वानां धर्मं देशयति । सन्ति लो-
कधातवो येष्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो बोधिसत्त्वरूपेण[7] २ सत्त्वानां धर्मं देशय-
ति । केषांचित्[8]प्रत्येकबुद्धरूपेणावलोकितेश्वरो ३ बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देश-
10 यति । केषांचिच्छ्रावकरूपेणावलोकितेश्वरो ४ बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशय-
ति । केषांचिद्ब्रह्म[9]रूपेणावलोकितेश्वरो ५ बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति ।
केषांचिच्छक्र[10]रूपेणावलोकितेश्वरो ६ बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति । केषां-
चिद्गन्धर्वरूपेणावलोकितेश्वरो ७ बोधिसत्त्वो महासत्त्वः सत्त्वानां धर्मं देशयति । [11]यक्षवैने-

---

1) A. W. add धेयं.

2) पुण्यः Cb. पुण्य Ca. left out in A.

3) ऽस्मिं सहे B. K.

4) Cb. adds स्म.

5) सत्त्वेभ्यो Ch. So in similar cases hereafter.

6) K. adds च.

7) बोधिसत्त्व left out in Cb.

8) केभ्यश्चित् Cb. So in similar cases hereafter.

9) ब्रह्म Ch. ब्राह्मण Cb.

10) इन्द्र Ch.

11) K. adds केषांचिद्.

यानां[1] सत्त्वानां यत्तरूपेण ८ धर्मं देशयति । ईश्वरविनेयानां[2] सत्त्वानामीश्वररूपेण ९ धर्मं देशयति । महेश्वरविनेयानां[3] सत्त्वानां महेश्वररूपेण १० धर्मं देशयति । चक्रवर्तिराज[4]विनेयानां[5] सत्त्वानां चक्रवर्तिराजरूपेण[6] ११ धर्मं देशयति । पिशाचविनेयानां सत्त्वानां पिशाचरूपेण १२ धर्मं देशयति । वैश्रवण[7]विनेयानां[8] सत्त्वानां वैश्रवणरूपेण[7] १३ धर्मं देशयति । सेनापतिविनेयानां[8] सत्त्वानां सेनपतिरूपेण १४ धर्मं देशयति । ब्राह्मणविनेयानां[8] सत्त्वानां ब्राह्मणरूपेण १५ धर्मं देशयति । वज्रपाणिविनेयानां[9] सत्त्वानां वज्रपाणिरूपेण १६ धर्मं देशयति । एवमचिन्त्यगुणसमन्वागतः कुलपुत्रावलोकितेश्वरो बोधिसत्त्वो महासत्त्वः[10] । तस्मात्तर्हि कुलपुत्रावलोकितेश्वरं बोधिसत्त्वं महासत्त्वं पूजयध्वम्[11] । एष कुलपुत्रावलोकितेश्वरो बोधिसत्त्वो महासत्त्वो[12] भीतानां सत्त्वानामभयं ददाति । अनेन कारणेनाभयंदद इति संज्ञायत इह सहायां[13] लोकधातौ ॥ 10

अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । दास्यामो वयं भगवन्नवलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय धर्मप्राभृतं धर्माच्छादम् । भगवानाह । यस्येदानीं[14] कुलपुत्र कालं मन्यसे ॥ अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वः स्व-

---

1) नैयिकानां A. Cb. नयिकेभ्यः सत्वेभ्यो Ch. So in similar cases hereafter.
2) नयिक A. नैयक W.
3) The following three paragraphs are left out in B.
4) राज left out in A. Cb. K.
5) Left out in K.
6) नयिक A.
7) उच्छ्रेय (for वैश्रवण) Cb. Ch.
8) नैयिका Cb.
9) Ch. adds यावद्.
10) A. K. add ऽवलोकितेश्वरो बोधिसत्व (left out in K.) इत्युच्यते.
11) पूजयेत् B. K.
12) B. K. add अवलोकितेश्वर इत्युच्यते । then read भीतेभ्यः सत्वेभ्यो ऽभयं.
13) सहे B. K.
14) Left out in Ca.

कण्ठादवतार्य शतसहस्रमूल्यं[1][2] मुक्ताहारमवलोकितेश्वराय बोधिसत्त्वाय महासत्त्वाय धर्माच्छादमनुप्रयच्छति[3] स्म[4]। प्रतीच्छ[5] सत्पुरुषेमं धर्माच्छादं[6] ममान्तिकात्। स न प्रतीच्छति स्म॥ अथ खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वो ऽवलोकितेश्वरं बोधिसत्त्वं महासत्त्वमेतदवोचत्। प्रतिगृहाण[7] त्वं कुलपुत्रेमं मुक्ताहारमस्माकमनुकम्पामुपादाय॥ अथ
5 खल्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो ऽक्षयमतेर्बोधिसत्त्वस्य महासत्त्वस्यान्तिकात्तं मुक्ताहारं प्रतिगृह्णाति[8] स्माक्षयमतेर्बोधिसत्त्वस्य महासत्त्वस्यानुकम्पामुपादाय तासां च[9] चतसृणां पर्षदां तेषां च देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्याणामनुकम्पामुपादाय। प्रतिगृह्य च द्वौ प्रत्यंशौ कृतवान् कृत्वा[10] चैकं प्रत्यंशं भगवते[11] शाक्यमुनये ददाति स्म द्वितीयं प्रत्यंशं भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य रत्न-
10 स्तूपे समुपनामयामास[12]। ईदृश्या कुलपुत्र विकुर्वया[13]वलोकितेश्वरो बोधिसत्त्वो महासत्त्वो ऽस्यां सहायां[14] लोकधातावनुविचरति[15]॥

---

1) दश (for शत) Cb. सहस्र (for the same) Ca.

2) स्रं K.

3) दनम Ca.

4) स्म left out in B.

5) From प्रती° till स्म left out in Cb.

6) दनं A. W.

7) गृह्ण A. Ca. Cb. W.

8) प्रतीच्छति B. K.

9) In Ca. only.

10) च तं द्विपत्यंशं कृत्वा (for च द्वौ°) Cb.

11) Left out in Cb.

12) समुन्नाम Cb.

13) क्रीव A. कुर्व Ca. Cb. क्रीड B. K. W.

14) ऽस्मिं सहे B. K.

15) स्म is added in A. Ca. Cb. W. but left out in B. K.

अथ खलु भगवांस्तस्यां(1) वेलायामिमा गाथा अभाषत ॥

(2)चित्रध्वज(3) अक्षयोमती(4) एतमर्थ(5) परिपृच्छ(6) कारणात्(7)।

केन(8) जिनपुत्र हेतुना(9) उच्यते(10) हि(11) अवलोकितेश्वरः ॥ १ ॥

अथ(12) तादृशता(13) विलोकिया(14) प्रणिधीसागरु(15) अक्षयोमतिः(16)।

चित्रध्वज(17) अधिभाषते(18) शृणु चर्यामवलोकितेश्वरे(19) ॥ २ ॥

---

1) Ch. reads खल्वक्षयमतिर्बोधिसत्त्वो महासत्त्वस्तस्यां, which agrees with Kumārajīva's version, though the following verses were translated by Jñānagupta sometime after Kumārajīva, and added to the version of the latter. The verses are altogether left out in the oldest Chinese version by Dharmarakṣa Cp. the English translation, p. 413.

2) These verses seem to be in the metre वैतालीय.

3) ज्ञो Cb.

4) अक्षयमति A. W. Rather अक्षयामती.

5) तेधनमथु B.

6) च्छिक्ष Ch.

7) णा A. B. Ca. K. णात् Cb. Ch. णं W.

8) The metre requires one short syllable more.

9) ना left out in K.

10) left out in K.

11) उच्यते हृ वलो A. W.

12) अर्थ A. W.

13) सादृशतामिव वि A. सादृशनामव B. तादृशता दिशाव K.

14) कितेया B. कितोया W.

15) रु A. र B. Cb. K. W.

16) ता A. B. K. W. तिः Cb. Ch.

17) ज्ञो Cb. ज the rest.

18) षमो A. B. K. षती Ca. Cb. षते Ch.

19) रो A.

[1]कल्पशत[2]नेकाचत्तिया बहुबुद्धान सहस्रकोटिभिः ।
प्रणिधान[3] यथा[4] विशोधितस्तथ[5] शृणुया हि[6] मम प्रदेशतः[7] ॥ ३ ॥

श्रवणो[8] [9]थ दर्शनो पि च अनुपूर्वं च तथा अनुस्मृतिः ।
भवतीह अमोघप्राणिनां सर्वदुःखभ[10]वशोकनाशकः ॥ ४ ॥

5 सचि[11] अग्निखदाय पा[12]तयेद्घातनार्थाय प्रदुष्टमानसः ।
स्मरतो अवलोकितेश्वरं[13] अभिषिक्तो इव अग्नि शाम्यति ॥ ५ ॥

सचि[14] सागरदुर्गि[15] पातयेन्नागमकरभूतआलये[16] ।
स्मरतो अवलोकितेश्वरं जलराजे[17] न कदाचि[18] सीदति ॥ ६ ॥

---

1) W. adds बहु.
2) शता A. B. W.
3) नु Ch.
4) यतो Cb.
5) तत्र Ca. ततो Cb. तथा W.
6) यतो Cb.
7) तो A. B. Cb. W. तेः Ca. तः Ch.
8) णा Ch.
9) अ left out in A. W.
10) सर्वभवदुःख B. K.
11) सच A. B. Ca. W. सचि Cb. Ch. K.
12) A. Ca. Cb. W. add प्र.
13) रो A. Cb. W. र् B. Ca. K. Ch.
14) सच B. W.
15) गरि दुर्ग A. B. K. गरि दुर्गि Ca. गरदुर्ग Cb. गरदुर्गि Ch.
16) भूतशांतमारये A. भूगमालये W.
17) राज्ञो A. B. K. ज्ञे Ca. Ch. ज्ञ Cb. ज्ञो W.
18) Ch. adds सं.

सचि[1] मेरुतलानुपातयेद्घातनार्थाय प्रदुष्टमानसः।
स्मरतो अवलोकितेश्वरं[2] सूर्यभूतो[3] व[4] नभे प्रतिष्ठति[5]॥ ७॥
वज्रामयपर्वताशनो[6] घतनार्थाय[7] च मूर्ध्नि ओषरेत्[8]।
स्मरतो अवलोकितेश्वरं[9] रोमकूप[10] न प्रभोन्ति हिंसितुम्[11]॥ ८॥
सचि[1] शत्रुगणैः परीवृतः शस्त्रहस्तैभि[12] विहिंसचेतसैः[13]।
स्मरतो अवलोकितेश्वरं[9] मैत्रचित्त[14] तद् भोन्ति[15] तत्क्षणम्॥ ९॥
सचि आघतने[16] उपस्थितो[17] वध्यघातान[18] वशं गतो भवेत्।
स्मरतो अवलोकितेश्वरं[19] खण्डखण्ड तद् शस्त्र गच्छियुः[20]॥ १०॥

---

1) साच W.
2) रो A. B. Ca. Cb. K. रं Ch. W.
3) तं B. तो Cb. प्रभूतं A. W.
4) Left out in Ca.
5) ष्ठित A. ष्ठति B. Ca. K. W. ष्ठते Cb.
6) वज्र Ca. Ch.
7) सनि A. सनो B. W. Ca. K. यदि Cb. यदि Ch.
8) च यदि ओषधीं A. यदि ओषधी W. यदि मूर्द्ध आषरो B. च दुष्टमानसो Cb. च मूर्ध्नि अषिरेन् Ch. च मूर्द्ध ओषरेत् K. Cp. ओसरति, ओशिरति Mahāvastu. I 24,1; 143,18; 209,9; II, 4,6; 334,22.
9) रं A. B. K. W. रो Cb.
10) Left out in W.
11) हिंसना Cb.
12) हि A. K. Cb. भि B. Ca. Cb.
13) मनसैः Ch.
14) मि Cb.
15) त्त ते भवन्ति Ca. त्त तद्भोन्ति K.
16) घा B. Ch.
17) ते Ca. Cb.
18) ना A.
19) रो Ca. Cb. So too in following verses.
20) ष A. B. Ca. Cb. K. W. यु W.

सचि दारुमयैरयोमयैर्हडिनिगडैरिह[1] बद्ध बन्धनैः ।
स्मरतो अवलोकितेश्वरं क्षिप्रमेव विपटन्ति बन्धना ॥ ११ ॥
मन्त्रा[2]बलविद्य[3]औषधी भूतवेताल[4] शरीर[5]नाशनाः ।
स्मरतो अवलोकितेश्वरं तेन गच्छन्ति यतः[6] प्रवर्तिताः ॥ १२ ॥
सचि घोर[7]क्रैः परी[8]वृतो यक्षनागासुर[9]भूतराक्षसैः ।
स्मरतो अवलोकितेश्वरं रोमकूपं न प्रभोन्ति[10] हिंसितुम् ॥ १३ ॥
सचि व्याडमृगैः परी[8]वृतस्तीक्ष्णदंष्ट्र[11]नखैर्महा[12]भयैः ।
स्मरतो अवलोकितेश्वरं[13] क्षिप्रं[14] गच्छन्ति दिशा समन्ततः[15] ॥ १४ ॥
सचि दृष्टि[16]विषैः परी[17]वृतो ज्वलनार्चिःशिखि[18]दुष्टदारुणैः ।
स्मरतो अवलोकितेश्वरं[19] क्षिप्रमेव तद् सन्ति[20] निर्विषाः ॥ १५ ॥

1) रिह A. W. रपि B. K. Cb. भि Ca.
2) त्र A. Cb. W.
3) व्या Ca. 4) ड Ch. K.
5) शरीर left out in Cb.
6) In Ca. K. only.
7) घो A. B. Ca. W.
8) रि A. B. Ca. W. री K.
9) नागमकरासुर Ca.
10) प्रभोन्तु K.
11) दंत Cb.
12) नखैर्मला Cb. Ch.
13) रो Cb.
14) प्रं B. Ch.
15) दिशा समंततो A. K. दिशनानसक: B. Ch. दिसान्समंततो Ca. दिशा समंतः Cb. दिसा सम । ततो W.
16) पृष्ठ A. K. W. स्पृष्ठ B. Ch. दृष्टि Cb.
17) रि in all MSS.
18) शिखे Cb. 19) रो Ca.
20) ते भवन्ति A. Ca. W. ते left out in B. तद् संति Cb. भवन्ति K.

गम्भीर[1] सविद्यु[2] निश्चरी[3] मेघवज्राशनिवारिप्रस्रवाः[4] ।
स्मरतो ऽवलोकितेश्वरं[5] क्षिप्रमेव प्रशमन्ति तत्क्षणम्[6] ॥ १६ ॥

बहुदुःखशतैरुपद्रुतान्सत्त्व[7] दृष्ट्वा[8] बहुदुःखपीडितान्[9] ।
शुभज्ञानबलो विलोकिया[10] तेन त्राताहु जगे[11] सदेवके ॥ १७ ॥

ऋद्धीबलपारमिंगतो विपुलज्ञानउपायशिक्षितः ।
सर्वत्र दशादिशी[12] जगे सर्वक्षेत्रेषु[13] अशेष दृश्यते[14] ॥ १८ ॥

ये च अक्षणदुर्गतीभया[15] नरकतिर्यग्यमस्य[16] शासने ।
जातीजर[17]व्याधिपीडिता[18] अनुपूर्वं प्रशमन्ति प्राणिनाम् ॥ १९ ॥

---

1) रे A. Ca.

2) सु Cb. Ch. W.

3) Left out in A. W. निश्चरी for निश्चरे.

4) पारिप्रस्रवां A. वारि left out in B. पारप्रस्रवा Ca. पारप्रेसेवा Cb. धारप्रस्रवाः Ch. वारिप्रस्रवाः K. वारिप्रस्रावां W.

5) रो Ca. Cb.

6) णा Cb. Ch.

7) ता A. Ca. W. तां B. Cb. तान् Ch. K.

8) सर्वदृष्ट A. W. सत्व दृष्टि B. K. सर्वसत्व दृष्ट्व Ca. सत्व दृष्ट Cb. सत्वां दृष्ट्वा Ch.

9) तां A. B. Ca. Cb. W. तान् Ch. ताः K.

10) क्रिया A. B. Ca. कियात् Cb. कितया W.

11) त्रातानुजशमदेवके A. त्राताहु जगे B. Ca. Ch. K. त्राताहु जागे Cb. त्राताहु जग W.

12) से Ca. शि Cb. सि W. All दश.

13) सर्व left out in Cb.

14) ति B.

15) ये च मुत्कालणा A. ये च सत्वा अक्षणा B. ये च सत्वाक्षणा Cb. W. ये च सर्वाक्षणा K. ये सत्वा अक्षणा Ch. Our reading conjectural.

16) तोर्यग्यम A. तिर्यग्यम B. Ca. Cb. स्तिर्यग्यम Ch. तिर्यक्यम K. तिर्यग्गयम W.

17) जरा A. B. Cb. K. W. जर Ca.

18) परिपीडिता K.

[1] अथ खल्वक्षयमतिर्हृष्टतुष्टमना इमा गाथा अभाषत ॥

शुभलोचन मैत्रलोचना प्रज्ञाज्ञानविशिष्ट[2]लोचना ।

कृ[3]पलोचन[4] शुद्ध[5]लोचना प्रेमणीया सुमुखा सु[6]लोचना ॥ २० ॥

अमलामल[7]निर्मलप्रभा वितिमिरज्ञान दिवाकर[8]प्रभा ।

अपहृतानल[9]ज्वलप्रभा प्रतपन्तो जगती[10] विरोचसे[11] ॥ २१ ॥

कृपसद्गुण[12]मैत्र[13]गर्जिता शुभगुण मैत्रमना महाघना ।

क्लेशाग्नि शमेसि[14] प्राणिनां धर्मवर्ष[15] अमृतं प्रवर्षसि ॥ २२ ॥

कलहे च विवादविग्रहे नरसंग्रामगतो महाभये[16] ।

स्मरतो अवलोकितेश्वरं[17] प्रशमेया[18] अरिसंघपापका[19] ॥ २३ ॥

---

1) This paragraph is left out in Cb. Ch. Cp. English translation p. 415.

2) विशुद्ध Ch.

3) कृपा A.

4) कृपलोचन left out in Cb.

5) विशुद्ध Cb.

6) सु left out in A.

7) अमलमल A. W. अमलविमल Ch.

8) प्रभा A. W.

9) त अनि B. Cb. रात अनि Ca. All have °निलज्वल. The metre disturbed.

10) रो K.

11) सि B. Ca. K. ते Cb.

12) संभूत B. Cb. K.

13) शील Ch.

14) ति Cb.

15) र्ष म A. B. Cb. K. W. र्षम Ca. Ch. We read र्ष अ for the sake of metre.

16) यः Cb.

17) रो Cb.

18) प्रसमेसी Ca.

19) पासका A. पाशका W. पापका B. पापको Ca. पातकान् Cb. संपपका Ch. संघपापका K.

मेघस्वर[1] दुन्दुभिस्वरो[2] जलधरगर्जित ब्रह्मसु[3]स्वरः[4]।
स्वर[5]मण्डलपारमिंगतः स्मरणीयो[6] अवलोकितेश्वरः ॥ २४ ॥

स्मरथा स्मरथा[7] माकाङ्क्षथा शुद्धसत्त्वं[8] अवलोकितेश्वरम्।
मरणे व्यसने उपद्रवे[9] त्राणु भोति शरणं[10] परायणम्[11] ॥ २५ ॥

सर्व[12]गुणपारमिंगतः सर्व[13]सत्त्वकृपमैत्रलोचनो[14]।
गुणभूत[15] महागुणोदधी[16] वन्दनीयो[17] अवलोकितेश्वरः[18] ॥ २६ ॥

---

1) श्वर Ch.

2) श्वरा Ch.

3) सु left out in Ch.

4) स्वरो A. B. Ca. W. स्वरा Cb. स्वरः Ch.

5) स्म A. B. W.

6) पु Ca.

7) सा B. मा Ca. Cb. K. Is left out in A. Cb. W The long vowel of मा destroys the metre.

8) त्वमत्र in all MSS.

9) त्रुपद्रुते A.

10) णं Ca. Ch. णो Cb.

11) ने Cb. णं Ch.

12) Ch. adds धर्म. Perhaps the true reading is सर्वधर्म, for गुण is metrically wrong.

13) सर्व left out in A.

14) नो A. B. K. W. ना Ca. Cb. नः Ch.

15) गुणाभूत A. W. गुणभूत B. Ca. गुणभूमि Cb. गुणभूतु K.

16) धि Cb.

17) ये Cb.

18) रो A. B. Ca. Cb. K. W. रः Ch.

[1]यो ऽसौ अनुकम्पको जगे बुद्ध[2] भेष्यति[3] अनागते ऽध्वनि।
सर्वदु:ख[4]भय[5]शोकनाशकं[6] प्रणमामी[7] अवलोकितेश्वरम्॥ २७॥
लोकेश्वरु[8] राजनायको भिक्षु धर्माकरु[9] लोकपूजितो[10]।
बहुकल्पशतांश्चरित्वा नायको[11] प्राप्त[12] बोधिं विरजां[13] अनुत्तराम्[14]॥ २८॥
स्थित[15] दक्षिणवामतस्तथा[16] वीजयन्त[17] अमिताभ[18]नायकम्।
[19]मायोपम ते समाधिना सर्वक्षेत्र जिनगन्ध[20] पूजिषु॥ २९॥

---

1) The remaining seven verses are left out in the Chinese version.

2) A. Cb. W. add सो.

3) तो Ca. ति Cb.

4) दु:ख left out in Ca.

5) भव B. K. W.

6) सनो A. B. K. W. सको Ca. सनं Cb. शकः Ch.

7) मो B. Ca. K. Cb. W. मि A. Ch.

8) श्वरु K. श्वर the rest.

9) करुणा A. रो Ca. W. र Cb. Ch. स K. left out in B.

10) तो A. B. K. W. ता Ca. Cb.

11) शतां चरित्वा नायनाः A. शतां चरित्वान B. सत चरित्व नायका Ca. शतसहस्र चरित्व Cb. शतां अचिन्तिया Ch. शतां चरित्व नायका K. शताश्चरित्व नायकाः W. The metre disturbed. Perhaps कल्पशत च°.

12) प्तो A. B. W. प्त Ca. Cb. Ch. K.

13) जा A. B. Cb. Ch. K. W. जां Ca.

14) रा A. B. Ca. Ch. K. W. रं Cb.

15) तो Cb.

16) तेस्त A. W. तो त B. Ca. Cb. K. तस्त Ch.

17) वीजंतु A. W. वीजंत Cb. °यन्तु K.

18) भु B. K. पु Ca. Ch.

19) This whole line is left out in Cb. We propose to read तं for ते.

20) जिन गता K.

दिशि[1] पश्चिम यत्र[2] सुखाकरा[3] लोकधातु विरजा सुखावती[4]।
यत्र एष[5] अमिताभनायकः[6] संप्रति तिष्ठति[7] सत्वसारथिः ॥ ३० ॥

न च इस्त्रिण तत्र संभवो नापि च मैथुनधर्म सर्वशः।
उपपादुक[8] ते जिनोरसाः[9][10] पद्मगर्भेषु निषण्ण[11] निर्मलाः ॥ ३१ ॥

सो चैव अमिताभनायकः[12] पद्मगर्भे विरजे मनोरमे।
सिंहासनि[13] संनिषण्णको[14] शालराजो[15] व यथा[16] विराजते ॥ ३२ ॥

सो ऽपि तथा[17] लोकनायको यस्य नास्ति त्रिभवे ऽस्मि[18] सादृशः।
यन्मे[19] पुण्य स्तविन संचितं[20] क्षिप्र भोमि[21] यथ त्वं नरोत्तम इति ॥ ३३ ॥

4) ते Ch.

5) सो हि Ch.

6) भु K.

7) साम्प्रतिंतिष्ठति K.

8) का A. W.

9) नो Ch. K.

10) रसा A. B. Ca. K. W. रथा Cb.

11) Left out in Cb.

12) सो चैव अमिभ A. सो च तथ लोम B. सो पि अमिताभु Ca. सो च तथ लोक Cb. K. सा चैव अमितायु Ch. सो चैव अमिताभ W. One short syllable too much; moreover चैव against the rule; metrically possible सो तथ अ°.

13) ने A. Ca. W. न B. Ch. नि Cb. सनि left out in K.

14) को in all MSS.

15) जं व A. जीव K. B. Ch. ज व Ca. Cb. जो व W.

16) यदा Ca.

17) सार तथ B. सो च तथ Cb. K. तमपीह हि Ch.

18) स्मिं A. K. W.

19) यन्मया A. B. W. यत्सन Ca. पद्म Cb. यन्मे Ch.

20) संचित् A. संचित B. W.

21) भोम A. B. Ca. K. भोमि Ch. भोतु Cb. सोम W.

अथ खलु धरणिंधरो बोधिसत्त्वो महासत्त्व उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणाम्य[1] भगवन्तमेतदवोचत् । न ते भगवन्सत्त्वा अवरकेण कुशलमूलेन समन्वागता भविष्यन्ति ये ऽवलोकितेश्वरस्य बोधिसत्त्वस्य महासत्त्वस्येमं धर्मपर्याय[2]परिवर्तं श्रोष्यन्त्यवलोकितेश्वरस्य बोधिस-
5 त्त्वस्य महासत्त्वस्य[3] विकुर्वानिर्देशं समन्तमुखपरिवर्तं[4] नामावलोकितेश्वरस्य बोधिसत्त्वस्य[5] विकुर्वण[6]प्रातिहार्यम् ॥

अस्मिन्खलु पुनः समन्तमुखपरिवर्ते[7] भगवता निर्देश्यमाने[8] तस्याः[9] पर्षदश्चतुरशीतीनां[10] प्राणिसहस्राणामसमसमायामनुत्तरायां सम्यक्संबोधौ[11] चित्तान्युत्पन्नान्यभूवन् ॥

॥ इति श्रीसद्धर्म[12]पुण्डरीके धर्मपर्याये समन्तमुखपरिवर्तो नामावलोकितेश्वरविकु-
10 र्वण[13]निर्देशश्चतुर्विंशतिमः[14] ॥

---

1) All प्रणाम्य.

2) धर्मपर्याय in Ca. only.

3) From वि° till स्य (before वि) left out in Ca. विक्रीडित is read in A. B. Ca. K. W. विकुर्वा in Cb. and विकुर्वाण in Cb.

4) परि° नाम left out in K.

5) स्य °स्य left out in A. W.

6) विकुर्वण Ca. Cb. विकुर्वाण Ch.

7) दिश्यमाने added in Cb.

8) निर्देश्यमानस्य A. निर्दिश्यमाने Ca. Cb. Ch. W.

9) तस्यां K.

10) ति B. K.

11) इति added in all but Cb.

12) आर्य (for इति श्री) K.

13) विकुर्वण A. विकुर्वा B. Ca. विकुर्व Cb. W. विकुर्वित Ch.

14) पंचविंश Cb.

# XXV.

अथ खलु भगवान्सर्वावन्तं बोधिसत्त्वगणामामन्त्रयामास[1]। भूतपूर्वं कुलपुत्रातीते ऽध्व-
न्यसंख्येयैः कल्पैरसंख्येयतरैर्यदासीत्तेन कालेन तेन समयेन जलधरगर्जितघोषसुस्वरनक्ष-
त्रराज[2]संकुसुमिताभिज्ञो[3] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोक उदपादि विद्याचरणसं-
पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भग- 5
वान्प्रियदर्शने कल्पे वैरोचनरश्मिप्रतिमण्डितायां[4] लोकधातौ। तस्य खलु पुनः कुलपुत्रा
जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य[5] तथागतस्य प्रवचने शुभव्यूहो नाम
राजाभूत्। तस्य खलु पुनः कुलपुत्रा राज्ञः शुभव्यूहस्य विमलदत्ता नाम भार्याभूत्। तस्य
खलु पुनः कुलपुत्रा राज्ञः शुभव्यूहस्य द्वौ पुत्रावभूतामेको[6] विमलगर्भो नाम द्वितीयो वि-
मलनेत्रो नाम। तौ च द्वौ दारकावृद्धिमन्तौ[7] चाभूतां प्रज्ञावन्तौ च पुण्यवन्तौ[8] च[9] ज्ञानवन्तौ[10] च[9] 10
बोधिसत्त्वचर्यायां चाभियुक्तावभूताम्[11]। तद्यथा दानपारमितायामभियुक्तावभूतां शीलपार-
मितायां[12] क्षान्तिपारमितायां[13] वीर्यपारमितायां ध्यानपारमितायां प्रज्ञापारमितायामुपायकौ-

---

1) This paragraph is left out in Cb. न्त्रयते स्म B. K.
2) राज left out in A.
3) मितो B. Cb. K.
4) ण्डिते B.
5) मितस्य in all MSS.
6) K. adds च.
7) व K.
8) Left out in Ca. Cb.
9) Left out in Ca. Cb.
10) Left out in Ca.
11) K adds त or व.
12) B. adds अभियुक्तावभूवतां।
13) Cb. adds अभियुक्तौ B. adds अभियुक्तावभूवतां।

शल्यपारमितायां मैत्र्यां[1] करुणायां मुदितायामुपेक्षायां यावत्सप्तत्रिंशत्सु बोधिपक्षिकेषु धर्मेषु[2]। सर्वत्र पारं गतावभूतां[3] विमलस्य समाधेः पारं गतौ नक्षत्रराजादित्यस्य[4] समाधेः पारं गतौ विमलनिर्भासस्य समाधेः पारं गतौ विमलभासस्य[5] समाधेः पारं गतावलंकार[6]-शुभस्य[7] समाधेः पारं गतौ महातेजोगर्भस्य समाधेः पारं गतावभूताम्। स च भगवांस्तेन कालेन तेन समयेनेमं सद्धर्मपुण्डरीकं धर्मपर्यायं देशयामास तेषां सत्त्वानामनुकम्पायै तस्य च राज्ञः शुभव्यूहस्यानुकम्पायै[8]। अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारको येन स्वमाता[9] जनयित्री[10] तेनोपसंक्रामतामुपसंक्रम्य दशनखमञ्जलिं[11] प्रगृह्य जनयित्रीमेतदवोचताम्। एह्यम्ब[12] गमिष्यावस्तस्य[13] भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य[14] तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशं[15] तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं[16] तथागतमर्हन्तं सम्यक्संबुद्धं दर्शनाय वन्दनाय पर्युपासनाय। तत्कस्य हेतोः। एषो ह्यम्ब स भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञ[14]स्तथागतोऽर्हन्सम्यक्संबुद्धः सदेवकस्य लोकस्य पुरतः सद्ध-

1) मैत्र्यायां K. meant मैत्रायां.

2) Left out in A. W.

3) पारं गतां A. B. पारं गतावभूतां Ca. W. पारमितावभूतां Cb.

4) तारा (for राजा) Cb. K. W. that agrees with Kumārajīva's version.

5) भाष A. विमलाभस्वर Ca. Cb. °लाभाष W.

6) These three words are left out in B.

7) शुभ left out in B. सूर K.

8) म्पायै Ca. Cb. K. म्पामुपादाय the rest.

9) स्वा Cb. माता left out in Ca. Cb.

10) जनेत्री A. K. Cb. W.

11) लो A. W. खावञ्जलो B. इदञ्जलिं Cb.

12) एवं A. W.

13) म A. W. K. व B. Ca. मि Cb.

14) अभिज्ञ in Ca. only.

15) In Cb. added गत्वा.

16) मितं in all MSS.

र्मपुण्डरीकं नाम[1] धर्मपर्यायं विस्तरेण संप्रकाशयति[2]। तं श्रवणाय गमिष्याव[3]ः। एवमुक्ते कुलपुत्रा विमलदत्ता राजभार्या विमलगर्भं दारकं विमलनेत्रं च दारकमेतदवोचत्। एष खलु[4] कुलपुत्रौ युवयोः पिता राजा शुभव्यूहो ब्राह्मणेष्वभिप्रसन्नस्तस्मान्न लप्स्यथ[5] तं तथागतं दर्शनाया[6]भिगन्तुम्। अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारको दशनखमञ्जलिं प्रगृह्य तां स्व[7]मातरं जन[8]यित्रीमेतदवोचताम्। मिथ्यादृष्टिकुले ऽस्मिन्नावा 5
ज्जातावा[9]वां पुनर्धर्मराजपुत्राविति॥ अथ खलु कुलपुत्रा विमलदत्ता राजभार्या तौ द्वौ दारकावेतदवोचत्। साधु साधु कुलपुत्रौ युवां तस्य[10] स्वपितू राज्ञः शुभव्यूहस्यानुकम्पायै किंचिदेव प्रातिहार्यं सं[11]दर्शयतम्। अप्येव नाम युवयोरन्तिके प्र[12]सादं कुर्यात्प्र[13]सन्नचित्त[14]श्चास्माकमनुजानीयात्तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रसंकुसुमिताभिज्ञ[15]स्य तथागतस्यार्हतः सम्यक्संबुद्धमभिगन्तुम्॥ 10

अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारकस्तस्यां वेलायां सप्तताल[16]मात्रं वैहायसमभ्युद्गम्य तस्य पितू राज्ञः शुभव्यूहस्यानुकम्पायै बुद्धानुज्ञा[17]तानि यम-

1) Left out in K.

2) Ca. Cb. K. add स्म.

3) MSS. मः.

4) Left out in A. K. W.

5) था A. Ca. W. थान् B. ते Cb. त K. It ought to be थम्.

6) Left out in Cb. K.

7) स्वां Ca. K. W.

8) जने A. K. W.

9) श्चावां left out in A.

10) पुत्राभ्यामस्य K.

11) सं in Ca. only.

12) प्रा A. Cb. W.

13) प्रसन्न left out in A.

14) चित्त left out in Ca. Cb. K.

15) श्रभिज्ञ in Ca. only.

16) तालं (leaving out मात्रं) Ca. Cb. K.

17) ना A. W.

कानि[1] प्रातिहार्याण्यकुरुताम् । तौ तत्रैवान्तरीक्षे[2] गतौ शय्यामकल्पयतां[3] तत्रैवान्तरीक्षे चङ्क्रमतस्तत्रैवान्तरीक्षे[4] रजो व्यधुनीतां[5] तत्रैवान्तरीक्षेऽधःकायाद्वारिधारां[6] प्रमुमोचतुरूर्ध्व-[7]
कायादग्निस्कन्धं प्रज्वालयतः स्मोर्ध्वकायाद्वारिधारां[8] प्रमुमोचतुरधःकायादग्निस्कन्धं प्रज्वा-
लयतः स्म[9] । तौ[10] तस्मिन्नेवाकाशे महान्तौ भूत्वा क्षुद्रकौ भवतः क्षुद्रकौ भूत्वा महान्तौ
5 भवतः । तस्मिन्नेवान्तरीक्षेऽन्तर्धायतः[11] पृथिव्यामुन्मज्जतः[12] पृथिव्यामुन्मज्ज्याकाश उन्म-
ज्जतः । इयद्भिः खलु पुनः कुलपुत्रा ऋद्धिप्रातिहार्यैस्ताभ्यां द्वाभ्यां दारकाभ्यां स शुभ-
व्यूहो राजा स्वपिता विनीतः । अथ खलु कुलपुत्राः स राजा शुभव्यूहस्तयोर्दारकयो-
स्तमृद्धिप्रातिहार्यं दृष्ट्वा तस्यां वेलायां[13] तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो
दशनखमञ्जलिं[14] प्रगृह्य तौ दारकावेतदवोचत् । को युवयोः कुलपुत्रौ[15] शास्ता कस्य वा

---

1) Left out in Cb. यमलकानि K.

2) न्त B. K. W.

3) शय्यामवकल्पयतः Ca. शय्यां कल्पतम् K.

4) चंक्रम्यमेतयोतः A. चंक्रम्येतम् B. चंक्रमतः । K. चंक्रम्यतयो W. left out in Ca. Cb.

5) व्यधुनीता B. वियूनतः Ca. विधुनतः K.

6) रा K.

7) प्रमोचतुः A. W. प्रमुंचतुः B. प्रमुंचतः Ca. प्रमुमोचतः K.

8) From स्मो till प्रज्वालयतः left out in K.

9) Left out in all MSS., but added here conjecturally.

10) B. K. add च.

11) न्तधार्यतः A. अन्तर्द्धता B. ऽन्तधर्यतः Ca. ऽंतर्धार्यतः K. अन्तधार्यतः W. Cp. Pāli *antaradhāyati*.

12) Left out in K.

13) A. W. add दृष्ट.

14) ली B. लीम् K.

15) त्रयोः K.

युवां शिष्याविति । अथ खलु कुलपुत्रास्तौ[1] द्वौ[2] दारकौ तं राजानं शुभव्यूहमेतदवोचत्[3]। एष स[4] महाराज भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्[5]तथागतो ऽर्हन्सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति रत्नमये बोधिवृक्षमूले धर्मासनोपविष्टः[6] सदेवकस्य लोकस्य पुरतः[7] सद्धर्मपुण्डरीकं[8] नाम धर्मपर्यायं विस्तरेण संप्रकाशयति[9]। स आवयोर्भगवाञ्छास्ता[10] तस्यावां महाराज शिष्यौ । अथ खलु कुलपुत्राः[11] स राजा शुभव्यूहस्तौ दारकावेतदवोचत् । पश्यामो वयं कुलपुत्रौ तं युवयोः शास्तारं । गमिष्यामो वयं तस्य भगवतः सकाशम् ॥ 5

अथ खलु कुलपुत्रास्तौ द्वौ दारकौ[12] ततो ऽन्तरीक्षादवतीर्य येन स्वमाता[13] जनयित्री[14] तेनोपसंक्रामतामुपसंक्रम्य दशनखमञ्जलिं प्रगृह्य स्वमातरं[13] जनयित्रीमेतदवोचताम्[15] । एष आवाभ्यामम्ब विनीतः[16] स्वपितानुत्तरायां सम्यक्संबोधौ । कृतमावाभ्यां पितुः शास्तृकृत्यं । तदिदानीमुत्स्रष्टुमर्हस्यावां[17] तस्य भगवतः सकाशे प्रव्रजिष्याव इति ॥ 10

1) तौ left out in A. W.

2) द्वौ left out in Cb. K.

3) Rather चताम्.

4) Left out in B. Ca. Cb.

5) अभिज्ञ left out in all MSS.

6) सिंह added in A. W.

7) B. adds समारकस्य पुरतः सब्रह्मकस्य.

8) Left out in Ca. W.

9) Ca. Cb. K. add स्म.

10) वां च्छा K.

11) Left out in K.

12) K. reads: पुत्रा स राजा तौ दारकौ; A. W. leave द्वौ out also.

13) स्वा K.

14) ने W. left out in Cb.

15) ने A. W.

16) Left out in Ca. K.

17) त्सृष्टुमर्हथ वाचावां A. त्स्रष्टुमर्हस्यवं B. त्स्रष्टुमहम्यावां Ca. त्सृष्टुमर्हस्यां Cb. त्सृष्टुमर्हस्यवाचावां W.

अथ खलु कुलपुत्रा विमलगर्भो दारको विमलनेत्रश्च दारकस्तस्यां वेलायां स्व-[1] मातरं जनपित्रौ[2] गाथाभ्यामध्यभाषताम् ॥

अनुजानीथ्वयोरेव[3] प्रव्रज्यामनगारिकाम् ।
आवां वै[4] प्रव्रजिष्यावो[5] दुर्लभो हि[6] तथागतः ॥ १ ॥

5 औदुम्बरं यथा पुष्पमतो[7] दुर्लभतरो[7] जिनः ।
उत्सृज्य प्रव्रजिष्यामो[8] दुर्लभा[9] तथासंपदा[10] ॥ २ ॥

विमलदत्ता[11] राजभार्याह ॥

उत्सृजामि युवामद्य गच्छथा साधु[12] दारकौ ।
वयं पि प्रव्रजिष्यामो दुर्लभो हि तथागत इति ॥ ३ ॥

10 अथ खलु कुलपुत्रास्तौ द्वौ[13] दारकाविमे गाथे भाषित्वा[14] तौ[15] मातापितरावेतदवोच-

1) तां A. W. स्व B. Cb. स्वां Ca. K.

2) जने A. K. W.

3) उत्सृज्यस्व अस्वमस्माकं B. उत्सृज्यस्वाम्बमस्माकं K. Probably a more original reading; cp. Pāli *ossajjati*, against Skr. °सृजति.

4) वयं च B. वयं वै K.

5) मो Ca. K.

6) वै Ca. K.

7) ततो K.

8) मो B. Ca. Cb. K. वो A. W.

9) भा A. B. K. W. भाः Cb.

10) दः A. दा B. Ca. Cb. K. दाः W.

11) राजभार्या left out in B. Cb. K.

12) उत्सृज्याम्यहं युष्माकं साधु गच्छत B. गच्छेथ K. उत्सृज्यामि° गच्छतां Ca. उत्सृज्याम्यहं युष्मान् साधु गच्छत Cb. गच्छेथा A. W.

13) Left out in A.

14) Left out in B.

15) K. adds स्व.

ताम्। साधम्ब तातेत वयं[1] सर्वे[2] सहिता[3] भूत्वा गमिष्यामस्तस्य भगवतो जलधरगर्जित-घोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशमुपसं-क्रमिष्यामस्तं भगवन्तं दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय[4]। तत्कस्य हेतोः। दुर्लभो ह्यम्ब तात बुद्धोत्पाद[5] उदुम्बरपुष्पसदृशो[6] महार्णवयुगच्छिद्र[7]कूर्मग्रीवाप्रवेशवत्[8]। दुर्लभप्रादुर्भावा ह्यम्ब तात बुद्धा भगवन्तः। तस्मात्तर्ह्यम्ब तात परमपुण्योपस्तब्धा 5 वयमीदृशे प्रवचन उपपन्नाः। तत्साधम्ब तातोत्सृज[9]धमावां गमिष्यावस्[10]तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य[11] तथागतस्यार्हतः सम्यक्संबुद्धस्य सकाशे प्रव्रजिष्यावः[10]। दुर्लभं ह्यम्ब तात तथागतानां दर्शनं। दुर्लभो ह्यस्य[12] कालः। ईदृशो धर्मराजा। परमदुर्लभेदृशी क्षणसंपत्॥

तेन खलु पुनः कुलपुत्राः समयेन[13] तस्य राज्ञः शुभव्यूहस्यान्तःपुराचतुरशीतिरन्तः[14]- 10 पुरिकासहस्राण्यस्य सद्धर्मपुण्डरीकस्य धर्मपर्यायस्य भाजनभूतान्य[15]भूवन्। विमलनेत्रश्च

1) एत Ca. रेष Cb. All यूयं for वयं.

2) सर्वे W. left out in Cb. सर्व the rest.

3) समग्रा K.

4) In Ca. K. only.

5) From बुद्ध till भावा ह्यम्ब तात left out in B.

6) श्चौ Ca. Cb. K.

7) According to Kumārajīva's version, here is wanting a word such as काण, or अन्ध or अन्धक in accordance with the Saṃyuktāgama-sūtra book 15.

8) व A.

9) ज्य Ca.

10) व Ca. K. म A. B. W.

11) अभिज्ञ in B. only.

12) ह्य in Ca. only. Either अस्य कालः or ईदृशो धर्मराजा an interpolation.

13) B. adds एतेन कालेन.

14) पुरश्च Ca. पुरा च K.

15) भूत in B. Cb. K. only.

दारको ऽस्मिन्धर्मपर्याये चरितावी[1] विमलगर्भश्च दारको बहुकल्पकोटीनयुतशतसहस्राणि सर्वसत्त्वपापजहने समाधौ चरितो ऽभूत्किमिति सर्वसत्त्वाः सर्वपापं जहेयुरिति[2]। सा च तयोर्दारकयोर्माता विमलदत्ता राजभार्या सर्वबुद्धसंगीतिं सर्वबुद्धधर्मगुह्यस्थानानि च संज्ञानीते[3] स्म[2]। अथ खलु कुलपुत्रा राजा शुभव्यूहस्ताभ्यां द्वाभ्यां दारकाभ्यां तथागतशासने
5 विनीतो ऽवतारितश्च परिपाचितश्च सर्वस्वजनपरिवारः सा च विमलदत्ता राजभार्या सर्वस्वजनपरिवारा तौ च द्वौ दारकौ राज्ञः शुभव्यूहस्य पुत्रौ[4] द्वाचत्वारिंशद्भिः प्राणिसहस्रैः सार्धं सान्तःपुरौ सामात्यौ सर्वे[5] सहिताः समया येन भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञ[6]स्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेनोपसंक्रामन्नुपसंक्रम्य तस्य भगवतः पादौ शिरसाभि[7]वन्द्य तं भगवन्तं त्रिष्कृत्वः[8] प्रदक्षिणीकृत्यैकान्ते तस्थुः॥

10 अथ खलु कुलपुत्राः स भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञ[9]स्तथागतो ऽर्हन्सम्यक्संबुद्धो राजानं शुभव्यूहं सपरिवारमुपसंक्रान्तं विदित्वा धार्म्या कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति। अथ खलु कुलपुत्रा राजा शुभव्यूहस्तेन भगवता धार्म्या कथया साधु च सुष्ठु च संदर्शितः समादापितः समुत्तेजितः संप्रहर्षितस्तस्यां वेलायां तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः कनीयसो
15 भ्रातुः पट्टं बद्धा[10] राज्ये प्रतिष्ठाप्य सपुत्रस्वजनपरिवारः सा च विमलदत्ता राजभार्या सर्व[11]-

---

1) चरितावी वि Ca. K. चरित्री वि Cb. चरितवान्वि the rest.

2) जहेनेयु K.

3) Left out in K.

4) K. adds च.

5) K. adds च स, the others हि.

6) अभिज्ञ in Ca. only.

7) शिरोभि K.

8) सप्तकृत्वः A. B. W. सप्तकृत्व K. Cp. त्रिखुत्तं, त्रिष्खुत्त, त्रिष्कृत्वा, Mahāvastu I, 212, 5, 13; 231, 1; 246, 5, 8; 236, 15. Pāli *tikkhattuṃ*.

9) अभिज्ञ in B. Ca. only.

10) MSS. बधा.

11) सर्व left out in B. Cb.

स्त्रीगणपरिवारा[1] तौ च द्वौ दारकौ सार्धं तैर्द्वाचत्वारिंशद्भिः[2] प्राणिसहस्रैः सर्वे सहिताः समग्रास्तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रसंकुसुमिताभिज्ञस्य[3] तथागतस्यार्हतः सम्यक्संबुद्धस्य प्रवचने श्रद्धयागारादनगारिकां प्रव्रजिताः । प्रव्रजित्वा[4] च[5] राजा शुभव्यूहः सपरिवारश्चतुरशीतिवर्षसहस्राण्यभियुक्तो[6] विजहार इमं सद्धर्मपुण्डरीकं धर्मपर्यायं चिन्तयन्भावयन्पर्यवदापयन्[7] । अथ खलु कुलपुत्राः स[8] राजा शुभव्यूहस्तेषां चतुरशीतीनां 5 वर्षसहस्राणामत्ययेन[9] सर्वगुणालंकारव्यूहं नाम समाधिं प्रतिलभते[10] स्म । सहप्रतिलब्धाच्चास्य[11] समाधेरथ[12] तावदेव सप्ततालमात्रं[13] वैहायसमभ्युद्गच्छति स्म । अथ खलु कुलपुत्राः स[14] राजा शुभव्यूहो गगणतले[15] स्थितस्तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञं[16] तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । इमौ भगवन्मम पुत्रौ शास्तारौ भवतो[17] यदहमाभ्यामृद्धिप्रातिहार्येण तस्मान्महतो दृष्टिगताद्विनिवर्तितस्तथागतशासने[18] 10

1) परिवृता K.

2) तैश्चतुरशीतिभिः A. W.

3) अभिज्ञ in B. Ca. only.

4) प्रव्रजित्वा A. Ca. Cb. K. W. प्रव्रज्य B. In B. added स.

5) Left out in B.

6) A. W. add शत.

7) द left out in B. Ca. K.

8) in Ca. only

9) श for स in all but K.

10) ति K.

11) लभाच्च तस्य Cb. K. लाभसमा° W. left out in A.

12) Cb. K. add खलु.

13) मात्रे in B. only.

14) स in B only

15) ल Ca. K. W.

16) अभिज्ञ in B. Ca. only.

17) भगवतः । A. B. Ca. K. भगवतो Cb. Our reading conjectural.

18) कृता B. Cb. K.

च प्रतिष्ठापितः परिपाचितश्चावतारितश्च तथागतदर्शनाय च संचोदितः। कल्याणमित्रौ भगवन्मम[1] तौ द्वौ दारकौ पुत्ररूपेण मम गृह उपपन्नौ[2] यदुत[3] पूर्वकुशलमूलस्मरणार्थम्[4]॥

एवमुक्ते भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतोऽर्हन्सम्यक्संबुद्धस्तं राजानं शुभव्यूहमेतदवोचत्। एवमेतन्महाराजैवमेतद्यथा[5] वदसि। अव-

5 रोपितकुशलमूलानि हि महाराज कुलपुत्राणां कुलदुहितॄणां च सर्वेषु भवगतिच्युत्युपपत्त्यायतनेषूपपन्नानां सुलभानि[6] भवन्ति कल्याणमित्राणि यानि शास्तृकृत्येन प्रत्युपस्थितानि भवन्ति। यान्यनुत्तरायां सम्यक्संबोधौ शासकान्यवतारकाणि[7] परिपाचकानि[8] भवन्ति[9]। उदारमेतन्महाराज स्थानं यदुत[10] कल्याणमित्रपरिग्रहस्तथागतदर्शनसमादापकः। पश्यसि त्वं महाराजैतौ द्वौ दारकौ। आह। पश्यामि भगवन्पश्यामि सुगत। भगवानाह।

10 एतौ खलु पुनर्महाराज कुलपुत्रौ पञ्चषष्टीनां[11] गङ्गानदीवालिकासमानां[12] तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके पूजां करिष्यत[13] इमं च सद्धर्मपुण्डरीकं धर्मपर्यायं धारयिष्यतः[14] सत्त्वानामनुकम्पायै मिथ्यादृष्टीनां[15] च सत्त्वानां[15] सम्यग्दृष्टये वीर्यसंजननार्थम्॥

---

1) भवंत एतौ A.
2) गृहनुत्पन्नौ A. गृहमुत्पन्नौ W. गृहे उपपन्नौ Cb.
3) यदिदं Ca. Cb. K.
4) मूलमनुस्मर K.
5) एवमेतत् repeated in B. only.
6) ला A. ल B. Ca. Cb. K. W.
7) शासका A. शासनका K. सासना Cb.
8) चका Ca. K. चितानि the rest.
9) Left out in Ca. Cb. K.
10) यदिदं Ca. Cb. K.
11) षष्टि B.
12) लु Cb.
13) त A. K. तः B. W. त्वा Ca. त्वौ Cb.
14) ष्यन्ति Cb. K.
15) Left out in B. Ca. Cb.

अथ खलु कुलपुत्राः [1] स राजा शुभव्यूहस्ततो गगनतलादवतीर्य दशनखमञ्जलिं [2] प्रगृह्य तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमित[3]ाभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । तत्साधु भगवन्निर्दिशतु तथागतः कीदृशेन ज्ञानेन समन्वागतस्तथागतो ऽर्हन्सम्यक्संबुद्धो येन मूर्ध्न्युष्णीषो विभाति विमलनेत्रश्च भगवान्[4]भ्रुवोर्मध्ये चोर्णा विभाति शशिशङ्खपाण्डराभा [5] सा च [6] समसहिता दन्तावली वदनान्तरे विराजति [7] बिम्बोष्ठश्च भगवांश्चारुनेत्रश्च सुगतः ॥

अथ खलु कुलपुत्राः [8] स राजा शुभव्यूह इयद्भिर्गुणैस्तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रसंकुसुमित[3]ाभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमभिष्टुत्य[9]ान्यैश्च गुणकोटीनयुतशतसहस्रैस्तं भगवन्तमभिष्टुत्य [10] तस्यां वेलायां [11] तं भगवन्तं जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमित[3]ाभिज्ञं तथागतमर्हन्तं सम्यक्संबुद्धमेतदवोचत् । आश्चर्यं भगवन्[12]यावन्महा[13]र्घमिदं तथागतशासनमचिन्त्यगुणसमन्वागतश्च तथागतप्रवेदितो धर्मविनयो यावत्सुप्रज्ञप्ता च तथागतशिक्षा । अद्याग्रेण [14] वयं भगवन्न भूयश्चित्तस्य [15] वशगा भविष्यामो न भूयो

---

1) In B. only.
2) प्रणम्य K.
3) अभिज्ञ in Ca. only.
4) भगवन् K.
5) भाः A. W.
6) A. Ca. K. W. only add च.
7) ते Ca. Cb. K.
8) In B. only.
9) त्वा A. Cb. K. W.
10) त्वा A. W.
11) From भगवन्तमभि till तं left out in B.
12) Ca. K. add आश्चर्यं सुगत.
13) महात्म Cb. K.
14) K. adds ये.
15) स्य left out in K.

मिथ्यादृष्टेर्वशगा भविष्यामो न भूयः क्रोधस्य[1] वशगा भविष्यामो न भूयः पापकानां चित्तोत्पादानां वशगा भविष्यामः। एभिरहं भगवन्निर्याद्भिरकुशलैर्धर्मैः[2] समन्वागतो[3] नेच्छामि भगवतो ऽन्तिकमुपसंक्रमितुम्[4]॥

स तस्य भगवतो जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्य[5] तथागतस्यार्हतः सम्यक्संबुद्धस्य पादौ शिरसाभिवन्द्यान्तरीक्षगत[6] एवास्थात्। अथ खलु[7] स[8] राजा शुभव्यूहः सा च विमलदत्ता राजभार्या शतसहस्रमूल्यं मुक्ताहारं भगवत उपर्यन्तरीक्षे ऽक्षैप्सीत्[9]। समनन्तरक्षिप्तश्च[10] स मुक्ताहारस्तस्य[11] भगवतो मूर्ध्नि मुक्ताहारः कूटागारः[12] संस्थितो[13] ऽभूच्चतुरस्रश्चतुःस्थूणः समभागः[14] सुविभक्तो दर्शनीयः। तस्मिंश्च कूटागारे पर्यङ्कः प्रादुर्भूतो ऽनेकदूष्यशतसहस्रसंस्तृतस्तस्मिंश्च[15] पर्यङ्के तथागतविग्रहः पर्यङ्कबद्धः[16] संदृश्यते स्म। अथ खलु राज्ञः शुभव्यूहस्यैतदभवत्। महानुभावमिदं बुद्धज्ञानमचिन्त्यगुणसमन्वा-

---

1) स्य in K. only.
2) याद्भिरकुश Ca. K. एतकैः पापकैरकुश O. यद्भिः कुशलमूलै° Cb.
3) In. O. added बभूव.
4) क्रा A. B. K. W. क Ca. Cb. सान्तिके उप O.
5) अभिज्ञ in B. only.
6) अभिवंदित्वा A. W. वंदित्वा Ca. Cb.
7) In Ca. only.
8) In B. K. only स.
9) ते Cb. तै K. त्तो W. क्षिपतः O. left out in A. B. Ca.
10) निक्षि in Cb.
11) ततो K.
12) र A. B. Ca. रे W.
13) सं left out in Cb. K.
14) समो भागः A. W. समभागसः Cb. समः भागशः K. left out in B.
15) स्कृ Cb. K.
16) पर्यंकं बद्धः A. Cb. पर्यंकबद्धः W. पयङ्कबुद्धः K. °निषण्णः B. पर्यङ्कबद्धः O.

गतश्च तथागतो[1] यत्र हि नामायं तथागतविग्रहः कूटागारमध्यगतः संदृश्यते[2] प्रासादिको दर्शनीयः परमशुभवर्णपुष्कारतया[3] समन्वागतः ॥

अथ खलु भगवाञ्जलधरगर्जितघोषसुस्वरनक्षत्रराजसंकुसुमिताभिज्ञस्तथागतश्च[4]-तस्रः पर्षद आमन्त्रयते स्म । पश्यथ[5] भिक्षवो यूयं[6] शुभव्यूहं राजानं गगणतलस्थं[7] सिंहनादं नदन्तम् । आहुः । पश्यामो भगवन्[8] । भगवानाह[9] । एष खलु भिक्षवः[10] शुभव्यूहो राजा मम 5
शासने भिक्षुभावं कृत्वा शालेन्द्रराजो[11] नाम तथागतो ऽर्हन्सम्यक्संबुद्धो लोके भविष्यति विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च[12] बुद्धो भगवान्विस्तीर्णावत्यां लोकधातावभ्युद्गतराजो[13] नाम स कल्पो भविष्यति । तस्य खलु[14] पुनर्भिक्षवः शालेन्द्रराजस्य तथागतस्यार्हतः[15] सम्यक्संबुद्धस्याप्रमेयो बोधिसत्त्वसंघो भविष्यत्यप्रमेयः[16] श्रावकसंघः । समा पाणितलजाता[17] च वैडूर्यमयी सा विस्तीर्णावती लो- 10
कधातुर्भविष्यति । एवमचिन्त्यः स तथागतो ऽर्हन्सम्यक्संबुद्धो भविष्यति । स्यात्खलु

1) च तथागतो left out in Cb.
2) स्म added in all but K. O.
3) ल O.
4) अभिज्ञ in B. Ca only.
5) ध्वं Ca.
6) यूयं is put in before भिक्षवो in B. O.
7) स्थितं Cb. गगनतले स्थितं O.
8) भगवान् left out in A. Cb. W.
9) भगवन् left out in B. K. and भगवानाह in O.
10) एष भोः पुनर्भि O.
11) सारे A. साले Ca. राजा [illegible] O.
12) देवमनुष्याणां O.
13) राजा O.
14) भोः O.
15) अर्हतः सम्यक्संबुद्धस्य omitted in O.
16) पश्चास्य O.
17) Left out in Ca. Cb. वैडूर्यमयी wanting in O.

पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा[1] अन्यः स तेन कालेन तेन समयेन शुभव्यूहो नाम राजाभूत्। न खलु[2] पुनः कुलपुत्रा युष्माभिरेवं[3] द्रष्टव्यम्। तत्कस्य हेतोः। अयमेव स पद्मश्रीर्बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन शुभव्यूहो नाम राजाभूत्। स्यात्खलु पुनः कुलपुत्रा युष्माकं[4] काङ्क्षा वा विमतिर्वा विचिकित्सा वा[1] अन्या
5 सा तेन कालेन तेन समयेन विमलदत्ता नाम राजभार्याभूत्। न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम्। तत्कस्य हेतोः। अयं स[5] वैरोचनरश्मिप्रतिमण्डितध्वजराजो नाम बोधिसत्त्वो महासत्त्वस्तेन कालेन तेन समयेन विमलदत्ता नाम राजभार्याभूत्तस्य राज्ञः शुभव्यूहस्यानुकम्पायै तेषां च सत्त्वानां राज्ञः शुभव्यूहस्य[6] भार्यात्वमभ्युपगतो[7]ऽभूत्। स्यात्खलु पुनः कुलपुत्रा युष्माकं काङ्क्षा वा विमतिर्वा विचिकित्सा वा अन्यौ तौ तेन का-
10 लेन तेन समयेन द्वौ[8] दारकावभूताम्[9]। न खलु पुनः कुलपुत्रा युष्माभिरेवं द्रष्टव्यम् तत्कस्य हेतोः। इमौ तौ भैषज्यराजश्च भैषज्यसमुद्गतश्च तेन कालेन तेन समयेन तस्य राज्ञः शुभव्यूहस्य पुत्रावभूताम्[9]। एवमचिन्त्यगुणसमन्वागतौ[10] कुलपुत्रा भैषज्यराजो[11] भैषज्यसमुद्गतश्च बोधिसत्त्वौ[12] महासत्त्वौ[12] बहुबुद्धकोटीनयुतशतसहस्रावरोपितकुशलमूलावेता-

1) विचिकित्सा वा omitted in O.

2) भोः O.

3) पुनरेवं द्र O.

4) स्यात्ते भोः पुनः कुलपुत्रेवं का O.

5) Left out in B. Ca. K.

6) Left out in Cb.

7) भ्युद्गतो Cb.

8) तौ K.

9) A. K. W. अभूवताम्.

10) तौ Cb. only; तः in the other MSS.

11) Left out in Cb. श्च K.

12) त्त्वा Cb. त्त्वो in the other MSS.

वुभावपि सत्पुरुषावचिन्त्यधर्मसमन्वागतौ[1] । ये चैतयोः सत्पुरुषयोर्नामधेयं धारयिष्यन्ति[2] ते सर्वे नमस्करणीया भविष्यन्ति सदेवकेन लोकेन[3] ॥

अस्मिन्खलु पुनः पूर्वयोगपरिवर्ते भाष्यमाणे चतुरशीतीनां[4] प्राणिसहस्राणां विरजो विगतमलं[5] धर्मेषु धर्मचक्षुर्विशुद्धम्[6] ॥

॥ इति श्रीसद्धर्मपुण्डरीके[7] धर्मपर्याये शुभव्यूहराजपूर्वयोगपरिवर्तो[8] नाम पञ्चविं[9]शतिमः ॥ 5

1) समुद्गतौ K.

2) धारयंति A.

3) न लोकेन left out in A. W. सदेवके लोके K.

4) A. W. add प्राणिशतानां.

5) A. W. add वि.

6) MSS. add इति.

7) आर्य (for इति श्री) K.

8) From इति till राज left out in B. Ca. Cb.

9) षट् (for पञ्च) Cb.

# XXVI.

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वः पूर्वस्यां दिशि गणनां समतिक्रान्तैर्बोधिसत्त्वैर्महासत्त्वैः सार्धं परिवृतः पुरस्कृतः प्रकम्पद्भिः[1] क्षेत्रैः प्रवर्षद्भिः पद्मैः प्रवाद्यमानैस्तूर्यकोटीनयुतशतसहस्रैर्महता[2] बोधिसत्त्वानुभावेन[3] महत्या बोधिसत्त्वविकुर्वया[4] महत्या
5 बोधिसत्त्वर्द्ध्या महता[5] बोधिसत्त्वमाहात्म्येन महता[6] बोधिसत्त्वसमाहितेन[7] महता बोधिसत्त्वतेजसा ज्वलमानेन[8] महता बोधिसत्त्वयानेन महता बोधिसत्त्वप्रातिहार्येण महद्भिर्[9] देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरगमनुष्यामनुष्यैः[10] परिवृतः पुरस्कृत एवमचिन्त्यैरृद्धिप्रातिहार्यैः समन्तभद्रो बोधिसत्त्वो महासत्त्व इमां सहां लोकधातुं संप्राप्तः[11]। स येन गृध्रकूटः[12] पर्वतराजो येन च भगवांस्तेनोपसंक्रामदु[13]पसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य[14]

1) A. adds घ.
2) K. adds च.
3) त्वानुकंपेन B. त्वगणेन Cb.
4) K. adds न (for या).
5) महत्या A. B. K. W.
6) महत्या Ca. K.
7) समन्वितेन A. Ca. Cb. K. W. समाहितेन B.
8) From न till यानेन महता left out in Cb.
9) महता देव B. महत्या देव Ca. Cb. K. W. महद्भिर्देव A.
10) मनुष्यविक्रीडया । अनेकैर्देव °मनुष्यैः B. मनुष्यविकुर्वया Ca. K. महति देव° ष्यैः Ca. महद्भिः। देव° K.
11) सभयेन Ca. K. तेन समयेन Cb.
12) ट A. B. Cb. W.
13) पसंक्रामदु left out in K.
14) सा वन्दित्वा A. Ca. K. W. more original.

सप्तकृत्वः प्रदक्षिणीकृत्य भगवन्तमेतदवोचत् अहं भगवंस्तस्य भगवतो रत्नतेजोऽभ्यु-[1]द्गतराजस्य तथागतस्य बुद्धक्षेत्रादिहागत[2] इह[3] भगवन्सहायां[4] लोकधातावयं सद्धर्मपुण्डरीको धर्मपर्यायो देश्यत इति[5] तमहं श्रवणायागतो भगवतः शाक्यमुनेस्तथागतस्य सकाशमिमानि च भगवन्नेतावन्ति बोधिसत्त्वशतसहस्राणीमं सद्धर्मपुण्डरीकं धर्मपर्यायं श्रवणायागतानि । तत्साधु भगवन्देशयतु तथागतोऽर्हन्सम्यक्संबुद्ध इमं सद्धर्मपुण्डरीकं धर्मपर्यायमेषां[6] बोधिसत्त्वानां महासत्त्वानां विस्तरेण[7] । एवमुक्ते भगवान्समन्तभद्रं बोधिसत्त्वं महासत्त्वमेतदवोचत् । उद्घटितज्ञा[8] हि कुलपुत्रैते बोधिसत्त्वा महासत्त्वाः । अपि त्वयं सद्धर्मपुण्डरीको धर्मपर्यायो यदुतासंभिन्नतथता[9][10] । ते बोधिसत्त्वा आहुः । एवमेतद्भगवन्नेवमेतत्सुगत[11] । अथ खलु या[12] तस्यां पर्षदि भिक्षुभिक्षुण्युपासकोपासिकाश्च संनिपतितास्तासां सद्धर्मपुण्डरीके धर्मपर्याये प्रतिष्ठापनार्थं पुनरपि भगवान्समन्तभद्रं बोधिसत्त्वं महासत्त्वमेतदवोचत् । चतुर्भिः कुलपुत्र धर्मैः समन्वागतस्य मातृग्रामस्यायं सद्धर्मपुण्डरीको धर्मपर्यायो हस्तगतो भविष्यति । कतमैश्चतुर्भिः । यदुत[13] बुद्धैर्भगवद्भिरधिष्ठितो भविष्यत्यवरोपितकुशलमूलश्च भविष्यति नियतराशिव्यवस्थितश्च[14] भविष्यति सर्वसत्त्वपरित्राणार्थमनुत्तरा-

1) रत्नाप्रभाभ्यु W
2) तः । Ca. K.
3) Ca adds च.
4) सहे B.
5) Left out in K.
6) यायमेव A. Cb. W. यागं B. Ca. यायं । एषां K.
7) K. adds संप्रकाशयतु.
8) उद्घ K. उद्घा the other MSS.
9) सं left out in B. K.
10) तेति K. Read तः.
11) All but B. K. add इति.
12) ये A. W. या K. left out in B. Ca.
13) यदिदं K.
14) व्य left out in Ca. K.

यां[1] सम्यक्संबोधौ चित्तमुत्पादयिष्यति। एभिः[2] कुलपुत्र चतुर्भिर्धर्मैः समन्वागतस्य मातृग्रामस्यायं सद्धर्मपुण्डरीको धर्मपर्यायो हस्तगतो भविष्यति॥

अथ खलु समन्तभद्रो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। अहं भगवन्पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामिवं[3][4][5]रूपाणां सूत्रान्तधारकाणां भिक्षूणां
5 रक्षां करिष्यामि स्वस्त्ययनं करिष्यामि दण्डपरिहारं करिष्यामि विषदूषणं करिष्यामि यथा न कश्चित्तेषां धर्मभाणकानामवतारप्रेक्ष्यवतारगवेष्यवतारं लप्स्यते न मारः[6] पापीयानवतारप्रेक्ष्यवतारगवेष्यवतारं[7] लप्स्यते न मारपुत्रा न मारकायिका देवपुत्रा[8] न मारकन्या न मारपार्षद्या यावन्न भूयो मारपर्युत्थितो[9] भविष्यति। न देवपुत्रा न यक्षा न प्रेता न पूतना न कृत्या न वेताडास्तस्य[10] धर्मभाणकस्यावतारप्रेक्षिणो[11]ऽवतारगवेषिणोऽवतारं
10 लप्स्यन्ते[12]। अहं भगवंस्तस्य धर्मभाणकस्य सततसमितं नित्यकालं रक्षां करिष्यामि। यदा च[13] स[14] धर्मभाणकोऽस्मिन्धर्मपर्याये चिन्तायोगमनुयुक्त[15]श्चङ्क्रमाभिरूढो भविष्यति तदाहं

---

1) या: K.

2) बोधेश्चित्तमुत्पादयिष्यति। एभिश्च K. उत्पादितुं भविष्यति the other MSS.

3) नो K.

4) वर्तमानायामेव B. °मेवं K.

5) रूपाणां in Ca. only.

6) र A. Ca. W. रः B. K.

7) गवेष्यवतारं in B. only.

8) देवता B.

9) र्युपस्थि A. Ca. र्युपस्ति W.

10) डास्वस्त्यस्तु तस्य A. डास्वस्त्यस्तुस्तस्य W.

11) कस्यान्तिकावतार K.

12) ते A. Ca. W. न्ते B. K.

13) In Ca. K. only.

14) In B. only.

15) नप्राप्ताः। K.

भगवंस्तस्य धर्मभाणकस्यान्तिके श्वेतषड्दन्तं गजराजमभिरुह्य[1] तस्य धर्मभाणकस्य चङ्क्रम-कुटीमुपसंक्रमिष्यामि[2][3] बोधिसत्त्वगणपरिवृतो ऽस्य धर्मपर्यायस्यारक्षायै[4]। यदा पुनस्तस्य धर्मभाणकस्यास्मिन्धर्मपर्याये चिन्तायोगमनुयुक्तस्य सत इतो धर्मपर्यायादन्तशः पदव्यञ्जनं परिभ्रष्टं[5] भविष्यति तदाहं तस्मिञ्श्वेतषड्दन्ते गजराजे ऽभिरुह्य तस्य धर्मभाणकस्य संमु[6]-खमुपदर्शयित्वा[7] इमं धर्मपर्यायमविकलं प्रत्युच्चारयिष्यामि। स[8] च धर्मभाणको[9] ममात्मभावं 5 दृष्ट्वेमं[10] च धर्मपर्यायमविकलं ममान्तिकाच्छ्रुत्वा तुष्ट[11] उदग्र[11] आत्तमनाः[12] प्रमुदितः[13] प्रीतिसौ-मनस्यजातो[13] भूयस्या मात्रयास्मिन्धर्मपर्याये वीर्यमारप्स्यते[14][15] मम च सहदर्शनेन समाधिं प्रतिलप्स्यते धारणयावर्ता च नाम धारणीं प्रतिलप्स्यते[15] कोटीशतसहस्रावर्ता च नाम धारणीं प्रतिलप्स्यते[15] सर्वरुतकौशल्यावर्ता च नाम धारणीं प्रतिलप्स्यते[15]॥

ये[16] च[17] भगवन्पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां भिक्षवो वा भिक्षुण्यो[18] 10

---

1) राज in Ca. only.
2) माकूटी K. मकुश W.
3) B. reads णकस्य मुखमुपदर्शयिष्यामि.
4) गस्य संरक्षायै K.
5) ष्टुं W.
6) In A. W. only.
7) मुद्दर्शयित्वा A. मुपदर्सयिष्यामि B.
8) ते B. K.
9) का B. K.
10) Left out in K.
11) Left out in B. तुष्टा उदग्रा K. W.
12) नासः B.
13) ता B. ताः K.
14) मीर Ca. मार K. माल the rest.
15) न्ते B. K.
16) येन A. B. W. ये च Ca. ये K.
17) वा A. B.
18) पर्युपासकोपासिका वा एवं K.

वोपासका वोपासिका वैवं मूत्रान्तधारका एवं मूत्रान्तलेखका[1] एवं[1] मूत्रान्तमार्गका[1] एवं[1] मूत्रान्तवाचका[1] ये[2] पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यामस्मि[3]न्धर्मपर्याये त्रिसप्ताहमेकविंशतिदिवसानि चङ्क्रमाभि[4]रूढा[5] अभियुक्ता भविष्यन्ति[6] तेषामहं सर्वसत्त्वप्रियदर्शनमात्मभावं[7] संदर्शयिष्यामि । तमेव श्वेतं षड्दन्तं[8] गजराजमभिरूह्य बोधिसत्त्वगणपरिवृत

5 एकविंशतिमे दिवसे तेषां धर्मभाणकानां चङ्क्रममागमिष्याम्यागत्य[9] च तान्धर्मभाणकान्परिसंहर्षयिष्यामि[10] समादापयिष्यामि[11] समुत्तेजयिष्यामि संप्रहर्षयिष्यामि । धारणीं चैषां दास्यामि यथा[12] ते धर्मभाणका न केनचिद्ध[13]र्षणीया भविष्यन्ति न चैषां म[14]नुष्या वामनुष्या वावतारं लप्स्यन्ते न च नार्यो ऽपसंहरिष्यन्ति[15] । रक्षां चैषां करिष्यामि स्वस्त्ययनं[16] करिष्यामि[19] दण्डपरिहारं करिष्यामि[17] विषदूषणं करिष्यामि । तेषां च वयं भगवन्धर्मभाणका-

1) Left out in B.

2) In B. K. only.

3) B. adds वर्तमानायाम्.

4) भि left out in K.

5) भिरूढा left out in A.

6) From तेषा° till धारणीं चैषां left out in Cb.

7) Left out in K.

8) (पा)ण्डरं षड्दन्तं हस्तिराजाना° O.

9) त्वा A. K. W.

10) संहरिष्या A. W. संदर्शयिष्या K. परि wanting in O.

11) Left out in Ca. W.

12) यदा Ca. च is added in B. Ca. Cb.

13) कस्य A. B. Ca. O.

14) From मनुष्याः till नार्योपि left out in B.

15) नारीभिः संक्रियते O.

16) Left out in Cb.

17) Left out in A. K. W.

नामिमानि धारणीपदानि[1] दास्यामि। तानि[2] भगवन्धारणीपदानि तद्यथा[3]। अदण्डे दण्डपति[4] दण्डावर्तनि दण्डकुशले दण्डसुधारि[5] सुधारि सुधारपति[5] बुद्धपश्यने सर्वधारणि[6] आवर्तनि संवर्तनि संघपरीक्षिते संघनिर्घातनि[7][8] धर्मपरीक्षिते सर्वसत्त्वरुतकौशल्यानुगते सिंहविक्रीडिते[9] अनुवर्ते वर्तनि वर्तालि स्वाहा। इमानि तानि[10] भगवन्धारणीपदानि यस्य बोधिसत्त्वस्य महासत्त्वस्य श्रोत्रेन्द्रियस्यावभासमागमिष्यन्ति[11] वेदितव्यमेतत्[12]समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्याधिष्ठानमिति[13]॥ 5

अयं च भगवन्सद्धर्मपुण्डरीको धर्मपर्यायो ऽस्मिञ्जम्बुद्वीपे प्रचरमाणो येषां बोधिसत्त्वानां महासत्त्वानां हस्तगतो भविष्यति तैर्भगवन्धर्मभाणकैरेवं वेदितव्यम्। समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्यानुभावेन यदस्माकमयं[14] धर्मपर्यायो हस्तगतः समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य तेजसा। समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य चर्यायास्ते भग- 10

---

1) पदानि left out in A. भाणकानामारक्षानुगुप्त्या धारणिपदानि भाषिष्यामि। O.

2) तानीमानि B. K. तत्रेमानि O.

3) शृणु: A. स धर्मभाणकः शृणोति॥ तद्यथा O.

4) दण्डपतिवते दण्डावर्ते दण्डावर्तनि O

5) दण्डसुधरे। सुधारे। सुधारपति। O.

6) सर्व only in O., then आवर्तने. Then follows in it सर्वभाष्यावर्तने। सुआवर्तने। संघपरीक्षणि। संघनिर्घातनि। सद्धर्मसुपरीक्षिते। असंगे। संगापगते। त्र्यध्वसंगतुल्यप्राप्ते। सर्वसंगसमतिक्रान्ते। सर्वधर्मसुपरीक्षिते। सर्वसत्व°. Cp. English transl. p. 435.

7) तने A. W. शने B. सनि Ca. सने K.

8) B. adds स.

9) From अनुवर्ते till स्वाहा in A. W. only.

10) Left out in K

11) Sic O. स्यात्मभावस्याभासमागमिष्यन्ति; स्याभासमा° Ca. Cb

12) एतत् left out in B. K.

13) स्य तदधि Ca. स्येदमधि K. स्यैतदधि O.

14) यदा K.

न्सत्त्वा लाभिनो भविष्यन्ति[1] बहुबुद्धावरोपितकुशलमूलाश्च ते सत्त्वा भविष्यन्ति तथागतपाणिपरिमार्जितमूर्धानश्च[2] ते भगवन्सत्त्वा भविष्यन्ति। य इदं[3] सूत्रं लिखिष्यन्ति धारयिष्यन्ति मम तेभगवन्प्रियं[4] कृतं[5] भविष्यति।[6] य इदं सूत्रं लिखिष्यन्ति ये चास्यार्थमनुभोत्स्यन्ते लिखित्वा च ते भगवन्निदं सूत्रमितश्च्युत्वा[7] त्रयस्त्रिंशतां देवानां सभागतायोपपत्स्यन्ते[8] सहो-
5 पपन्नानां चैषां चतुरशीतिरप्सरसां[9] सहस्राण्युपसंक्रमिष्यन्ति। ते ऽधिमात्रेण मुकुटेन देवपुत्रास्तासामप्सरसां मध्ये स्थास्यन्ति। ईदृशः कुलपुत्रा इमं धर्मपर्यायं लिखित्वा पुण्यस्कन्धः कः पुनर्वादो य एतमुद्देक्ष्यन्ति[10] स्वाध्यायिष्यन्ति चिन्तयिष्यन्ति मनसिकरिष्यन्ति। तस्मात्तर्हि कुलपुत्राः सत्कृत्यायं सद्धर्मपुण्डरीको धर्मपर्यायो लिखितव्यः सर्वचेतः समन्वाहृत्य[11]। यश्चाविक्षिप्तेन[12] मनसिकारेण[13] लिखिष्यति तस्य बुद्धसहस्रं हस्तमुपनामयि[14]-
10 ष्यति मरणकाले चास्य बुद्धसहस्रं संमुखमुपदर्शनं[15] करिष्यति। न च दुर्गतिविनिपातगामो भविष्यति। इतश्च्युतश्च तुषितानां देवानां सभागतायोपपत्स्यते[16] यत्र स मैत्रेयो बोधि-

---

1) भवन्ति Cb.

2) मूर्ध्नानश्च in all MSS

3) इमं A. B. Cb. K. W. इदं Ca.

4) ते Ca. च तेर् B. K. चैतेर् the other MSS.

5) य Ca.

6) From य till लिखिष्यन्ति left out in Cb.

7) श्रयित्वा B. K. meant चवित्वा.

8) भा B. K. हा the rest. Cp. below. note 16.

9) र्ति घप्स K.

10) य एतमुद्दे A. W. Cb. यैः पुनरुद्दे B. यं उद्दे K.

11) From सर्वे till त्य left out in B. सर्वे A. सर्व Ca. Cb. W. सर्व चेत °हृत्य K. °ह्मत्य A. Ca. Cb. W.

12) विक्षिपेण Cb.

13) मनसिका A. K. W. मनस्का B. Ca. Cb.

14) हस्ते उप Cb.

15) सं in Ca. only.

16) सभागता A. B. Ca. K. W. सहताच्यता Cb. °तायो Prākṛtic for °तायामु.

सत्त्वो महासत्त्वस्तिष्ठति द्वात्रिंशद्वरलक्षणो[1] बोधिसत्त्वगणपरिवृतो ऽप्सरःकोटीनयुतशतसहस्रपुरस्कृतो धर्मं देशयति[2]। तस्मात्तर्हि कुलपुत्राः[3] पण्डितेन कुलपुत्रेण वा कुलदुहित्रा वायं सद्धर्मपुण्डरीको धर्मपर्यायः सत्कृत्य लिखितव्यः सत्कृत्योद्देष्टव्यः[4] सत्कृत्य स्वाध्यायितव्यः सत्कृत्य मनसिकर्तव्यः। इमं कुलपुत्रा धर्मपर्यायं लिखित्वोद्दिश्य[5] स्वाध्यायित्वा[6] भावयित्वा मनसिकृत्वैवमप्रमेया गुणा भविष्यन्ति। तस्मात्तर्हि तेन[7] पण्डितेन[8] 5
भगवन्[9]कुलपुत्रेण वा कुलदुहित्रा वायं सद्धर्मपुण्डरीको धर्मपर्यायो धारयितव्य एतावन्तस्तेषां[10] गुणानुशंसा भविष्यन्ति। तस्मात्तर्हि भगवन्नहमपि तावदिमं धर्मपर्यायमधिष्ठास्यामि[11] यथा भगवन्ममाधिष्ठानेनायं धर्मपर्यायो ऽस्मिञ्जम्बुद्वीपे प्रचरिष्यतीति[12]॥

अथ खलु तस्यां[12] वेलायां[12] भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धः समन्तभद्राय बोधिसत्त्वाय महासत्त्वाय साधुकारमदात्। साधु साधु समन्तभद्र यत्र हि नाम त्वमेवं 10
बहुजनहिताय बहुजनसुखाय[13] लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय प्रतिपन्नः एवमचिन्त्यधर्मसमन्वागतो ऽसि महाकरुणासंगृहीतेना[14]ध्याशयेनाचिन्त्यसंगृही[15]तो-

---

1) द्वाचत्वारिंशत् वरलक्षणधर B. द्वात्रिंशल्लक्षणो Cb.
2) A. K. W. Cb. add स्म.
3) Left out in A. K. W.
4) Left out in B.
5) दिशित्वा A. Ca. Cb. K. W. दिश्य B.
6) स्वाध्याय्य B. Ca.
7) In Cb. only.
8) Left out in B. Cb.
9) Left out in B. Ca. Cb.
10) एतांस्तेषां K.
11) सद्धर्मपुंडरीको धर्मपर्यायो ऽस्मि Cb.
12) Left out in Cb.
13) From बहुजनसुखाय till सुखाय left out in Cb.
14) य A. K.
15) सम। ग A. W. समाग K.

तेन चित्तोत्पादेन यस्त्वं स्वयमेव तेषां धर्मभाणकानामधिष्ठानं करोषि। ये केचित्कुलपुत्राः समन्तभद्रस्य बोधिसत्त्वस्य महासत्त्वस्य नामधेयं धारयिष्यन्ति वेदितव्यं तैः शाक्यमुनिस्तथागतो दृष्ट इति। अयं[1] च सद्धर्मपुण्डरीको धर्मपर्यायस्तस्य भगवतः शाक्यमुनेरन्तिकाच्छ्रुतः[2] शाक्यमुनिश्च तथागतस्तैः पूजितः शाक्यमुनेश्च तथागतस्य धर्मं देशयतः साधुकारो ऽनुप्रदत्तः[3]। अनुमोदितश्चायं धर्मपर्यायो भविष्यति। शाक्यमुनिना च[4] तथागतेन तेषां मूर्ध्नि पाणिः[5] प्रतिष्ठापितो भविष्यति। भगवांश्च शाक्यमुनिस्तैश्चीवरैरवच्छादितो भविष्यति। तथागतशासनपरिग्राहकाश्च ते समन्तभद्र कुलपुत्रा वा कुलदुहितरो वा वेदितव्याः। न च तेषां लोकायते रुचिर्भविष्यति न काव्यप्रसृताः सत्त्वास्तेषामभिरुचिता[6] भविष्यन्ति[7] न नृत्तका न मल्ला नर्त्तका न शौण्डिकौरभ्रिककौक्कुटिकसौकरिकस्त्रीपोषकाः[8] सत्त्वास्तेषामभिरुचिता भविष्यन्ति[9]। ईदृशांश्च[10] सूत्रान्तान्[11]श्रुत्वा लिखित्वा धारयित्वा[12] वाच-

1) Sic Cb. इत्ययं the rest.

2) B. adds इति.

3) कारमनु A. K. W. कारान् B. कारो ऽनु Cb.

4) Left out in A. K. W.

5) Left out in Cb.

6) भिरुह्याता A. भिरुचिता B K. Ca. भिरुचिकृता W.

7) ति B. A.

8) न नृत्तका न मल्ला न झल्लका न सौण्डि कौरभ्रिकाक्कुटिकसौकरिकस्त्रीपोसकाः A.

न नृत्ता न मल्ला न सैनिकैरभिकक्कौक्कुटिकसौ° B.

न नृत्तना न मल्ला न झल्लका न सौण्डिकौरभ्रिकक्कुटिकसौ° °षकाः Ca. K.

न नृत्तका न गल्ला न झल्लका न सौ कौ क्काक्कुटिकौसौ° °सकाः W.

This part is wanting in Cb., as the leaf is broken.

9) भवन्ति Cb.

10) शांश्च K.

11) सूत्राणान्ते K.

12) धारित्वा A. K. W.

पित्वा वा न तेषामन्यद्भिरुचितं[1] भविष्यति। स्वभावधर्मसमन्वागताश्च ते सत्त्वा वेदित-
व्याः[2]। प्रत्यात्मिकाश्च तेषां योनिशो मनसिकारो[3] भविष्यति। स्वपुण्यबलाधाराश्च[4] ते
सत्त्वा[5] भविष्यन्ति प्रियदर्शनाश्च ते[6] भविष्यन्ति सत्त्वानाम्। एवं सूत्रान्तधारकाश्च ये भिक्षवो
भविष्यन्ति। न तेषां रागो व्याबाधिष्यति[7] न द्वेषो न मोहो नेर्ष्या न मात्सर्यं[8] न म्रक्षो[9] न
मानो नाधिमानो न मिथ्यामानः[10]। स्वलाभसंतुष्टाश्च ते समन्तभद्र धर्मभाणका भविष्यन्ति। 5
यः समन्तभद्र पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमानायामस्य सद्धर्मपु-
ण्डरीकस्य धर्मपर्यायस्य धारकं भिक्षुं पश्येत्[11] एवं चित्तमुत्पादयितव्यम्। गमिष्यत्ययं
कुलपुत्रो बोधिमण्डं निर्जेष्यत्ययं कुलपुत्रो[12] मारकलिचक्रं[13] प्रवर्तयिष्यत्ययं धर्मचक्रं[14] परा-
क्रान्ष्यत्ययं[15] धर्मदुन्दुभिं प्रपूरयिष्यत्ययं धर्मशङ्खं प्रवर्षयिष्यत्ययं धर्मवर्षमभिरोक्ष्यत्ययं[16]
धर्मसिंहासनम्। य इमं धर्मपर्यायं पश्चिमे काले पश्चिमे समये पश्चिमायां पञ्चशत्यां वर्तमा- 10

---

1) ता A. Ca. K. W. तं B. Cb.

2) भविष्यति B.

3) मनस्कारो B.

4) सु A. W. स्व Ca. K. left out in B.

5) ते ते (for ते सत्त्वा) K. left out in B. Ca.

6) Left out in B. Ca.

7) व्याहरिष्यति B. व्याबाधयिष्यति Ca. व्यावह्निष्यति Cb. Cp. Pāli *vyābādheti*.

8) क्रोधो Cb.

9) Left out in B.

10) Left out in B. Cb. K.

11) पश्ये दृष्ट्वा A. W. पश्येत्। K. O. पश्याद्दृष्ट्वा चैवं the rest. Our reading conjectural.

12) Left out in B.

13) लि B. Ca. रि A. लिं W. धर्म in added to चक्र in A.

14) Left out in A. Ca. K.

15) Left out in K. Ca. प्रवादयिष्यत्ययं O.; पराहरिष्यत्ययं the rest.

16) भिरुह्निष्य A. W. भिरोक्ष्य B. Ca. भिरान b. ग्राहक्षिष्यति ध O.

नार्या[1] धारयिष्यन्ति न ते भिक्षवो लुब्धा[2] भविष्यन्ति न चीवरगृद्धा न पात्रगृद्धा[3] भविष्यन्ति। ऋजुकाश्च ते धर्मभाणका भविष्यन्ति त्रिविमोक्षलाभिनश्च ते[4] धर्मभाणका[5] भविष्यन्ति। दृष्टधार्मिकं[6] च तेषां[7] सांपरायिकं निर्वर्तिष्यति।[8] य एवं[9] सूत्रान्तधारकाणां धर्मभाणकानां भिक्षूणां मोक्षं दास्यन्ति जात्यन्धास्ते[10] सत्त्वा[11] भविष्यन्ति। ये चैवंरूपाणां सूत्रान्तधा-

5 रकाणां भिक्षूणामवर्णं संश्रावयिष्यन्ति तेषां दृष्ट एव धर्मे कायश्चित्रो[12] भविष्यति। य एवं सूत्रान्तलेखकानामुच्चग्घनं[13] करिष्यन्त्युल्लपिष्यन्ति[14] ते खण्डदन्ताश्च भविष्यन्ति विरलदन्ताश्च भविष्यन्ति[15] बीभत्सोष्ठाश्च भविष्यन्ति चिपिटनासाश्च[16] भविष्यन्ति विपरीतहस्तपादाश्च भविष्यन्ति विपरीतनेत्राश्च[15] भविष्यन्ति[15] दुर्गन्धिकायाश्च[17] भविष्यन्ति गण्डपिटकविचर्चिदद्रुकण्ड्वाकीर्णशरीराश्च[18] भविष्यन्ति। य ईदृशानां सूत्रान्तलेखकानां[19] सूत्रान्तवाचकानां[20] च

1) Left out in Cb. K.

2) ल Cb.

3) पात्रे W. पात्र K. O. पान the other MSS.

4) K. adds भविष्यन्ति.

5) K. adds श्च.

6) दृष्टिधार्मिकाश्च B. दृष्टधात्मिकाश्च भविष्यन्ति K.

7) In O. सांपरायिकं wanting.

8) निर्वार्तिष्यति O. निवर्तयिष्यति the rest.

9) व W. O.

10) Left out in Cb. B. त्यन्धो भविष्यति O.

11) Left out in B. Ca. Cb.

12) काये चित्रो A. काये चित्रो K.

13) Badly for उज्ज°.

14) ष्यति O. In the sequel also the singular

15) Left out in Cb.

16) Sic Cb. O. चिक्कन Ca. K. चिक्कट A. B. W.

17) घ B. Ca. Cb.

18) O. adds किलास.

19) A. W. add एवं; O. has एव, but leaves out ईदृशानां.

20) Left out in Ca. K.

सूत्रान्तधारकाणां[1] च सूत्रान्तदेशकानां[2] चाप्रियां वाचं भूतामभूतां वा संश्रावयिष्यन्ति[3] तेषामिदमागाढतरं पापकं कर्म वेदितव्यम्। तस्मात्तर्हि समन्तभद्रास्य धर्मपर्यायस्य धारकाणां भिक्षूणां दूरत एवं[4] प्रत्युत्थातव्यं यथा तथागतस्यान्तिके गौरवं कर्तव्यं तथा तेषामेवं[5] सूत्रान्तधारकाणां भिक्षूणामेवं[6] गौरवं कर्तव्यम्॥

अस्मिन्खलु पुनः समन्तभद्रोत्साहनपरिवर्ते[7] निर्दिश्यमाने गङ्गानदीवालिकासमानां 5 बोधिसत्त्वानां महासत्त्वानां कोटीशतसहस्रावर्ताया[8] धारण्याः प्रतिलम्भो[9] ऽभूत्॥

॥ इति श्रीसद्धर्मपुण्डरीके[10] धर्मपर्याये समन्तभद्रोत्साहनपरिवर्तो नाम षड्विंशतिमः[11]॥

---

1) in W. only.

2) Left out in Ca. K.

3) सं in Ca. only.

4) एवं A. B. W. एव Ca. Cb. K

5) एवं A. B. Ca. W. एव K.

6) एवं in B. K. only.

7) ने B.

8) वर्त K.

9) लाभो A. B. W. O. लंभो Cb. Ca.

10) आर्य (for इति श्री) K.

11) सप्तविंश Cb. O.

# XXVII.

अथ खलु भगवाञ्छाक्यमुनिस्तथागतोऽर्हन्सम्यक्संबुद्ध उत्थाय तस्माद्धर्मासना-
त्सर्वांस्तान्बोधिसत्त्वान्[1] पिण्डीकृत्य[2] दक्षिणेन पाणिनर्द्ध्यभिसंस्कारपरिनिष्पन्नेन[3] दक्षिणह-
[4]स्तेऽध्यालम्ब्य तस्यां वेलायामेतदवोचत्। इमामहं कुलपुत्रा असंख्ये[5]यकल्पकोटीनयुत-
शतसह[6][7]स्रसमुदानीतामनुत्तरां सम्यक्संबोधिं युष्माकं हस्ते परिन्दाम्यनुपरिन्दामि नि-
क्षिपाम्युपनिक्षिपामि। यथा विपुला वै[8]स्तारिकी भवेत्तथा युष्माभिः कुलपुत्राः करणी-
यम्॥

द्वैतीयकमपि[9] त्रैतीयकमपि[10] भगवान्सर्वावन्तं[11] बोधिसत्त्वगणं दक्षिणेन पाणिनाध्या-
लम्ब्यैतदवोचत्। इमामहं कुलपुत्रा असंख्येयकल्पकोटीनयुतशतसहस्रसमुदानीतामनुत्तरां
सम्यक्संबोधिं युष्माकं हस्ते परिन्दाम्यनुपरिन्दामि निक्षिपाम्युपनिक्षिपामि। युष्माभिः
कुलपुत्रा उद्ग्रहीतव्या[12] धारयितव्या वाचयितव्या पर्यवाप्तव्या देशयितव्या प्रकाशयित-

1) K. adds महासत्त्वां.
2) त्वा A. Ca. Cb. K. W. त्य.
3) In A. W. added च; from च till स्वा left out in B.
4) Conjectural for दक्षिणे हस्ते स्वा of the MSS.
5) ये Cb.
6) स्र Cb.
7) स left out in A.
8) वै B. Ca. K. वि the rest.
9) अपि left out in Cb.
10) Left out in B.
11) सर्वावं left out in B.
12) In Cb. only; उद्गृह्य A. B. Ca. K. W.

व्या सर्वसत्त्वानां च संश्रावयितव्या। अमात्सर्यो ऽहं कुलपुत्रा अपरिगृहीतचित्तो[1] विशारदो बुद्धज्ञानस्य दाता[2] तथागतज्ञानस्य[2] स्वयंभूज्ञानस्य दाता। महादानपतिरहं कुलपुत्रा युष्माभिरपि कुलपुत्रा ममैवानुशिक्षितव्यममत्सरिभिर्भूत्वेमं[3] तथागतज्ञानदर्शनं महोपायकौशल्यमागतानां[4] कुलपुत्राणां कुलदुहितॄणां चायं धर्मपर्यायः संश्रावयितव्यः। ये चाश्राद्धाः[5] सत्त्वास्ते ऽस्मिन्धर्मपर्याये[6] समादापयितव्याः। एवं युष्माभिः कुलपुत्रास्तथागतानां प्रतिकारः[7] कृतो भविष्यति॥ 5

एवमुक्तास्ते[8] बोधिसत्त्वा महासत्त्वा भगवता शाक्यमुनिना तथागतेनार्हता सम्यक्संबुद्धेन महता[9] प्रीतिप्रामोद्येन स्फुटा अभूवन्महच्च गौरवमुत्पाद्य येन भगवाञ्शाक्यमुनिस्तथागतो ऽर्हन्सम्यक्संबुद्धस्तेनावनतकायाः प्रणतकायाः संनतकायाः[10] शिरांस्यवना-

---

1) अप्रगृही A. B. Ca. परिगृ Cb. K. अनिगृ W.

2) Left out in Cb.

3) ममैत्रामनुशिक्षितव्यः॥ अमत्सरिभिर्भूत्वा इमं A.
ममैवानुसिक्षितव्य अमत्सारिभिभूतवं B.
ममैवानुसिक्षितव्यम। ऽमत्सारिभिर्भूत्वेमं Ca.
शिक्षितव्या। अमत्सारिभूतेमत्तथा Cb.
ममैतामनुशिक्षितव्यः अमत्सारिभिभूत्वा इमं W.
ममैवानुशिक्षितव्यममत्सेरिभि — त्वेमं O. इमं Prāk. for इदं.

4) B. Cb. add च. O. adds श्राद्धानां.

5) ये च अश्रद्धाम् A. W. ये च सद्धाः Cb. Ca ये च अश्रद्धाः कुलपुत्रा कुलदुहितरश्च ये च श्राद्धाः B. ये च अश्रद्धाः कुलपुत्र कुलदुहितरश्च। ये चाश्रद्धाः K. अश्राद्धाश्च सत्वा इहाग्रधर्मेषु O.

6) तस्मि A. W.

7) प्रती Ca. K. कृतो left out in O.

8) क्ते A. W. क्त B. क्ता Ca. क्ताम् Cb K. क्ताः समानास्ते O.

9) महती K.; B. Cb. K. add वीर्य.

10) Ca. adds प्र.

न्याञ्जलिं[1] [2]प्रगृह्य सर्वे एकस्वर[3]निर्घोषेण भगवन्तं शाक्यमुनिं तथागतमर्हन्तं सम्यक्संबुद्धमेतदूचुः । तथा भगवन्[4]करिष्यामो यथा[5] तथागत[6] आज्ञापयति । सर्वेषां च तथागतानामाज्ञां करिष्यामः[7] परिपूरयिष्यामः[8] । अल्पोत्सुको भगवान्भवतु यथासुखविहारी । द्वैतीयकमपि त्रैतीयकमपि स[9] सर्वावान्बोधिसत्वगण एकस्वर[10]निर्घोषेणैवं भाषते स्म । अल्पोत्सुको भगवान्भवतु यथासुखविहारी । तथा भगवन्करिष्यामो यथा तथागत आज्ञापयति । सर्वेषां च तथागतानामाज्ञां[11] परिपूरयिष्यामः ॥

अथ खलु भगवाञ्शाक्यमुनिस्तथागतोऽर्हन्सम्यक्संबुद्धः सर्वांस्तांस्तथागतानर्हतः सम्यक्संबुद्धानन्येभ्यो[12] लोकधातुभ्यः समागतान्विसर्जयति स्म[13] यथासुखविहारं[14] च तेषां तथागतानामारोचयति स्म । यथासुखं तथागता विहरन्त्वर्हन्तः[15] सम्यक्संबुद्धा इति । तं च तस्य भगवतः प्रभूतरत्नस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य रत्नस्तूपं यथाभूमौ स्थापयामास तस्यापि तथागतस्यार्हतः सम्यक्संबुद्धस्य यथासुखविहार[16]मारोचयामास[17] ॥

1) नामयित्वा O. नम्या the rest.
2) लौं A. B. Ca. दशनखाञ्जलौं O. वनामाञ्जली: K.
3) B. adds कृत; K. reads एकं स्वरनिर्घोषेण कृत.
4) तथागतवन्क Cb. तथा तथागत क K.
5) A. B. W. add भगवां.
6) Left out in B.
7) Left out in Cb.
8) Left out in O.
9) Omitted in B. K.
10) B. K. add कृत.
11) आज्ञप्तिं O.
12) द्धानित्यन्ये A. W.
13) विसर्जयति स्म left out in A. W. विसर्जयामास O.
14) रतां A. W. रत्ते B. रश्च Ca. रं Cb रश्च K. रे O.
15) रंत्य A. W. रंत Cb.
16) कार O. कारता the rest.
17) सेति B. Ca. Cb. K. स इति A. W.

इदमवोचद्भगवानात्तमनास्ते चाप्रमेया[1] असंख्येयास्तथागता अर्हन्तः सम्यक्संबुद्धा अन्यलोकधात्वागता[2] रत्नवृक्षमूलेषु[3] सिंहासनोपविष्टाः प्रभूतरत्नश्च तथागतोऽर्हन्सम्यक्संबुद्धः स च सर्वावान्बोधिसत्त्वगणास्ते च विशिष्टचारित्रप्रमुखा अप्रमेया असंख्येया[4] बोधिसत्त्वा महासत्त्वा ये[5] पृथिवीविवरेभ्योऽभ्युद्गतास्ते च महाश्रावकाः ताश्च चतस्रः पर्षदः[6] सदेवमानुषासुरगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति[7] ॥ 5

॥[8] इति श्रीसद्धर्मपुण्डरीके धर्मपर्याये ऽनुपरीन्दनापरिवर्तो नाम सप्तविंशतिमः समाप्तः ॥

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतः ।

ह्यवदत्तेषां च यो निरोध एवं वादि महाश्रमणः ॥

1) चाप्रमेय left out in A. W. असंख्येय is put in before अप्रमेया in Ca K.

2) अन्यान्य B. अन्ये K.

3) षु in Ca. K. only.

4) Left out in A. W.

5) K. adds च; Ca. reads एत for ये; B. reads महासत्त्वास्ते चाप्रमेयासंख्येया बोधिसत्त्वा ये ते.

6) A. सा च सर्वावती च चतुस्पर्षत्

B. Ca. ताश्चतस्रः पर्षदः

Cb. ताश्चतस्रः परिषदः

K. सा च सर्वावती पर्षत्

W. स च चतुष्पर्षत्

7) O. adds the following: अथ खलु भगवान्यथासुखविहारं तेषां तथागतानामारोचयित्वा आयुष्मन्तमानन्दमामन्त्रयामास । उद्गृह्ण त्वमानन्देमं धर्मपर्यायं धारय वाचय देशय पर्याप्नुहि परेषां च विस्तरेण संप्रकाशय एवमुक्त्वा आयुष्मानानन्दो भगवन्तमेतदवोचत् उद्गृहीतो मे भगवन्नयं धर्मपर्यायो — विस्मरामि को नामायं भगवन्धर्मपर्यायः कथं चैनं नाम धार — — — (भ) गवानाह तस्मात्तर्हि त्वमानन्देमं धर्मपर्याय महानिर्देशमपीति नाम — — — — — — ह । सद्धर्मपुण्डरीकं इति नाम धारयाहि महावैपुल्यं बोधिसत्त्व — —.

8) From here the text is given from B., but इति श्री is put in here for आर्य in accordance with the former chapters, and ऽनुपरीन्दनापरिवर्तो is taken from Cb., adding नाम after it. The various readings will be seen following:

A. अङ्गारकर्षगादिवा आक्रम्य क्षुरसंस्तरं । गंतव्यं कुलपुत्रेण यत्र सूत्रमिदं भवेत् ॥

B.

Ca.

Cb.

K.

W. अङ्गारकर्षगादिवा आक्रम्य क्षुरसंस्तरं । गंतव्यं कुलपुत्रेण यत्र सूत्रमिदं भवेत् ॥

A. धर्मरत्न विलिख्योदं यत्पूण्यसमुपार्जितं । अस्यैव धर्मरत्नस्य जगत्तेनास्तु भाजनमिति ॥

B.

Ca.

Cb.

K.

W. धर्मरत्नं विलिख्येदं यत्पुण्यसमुपार्जितं । अस्यैव धर्मरत्नस्य जगत्तेनास्तु भाजनं ॥

A. समाप्तं सद्धर्मपुंडरीकं धर्मपर्यायं सूत्रांतं

B. आर्यसद्धर्मपुंडरीके धर्मपर्याये सप्तविंशतिमः परिवर्त्तः

Ca. सद्धर्मपुंडरीको धर्मपर्यायः सूत्रांतो

Cb. सद्धर्मपुंडरीको धर्मपर्याये अनुपरीन्दनापरिवर्त्तो अष्टाविंशतिमः ॥ ॥

K. आर्यसद्धर्मपुण्डरीके धर्मपर्याये परिवर्त्तो नाम सप्तविंशतिमः

W. समाप्तं सद्धर्मपुंडरीकं धर्मपर्यायं सूत्रांतं

A. महावैपुल्यं बोधिसत्त्वाववादं सर्वबुद्ध-

B. समाप्तः ॥ ॥

Ca. म

Cb.

K. समाप्तः सद्धर्मपुण्डरीको धर्मपर्यायः सूत्रान्तो वैपुल्यो बोधिसत्त्वाववादः सर्वबुद्ध-

W. महावैपुल्यं बोधिसत्त्वाववादं सर्वबुद्ध-

A. परिग्रहं सर्वबुद्धरहस्यं सर्वबुद्धनिगूढं सर्वबुद्धज्ञाति सर्वबुद्धगुह्यस्थानं सर्व-
B.
Ca. सर्व
Cb.
K. परिग्रहः सर्वबुद्धरहस्यं सर्वबुद्धनिगूढं सर्वबुद्धज्ञाति सर्वबुद्धगुह्यस्थानं सर्व
W. परिग्रहं सर्वबुद्धरहस्यं सर्वबुद्धनिगूढं सर्वबुद्धज्ञाति सर्वबुद्धगुह्यस्थानं सर्व

A. बुद्धबोधिमंडं सर्वबुद्धधर्मचक्रप्रवर्तनं सर्वबुद्धैकधर्मचक्रप्रवर्तनं सर्वबुद्धैकघन-
B.
Ca. बुद्धबोधिमंडः सर्वबुद्धधर्मचक्रप्रवर्तनं सर्वबुद्धैकघन-
Cb.
K. बोधिमण्डः सर्वबुद्धधर्मचक्रप्रवर्त्तनं सर्वबुद्धैकघन-
W. बुद्धबोधिमंडं सर्वबुद्धैकघन-

A. शरीरं सर्वोपायकौशल्यमेकयाननिर्देशं परमार्थनिर्हारनिर्देशमिति ॥ ॥
B.
Ca. मरीरं मर्होपायकौ र्देसः परमार्थनि
Cb.
K. शरीरं मर्होपायकौशल्य निर्देशः परमार्थ निर्देशश्चेति ॥ ॥
W. शरीरं सर्वपायकौशल्यमेकया निर्देशः परमार्थ निर्देशसिति ॥ ॥

A. तं ते ये सूत्रराज्ञं मुनिवररचितं बोधिमत्त्वानवादं सद्धर्मम्पुंडरीकं वरशिववृषदं
B. ये धर्मा हेतुप्रभवा हेतुन्तेषान्तथागतो ह्यवदत्तों निरोध एवं वादे महाश्रवण
Ca. सम्वत् ग्र ११४ ॥ ग्यसुकृ । ५ । ५८ ॥ गुह्यादन । श्रीलह्मी ॥ ॥ का-
मदेवस्य
Cb. सम्वत् ग्र ७ श्रय वैशाखंडलान्दादश्यां । परमभटारक श्रीपम्युस्तु कामदेवस्य
K. ये धर्मा हेतुप्रभवा हेतु तेषान्तथागतो । ह्येवदत्तेषा
W. येभ्यागता इह सुरासुरनागयज्ञागन्धर्वकिन्नरनरा श्रवणाय धर्मं रतन्तु ते

A. मोक्षमार्गैकलालं ॥ श्रुत्वा स्मृत्वा लिखित्वा शतगुणावदिता मानयन्त्यालयंति
B. देवधर्मायं प्रवरमहायानयायिना
Ca. विज्ञयराज्यलिखितमिति ॥ ० ॥ अनेन पुण्येन तु सर्वदर्शितामेव । प्येपिानिह्य

Cb. राष्ट्रे विमुद्धचंद्रांडनिर्म······एउपोरध्यानित्रामिन्यामानकराणिकाया
K.
W. जगदिदं जिनशासनं च धर्मं मुनीन्द्रकथितं च चरंतु नित्यम्। शीलतो यसमा
A. प्रासाभोग्यं समंतादपंगतकलुषाः मोक्षमंते प्रयांति ॥ गुणायमनिधिवर्षे सम्यगा-
B.
Ca. चद्राधविधि ज्ञराकुज्ञामितुताव्होर्मिसंज्ञलासेमुद्धेरयेम्भत्रषा गगज्जगत् ॥
Cb. संभारद्वयलवक्रामया सद्धर्मपुंडरीकपुस्तकामिदं वरेण्यं पुत्रनायकं लिखित्वा
K.
W. पूर्णा प्रज्ञावत्त समन्वितं मह्योदधिरिवागाथां विकरधं यथामुखं। जलं विमुञ्चतु
A. लाढगौरेप्युदुपातिपरिपूर्णे मूलभे सौम्य घस्रे ॥ व्यलिखदमृततनंदः सहृषां भो-
B.
Ca.[1] सं ७०३ म्राषाटकृष्णासप्रमिष्टत्रकून्कुत्त्च सद्धर्मपुंडरीका संपूर्णान सेने धुनका द्वाला-
Cb. प्रतिष्ठापितं भवातोति ॥ म्रनेन पुण्ये चच सर्वदर्शितामवाप्यनिजि······ मह्योत्सि-
K.
W. यथेप्सितं घनाप्ररोह्यतां सत्यमुपैति चक्षितौ ॥ प्रजाश्च धर्मेन नृपो भिरक्षितानु
A. ससंज्ञं पुरिकनकप्रणायां मित्रपूर्णाविपश्चो ॥ ॥
B.
Ca. चुकपा चाज्ञाचार्यरत्नम्रोसद्वागुरो ॥ म्रशास्त्रमद्वाया पुषयनशामसह्ला क्कामाक्-
Cb. संकुलात् समुद्धरेयं भवसागराज्जगत इति ॥ ० ॥
K.
W. चिरं च धर्मं सुगतस्य तिष्ठतु ॥ ॥
A.
B.
Ca. ल्पस्सुपमान ॥ म्रुभ ॥
Cb.
K.
W. म्रुभमस्तु सर्वदा ॥ ॥

1) The following is in the margin.

# Errata.

| Page | | line | | | read | |
|---|---|---|---|---|---|---|
| Page | 1 | line | 4 | आमु° | read | आयु° |
| „ | 8 | „ | 5 | मज्ञ° | „ | मज्ञु° |
| „ | 11 | „ | 14 | शूण्या° | „ | शून्या° |
| „ | 13 | „ | 8 | आर्युषं सर्सग | „ | आर्येषु संसर्ग |
| „ | 32 | „ | 13 | सखमा | „ | सुखमा |
| „ | 33 | „ | 2 | टुःख | „ | दुःख |
| „ | 39 | „ | 5 | °पुष्या° | „ | °पुष्मा° |
| „ | 48 | „ | 12 | पूर्यि | „ | पूरिय |
| „ | 57 | „ | 15 | कोके | „ | लोके |
| „ | 52 | „ | 16 | निर्वाणा° | „ | निर्वाणा° |
| „ | 60 | „ | 6 | दर्शानात् | „ | दर्शनात् |
| „ | 60 | „ | 12 | सत्वेपु | „ | सत्वेषु |
| „ | 63 | „ | 12 | °यिस्यन्ति | „ | °यिष्यन्ति |
| „ | 72 | „ | 3 | आढ्यो | „ | आख्यो |

| Page | | line | | | | |
|---|---|---|---|---|---|---|
| Page | 72 | line | 12 | अस्मिन्नेव | read | अस्मिन्नेत्र |
| „ | 73 | „ | 3 | नात्रस° | „ | नोत्रस° |
| „ | 73 | „ | 9 | सत्रास° | „ | संत्रास° |
| „ | 75 | „ | 3 | संक्रम्गुवं | „ | संक्रम्यैवं |
| „ | 82 | „ | 10 | कोश° | „ | कौश° |
| „ | 115 | „ | 1 | बाकृर्धा | „ | वाकि्र्धा |
| „ | 124 | „ | 4 | धार्गु° | „ | धार्य° |
| „ | 132 | „ | 13 | निर्वाणुमंते ह | „ | निर्वाणमुत है |
| „ | 137 | „ | 1 | शून्यतान° | „ | शून्यतानि° |
| „ | 146 | „ | 11 | अन्तर्ककल्प | „ | अन्तर्कल्प |
| „ | 148 | „ | 15 | द्वादृश | „ | द्वादश |
| „ | 169 | „ | 14 | कथंचिलोके | „ | कथंचि लोके |
| „ | 174 | „ | 12 | काटो | „ | कोटो |
| „ | 175 | „ | 15 | °द्यष्ये° | „ | °द्योष्ये° |
| „ | 178 | „ | 10 | °वर्म° | „ | °वरं अ° |
| „ | 190 | „ | 9 | गुणाच्या | „ | गुणाढ्या |
| „ | 198 | „ | 1 | यूपं | „ | यूथं |
| „ | 215 | „ | 7 | भवेद्यह° | „ | भवेद्यद्ध° |
| „ | 216 | „ | 8 | संम्यपस° | „ | सम्यक्स° |
| „ | 218 | „ | 8 | चेतः प° | „ | चेतःप° |
| „ | 220 | „ | 16 | शाङ्कव° | „ | शाङ्कल° |
| „ | 224 | „ | 8 | कोच° | „ | केचि° |
| „ | 225 | „ | 11 | °तरा वा पुरुषो | „ | °तरो वा पुरुषः |
| „ | 230 | „ | 8 | आध्यात्यि° | „ | आध्यात्मि° |

| Page | line | | | read |
|---|---|---|---|---|
| Page 247 | line 7 | नेत्रा° | read | नेत्रा° |
| » 249 | » 12 | शाक्य° | » | शाक्य° |
| » 261 | » 6 | संरग्नीं | » | संरक्षनीं |
| » 267 | » 2 | पारिवारी | » | परिवारी |
| » 269 | » 4 | षड्मो° | » | षड्वो° |
| » 276 | » 5 | मांसिकान्न (6) | » | मांसिकान्न |
| » 276 | » 6 | (7), (8), etc | » | (6), (7), etc. |
| » 283 | » 2 | श्रावाणा° | » | श्रावणा° |
| » 291 | » 4 | तेनैव | » | तेनैव |
| » 291 | » 5 | गुल्मं | » | गुल्मं |
| » 311 | » 15 | भगवन्न° | » | भगवान° |
| » 312 | » 15 | संवर्तती° | » | संवर्तनी° |
| » 317 | » 1 | शक्नं | » | शक्यं |
| » 318 | » 6 | सत्त्वानां | » | सत्त्वानां |
| » 320 | » 3 | दोर्व° | » | दीर्घ° |
| » 320 | » 6 | मेधवी | » | मेधावी |
| » 325 | » 1 | क्रोडा रती | » | क्रीडारती |
| » 336 | » 9 | शाक्न° | » | शाक्य° |
| » 345 | » 12 | सत्त्वस्या° | » | सत्त्वस्या° |
| » 363 | » 10 | गवयश्च | » | गवयाश्च |
| » 363 | » 11 | गुर्विणा° | » | गुर्विणी° |
| » 364 | » 10 | स्थिता | » | स्थितो |
| » 371 | » 8 | भवेत | » | भवेत् |
| » 372 | » 1 | समन्व° | » | समन्वा° |

| Page 372 | line 4 | सा ऽस्य | read | सो ऽस्य |
|---|---|---|---|---|
| „ 377 | „ 3 | तथोगतो | „ | तथागतो |
| „ 401 | „ 1 | संगात्या | „ | संगोत्या |
| „ 410 | „ 12 | °ननप° | „ | °ननुप° |
| „ 420 | „ 1 | स्वध्या° | „ | स्वाध्या° |
| „ 427 | „ 5 | बुद्धतेचा° | „ | बुद्धत्तेत्रा° |
| „ 428 | „ 9 | देदोप्समानो | „ | देदीप्यमानो |



# INDEX.

# Contents.





# SANSKRIT — WÖRTERBUCH

bearbeitet von

**Otto Böhtlingk**

und

**Rudolph Roth**

St. Petersburg 1855-75

SEVEN VOLUMES

Reprinted together with

NACHTRÄGE von **Richard Schmidt, Leipzig 1928**

Also published in three volumes:

**SANSKRIT—WÖRTERBUCH**

**in Kürzerer Fassung**

von

OTTO BÖHTLINGK

St. Petersburg 1879-89

*Hailed as "the greatest achievement of Indological scholarship in 19th-century Europe" (Basham), the Sanskrit-Wörterbuch by Otto Bohtlingk and Rudolph von Roth remains unsurpassed even more than a hundred years after its first publication, from 1852 to 1875, under the auspices of the Russian Imperial Academy of Sciences Indeed, all the Sanskrit dictionaries published subsequently draw heavily from this "splendid monument of German diligence" (Winternitz).*

*Published by*

**MOTILAL BANARSIDASS**

**PUBLISHERS PVT. LTD.**

Delhi

# BUDDHIST TRADITION SERIES

## Edited by Alex Waymen
## (ISBN: 81-208-0287-x)

Vol. 1 **Indian Buddhism: A Survey with Bibliographical Notes**—by Hajime Nakamura
(ISBN: 81-208-0272-1)

2 **Nagarjuniana: Studies in the Writings and Philosophy of Nagarjuna**—by Chr. Lindtner
(ISBN: 81-208-0288-8) (C)
(ISBN: 81-208-0395-7) (P)

3 **Chinese Monks in India**—by Latika Lahiri
(ISBN: 81-208-0062-1)

4 **Buddhism in Central Asia**—by B.N. Puri
(ISBN: 81-208-0372-8)

5 **Dharmakirti's Theory of Hetu-Centricity of Anu—mana**—by Mangala R. Chinchore
(ISBN: 81-208-0623-9)

6 **The Legend of King Asoka: A Study and Translation of the Asokavadana**—by John S. Strong
(ISBN. 81-208-0616-6)

7 **Buddhist Insight**—by George R Elder
(ISBN: 81-208-0675-1)

8 **Buddhism Transformed: Religious Change in Sri Lanka**--by Richard Gombrich and Gananath Obeyesekere
(ISBN: 81-208-0702-2)

9 **The Buddhist Tantras: Light on Indo-Tibetan Esotericism**—by Alex Wayman
(ISBN: 81-208-0699-9)

10 **The Lion's Roar of Queen Srimala**—by Alex Wayman and Hideko Wayman
(ISBN: 81-208-0731-6)

11 **The Buddha Nature: A Study of the Tathagatagarbha and Alayavijnana**—by Brian E. Brown
(ISBN:81-208-0631-x)

12 **Evolution of Stupas in Burma**—by Sujata Soni
(ISBN: 81-208-0626-3)

13 **Buddhist Parables**—by Eugene Watson Burlingame
(ISBN: 81-208-0738-3)

14 **The Debate of King Milinda**—by Bhikkhu Pesala
(ISBN: 81-208-0893-2)

15 **The Chinese Madhyama Agama and the Pali Majjhima Nikaya**—by Bhiksu Thich Minh Chau
(ISBN: 81-208-0794-4)

16 **Sudden and Gradual**—by Peter Gregory
(ISBN: 81-208-0819-3) (Shortly)

17 **Yoga of the Guhya Samajatantra: The Arcane Lore of the Forty Verses**—by Alex Wayman
(ISBN 81-208-0872-x)

VOLUMES IN PROGRESS

•

**The Anagata Vamsa Desana**—Ed *John C Holt* Tr. by *Udaya Meddegama*

**The Buddhist Art of Nagarjunakonda**—*Elisabeth Rosen Stone*

**Chinnamasta** : The Aweful Buddhist and Hindu Tantric Goddess—*Elisabeth Anne Benard*

**The Enlightenment of Vairocana**—*Alex Wayman*

**A History of Indian Buddhism** —*Akira Hirakawa*, Tr by *Paul Grover*

**Introduction to the Buddhist Tantric Systems** (MKHAS GRUB RJE)—*Ferdinand D Lessing* and *Alex Wayman*, Trs

**Nagarjuna's Refutation of Logic: Vadalyaprakarana** : Edition of the Tibetan Text—*Fernando Tola* & *Carmen Dragonetti*

**On Voidness**—*Fernando Tola* & *Carmen Dragonetti*

**The Salistamba Sutra**—*N. Ross Reat*

**The Skill in Means Sutra**—*Mark Tatz*

**Untying the Knots in Buddhism** (Selected Essays)—*Alex Wayman*